## व्याप्तानां सङ्केतानां परिचयः

| | | |
|---|---|---|
| | अमर० | अमरकोषे |
| | अमोघवृ०<br>अमोघ० | अमोघवृत्तिः शाकटायनीया |
| | अष्ट० | अष्टमः |
| | आख्या० | आख्याते |
| | काशिका० | काशिका पाणिनीयसूत्रवृत्तिः जयादित्य-वामनविरचिता |
| | कृ० | कृदन्ते |
| | च० | चतुर्थः |
| | तृ०<br>तृती० | तृतीये |
| | द्विती० | द्वितीये |
| | नव० | नवमः |
| | ना० | नाम्नि |
| | पञ्च० | पञ्चमः |
| | पा० | पादः पादे वा |
| (टिप्पणे) | पा० | पाटनपुस्तिका |
| ,, | पू० | पूनापुस्तिका |
| | प्र०<br>प्रथ० | प्रथमः |
| | वि० पु० | विष्णुपुराणे |
| | वैश्यव० | वैश्यवर्गे |
| | शाक० | शाकटायनीयम् |
| | श्लो० | श्लोकः |
| | सप्त० | सप्तमः |
| | सू० | सूत्रम् |

---

॥ ॐ अर्हम् ॥

आचार्यश्रीमलयगिरिविरचितं

# शब्दानुशासनम् ।

॥ नमो वीतरागाय ॥

## प्रथमः सन्धिः

**श्रेयःपदस्य सिद्ध्यर्थं येन कर्मादिगोचरा ।**
**विभक्तिर्दर्शिता तस्मै नमः सर्वार्थसंविदे ॥ १ ॥**

'येन' भगवता परमार्हन्त्यमहिम्ना[1] विराजमानेन 'श्रेयःपदस्य' साधुप्रकृति-विभक्तिसमुदायस्य निःश्रेयसपदस्य च 'सिद्धये' 'कर्मादिगोचरा' कर्म-करणादिकारक-समुदायविषया कर्म-आत्मविषया च 'विभक्तिः' स्यादि-तिबादिरूपा पृथक्तालक्षणा च भव्यजनानुग्रहाय 'दर्शिता' 'तस्मै सर्वार्थसंविदे' सकलद्रव्य-पर्यायप्रपञ्चसाक्षात्कारिणे 'नमः' कुर्वे इति उपस्कारः ।

[2]एवं कृतमङ्गलरक्षाविधानः परिपूर्णम् अल्पग्रन्थम् लघूपायम् आचार्यो **मलयगिरिः** शब्दानुशासनम् आरभते ।

निःश्रेयसार्थिनो हि प्रेक्षापूर्वकारिणः, [3]तन्मार्गानुष्ठानं च शब्दार्थज्ञानपूर्वकम् "आगमतः सर्वज्ञः" [ ] इति वचनात् । शब्दार्थज्ञानं च शब्दानु-शासनात् इति ॥

### सिद्धिः अनेकान्तात् । १ ।

एकान्तप्रतिक्षेपेण कथंचित्तया वस्तुस्वरूपाभ्युपगमः अनेकान्तः । ततः शब्दानां सिद्धिर्वेदितव्या । न खलु अनेकान्तमन्तरेण शब्दाः सिद्धिमश्नुवते, तथाप्रमाणेन अग्रह-णात् '[4]अय्' आदिविकारानुपपत्तेश्च । केवलनित्या-ऽनित्यपक्षे तदसंभवात् ॥ १ ॥

---

१. "परमार्हन्त्यमहिम्ना विराजमा"– इत्यादि–अमोघ० ।

२. "एवं कृतमङ्गलरक्षाविधानः परिपूर्णम् अल्पग्रन्थम् लघूपायम्" अमोघ० ।

३. "शब्दार्थज्ञानपूर्वकं च सन्मार्गानुष्ठानम्" अमोघ० ।

४. "एचः स्वरे अय्-आय्-अव्-आव्" [ तृ० सं० १ ] इत्यनेन 'अय्' आदिविकारानुपपत्तिः ।

**लोकाद् वर्णक्रमः । २ ।**

वर्णानाम् अकारादीनां क्रमः पाठपरिपाटिविशेषरूपः लोकाद् वेदितव्यः ।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः । क ख ग घ ङ । च छ ज झ ञ । ट ठ ड ढ ण । त थ द ध न । प फ ब भ म । य र ल व । श ष स ह ॥ २ ॥

**प्राग् बिन्दोः स्वराः । ३ ।**

बिन्दुमात्रात् (प्राग् ये) वर्णाः ते स्वरा भवन्ति ।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । स्वरप्रदेशाः—"एचः स्वरे अय्-आय्-अव्-आव्" [ तृ० सन्धिः १ ] इत्येवमादयः ॥ ३ ॥

**एक-द्वि-त्रिमात्राः ह्रस्व-दीर्घ-प्लुताः । ४ ।**

मात्रा निमेषकालः । बिन्दोः प्राग् वर्णा एक-द्वि-त्र्युच्चारणमात्रा यथासंख्यं ह्रस्व-दीर्घ-प्लुतसंज्ञा भवन्ति ।

एकमात्रो ह्रस्वः — अ इ उ ऋ ऌ । द्विमात्रो दीर्घः — आ ई ऊ ॠ ॡ ए ऐ ओ औ । त्रिमात्रः प्लुतः — आ ३ ई ३ ऊ ३ ॠ ३ ॡ ३ ए ३ ऐ ३ ओ ३ औ ३ ॥ ४ ॥

**अनवर्णा नामी । ५ ।**

बिन्दोः प्राग् वर्णाः अवर्णवर्जा नामिसंज्ञा भवन्ति ।

इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । नामिप्रदेशाः- - "कु-नामि-यञः सेः षिः" [ ना० द्वितो० पा० २४ ] इत्येवमादयः ॥ ५ ॥

**इक् एतः । ६ ।**

एकारा(त्) प्राग् वर्णा अवर्णवर्जा इक्संज्ञा भवन्ति ।

इ ई उ ऊ ऋ ॠ ऌ ॡ । इक्प्रदेशाः — "इकः अस्वे यञ्" [ तृ० सन्धिः २ ] इत्येवमादयः ॥ ६ ॥

**समानाः । ७ ।**

'अनवर्णाः' इति निवृत्तम् पृथग्वचनात् । एकारात् प्राग् वर्णाः समानसंज्ञा भवन्ति ।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ । समानप्रदेशाः — "ऋ-ऌतोः समानस्य" [ तृ० सन्धिः ४ ] इत्येवमादयः ॥ ७ ॥

**ऋतः अण् । ८ ।**

ऋतः प्राग् वर्णा अण्संज्ञा भवन्ति ।

अ आ इ ई उ ऊ। अण्प्रदेशाः—"अणः अमः" [ ना० तृती० पा० ८ ] इत्येवमादयः ॥ ८ ॥

## एदादिः एच् । ९ ।

बिन्दोः प्राग् एकारादिः एच्संज्ञो भवति ।

ए ऐ ओ औ। एच्प्रदेशाः—"एच्-ऊचोः ऐत्-औत्" [ तृ० सन्धिः ९ ] इत्येवमादयः ॥ ९ ॥

## ए-ओ एङ् । १० ।

एकार-ओकारौ एङ्संज्ञौ भवतः । एङ्प्रदेशाः — "एङि एङ्" [ तृ० सन्धिः २० ] इत्येवमादयः ॥ १० ॥

## अं-अः अनुस्वार-विसर्गौ । ११ ।

अकारौ उच्चारणार्थौ । अं इति बिन्दुमात्रो वर्णः । अः इति उपरि-अधोभूतबिन्दु-द्वयमात्रः । एतौ यथासंख्यम् अनुस्वार-विसर्गसंज्ञौ भवतः । अनुस्वार-विसर्गप्रदेशाः— "शिटि हे च अनुस्वारः" [ च० सन्धिः ११ ] "विसर्गः" [ पञ्च० सन्धिः ४२ ] इत्येवमादयः ॥ ११ ॥

## कादिः व्यञ्जनम् । १२ ।

ककारादिर्हकारपर्यन्तो वर्णो व्यञ्जनसंज्ञो भवति ।

क ख ग घ ङ । च छ ज झ ञ । ट ठ ड ढ ण । त थ द ध न । प फ ब भ म । य र ल व । श ष स ह । व्यञ्जनप्रदेशाः—"म-मो व्यञ्जने तौ" [ च० सन्धिः १२ ] इत्येवमादयः ॥ १२ ॥

## मान्ताः पञ्च पञ्च वर्गः । १३ ।

ककारादयो मकारपर्यवसाना वर्णाः पञ्च पञ्च भूत्वा वर्गसंज्ञा भवन्ति ।

क ख ग घ ङ । च छ ज झ ञ । ट ठ ड ढ ण । त थ द ध न । प फ ब भ म । वर्गप्रदेशाः—"यञो वर्ग्यः [ च० सन्धिः २३ ] इत्येवमादयः ॥ १३ ॥

## प्रथम-द्वितीयाः श-ष-साश्च अघोषाः । १४ ।

वर्गाणां प्रथम-द्वितीया वर्णाः श-ष-साश्च अघोषसंज्ञा भवन्ति ।

क ख । च छ । ट ठ । त थ । प फ । श ष स । अघोषप्रदेशाः—"अघोषे प्रथमः अशिटः [ पञ्च० सन्धिः ८ ] इत्येवमादयः ॥ १४ ]

## अन्यो घोषवान् । १५ ।

प्रथम-द्वितीय-श-ष-सेभ्यः अन्यः गकारादिर्वर्णो घोषवत्-संज्ञो भवति ।

ग घ ङ । ज झ ञ । ड ढ ण । द ध न । ब भ म । य र ल व । ह । घोषवत्प्रदेशाः—"घोषवति" [ ना० प्रथ० पादः ४ ] इत्येवमादयः ॥ १५ ॥

## अयञ्-पञ्चमो धुट् । १६ ।

यञ्-पञ्चमवर्जितः ककारादिर्वर्णो धुट्संज्ञो भवति ।

क ख ग घ । च छ ज झ । ट ठ ड ढ । त थ द ध । प फ ब भ । श ष स । ह । धुट्प्रदेशाः—"म्नां धुटि अपदान्ते" [ च० सन्धिः १० ] इत्येवमादयः ॥ १६ ॥

## य-र-ल-वा यञ् । १७ ।

एते यञ्संज्ञा भवन्ति । यञ्प्रदेशाः—"ततो यञ्" [ च० सन्धिः २४ ] इत्येवमादयः ॥ १७ ॥

## अं-अः-ᳵक-ᳶप-श-ष-साः शिट् । १८ ।

एते वर्णाः शिट्संज्ञा भवन्ति । शिट्प्रदेशाः—"ताभ्यां शिट्" [ च० सन्धिः २६ ] इत्येवमादयः ॥ १८ ॥

## आसत्त्या इष्टसिद्धिः । १९ ।

इह इष्ट-अनिष्टकार्यप्रसङ्गे स्थान-गुण-प्रमाणादीनाम् आसत्त्या इष्टस्यैव कार्यस्य सिद्धिर्वेदितव्या ।

तत्र स्थानासत्त्या दीर्घः—लोकाग्रे । मुनीन्द्रः ॥ गुणेन—"क्तेऽनिटः च-जः कुः घिति" [ आख्या० अष्ट० पा० २६ ] पाकः, त्यागः । चकारस्य[1] अघोषस्य अल्पप्राणस्य कुः-तादृश एव ककारः । जकारस्य घोषवतः अल्पप्राणस्य[2] निरनुनासिकस्य तादृश एव गकारः ॥ प्रमाणेन—"अवर्णस्य अदसः दः मः अस्माद् वर्णो गुवर्णश्च अपि-नि असन्" [ ना० द्विती० पा० ८ ] अमुम् । अमू । मात्रिकस्य मात्रिकः, द्विमात्रस्य द्विमात्रः ॥ अर्थेन[3]—"पुंवत् कर्मधारये" [ ना० नव० पा० ८७ ] दारदवृन्दारिका । अत्र 'दरत्'—शब्दस्य तदर्थो दारदभावः ॥ वर्गाणां[4] प्रथम-तृतीय-पञ्चमा य-र-ल-वाश्च अल्पप्राणाः अन्ये महाप्राणाः इति पूर्वेषां स्मृतिः ॥ १९ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्वृत्तौ प्रथमः सन्धिः समाप्तः ॥

---

१ "चकारस्य अघोषस्य अल्पप्राणस्य" । "जकारस्य घोषवतः अल्पप्राणस्य"—अमोघ० ।

२. अल्पप्रमाणस्य पा० ।

३. वृत्तौ "स्थान-गुण-प्रमाणादीनाम् आसत्त्या" इत्यत्र 'आदि' शब्दनिर्देशेन 'अर्थेन' इत्यादिकम् संग्राह्यम् तस्य च उदाहरणम् इदम् ।

४. अस्य उल्लेखस्य वृत्तिस्थित 'गुण' इति पदेन सम्बन्धः तत्र अल्पप्राणस्य अल्पप्राणविधेर्निदर्शनम् ।

## द्वितीयः सन्धिः

**स्वः स्थान-स्पृष्टताद्यैक्ये । १ ।**

स्थानं कण्ठादि—यत्र पुद्गलस्कन्धस्य वर्णभावापत्तिः तत्—पुनरष्टधा । तथा चाहुः—

अष्टौ स्थानानि वर्णानाम्—उरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥

स्पृष्टतादि—स्पृष्टता ईषत्स्पृष्टता विवृतता ईषद्विवृतता । तयोरभेदे वर्णो वर्णस्य स्वः परिभाष्यते ।

अवर्ण-कवर्ग-ह-विसर्जनीय-जिह्वामूलीया कण्ठ्याः । "कवर्गः जिह्वामूलः, ह-विसर्जनीयौ उरस्यौ, जिह्वामूलीयः जिह्व्यः, सर्वमुखस्थानमवर्णम्" [ ] इति एके । इवर्ण ए-ऐ-चवर्ग य-शास्तालव्याः । "ए-ऐ कण्ठतालव्यौ [ ] एकेषाम् । उवर्ण-ओ-औ-पवर्ग-उपध्मानीया ओष्ठ्याः । "ओ-औ कण्ठोष्ठ्यौ" [ ] एकेषाम् । ऋवर्ण-टवर्ग-र-षा मूर्धन्याः । "रेफो दन्तमूलः" [ ] एकेषाम् । लृवर्ण-तवर्ग-ल-सा दन्त्याः । नासिक्यः अनुस्वारः । "कण्ठनासिक्यः" [ ] एकेषाम् । वः दन्त्योष्ठ्यः । "सृक्वस्थानः" [ ] एकेषाम् ।

स्पृष्टता वर्ग्याणाम् । ईषत्स्पृष्टता य-र ल-वानाम्, विवृतता श-ष-स-हानाम् । ए-ओ विवृततरौ, ताभ्याम् ऐ-औ, ताभ्याम् अवर्णः ।

अअअ इति अकारः उदात्तः अनुदात्तः स्वरितश्च । प्रत्येकं च सानुनासिकः निरनुनासिकश्च इति षट् । एवं दीर्घ-प्लुतौ इति अष्टादश वर्णभेदाः कण्ठस्थानाः विवृतकरणाः परस्परस्य स्वे । एवम् इवर्णास्तावन्तस्तालव्याः विवृतकरणाः परस्परस्य स्वे । उवर्णास्तावन्तः ओष्ठ्याः विवृतकरणाः परस्परस्य स्वे । ऋवर्णास्तावन्तो मूर्धन्याः विवृतकरणाः परस्परस्य स्वे । लृवर्णास्तावन्तो दन्त्याः विवृतकरणाः परस्परस्य स्वे । एचां ह्रस्वाभावात् प्रत्येकं द्वादश भेदाः । तत्र एकारास्तालव्याः विवृततराः परस्परस्य स्वे । ऐकारास्तालव्याः अतिविवृततराः परस्परस्य स्वे । ओकारा ओष्ठ्याः विवृततरा परस्परस्य स्वे । औकाराः ओष्ठ्याः अतिविवृततराः परस्परस्य स्वे ।

य-व-लानाम् अनुनासिकः निरनुनासिकश्च इति प्रत्येकं द्वौ भेदौ परस्परस्य स्वौ । वर्ग्याः स्ववर्ग्यैः सह परस्परस्य स्वे । रेफ-श-ष-स-हानां तु स्वे न सन्ति ॥ १ ॥

**धातु-विभक्तिवर्जम् अर्थवद् नाम । २ ।**

धातु-विभक्तिवर्जम् अर्थवत् शब्दरूपं नामसंज्ञं भवति ।

वृक्षः । कुण्डम् । कुमारी । धातु-विभक्तिवर्जमिति किम् ? अहन् । वृक्षान् । अर्थवद् इति किम् ? वृक्षाद्यवयवानां व् ऋ क् ष् अ इत्येवमादीनां नामसंज्ञा मा भूत् ॥ २ ॥

## 'तिव्'आदिर्विभक्तिः । ३ ।

'तिव्' आदिः 'स्यामहि' पर्यन्तो विभक्तिसंज्ञो भवति । विभक्तिप्रदेशाः— "विभक्त्यन्तं पदम्" [ द्वि० सन्धिः ८ ] इत्येवमादयः ।

[1]सि औ जस् । अम् औ शस् । टा भ्यां भिस् । ङे भ्याम् भ्यम् । ङसि भ्याम् भ्यस् । ङस् ओस् आम् । ङि ओम् सुप् ।

इमानि वचनानि विभक्तिसंज्ञानि भवन्ति ॥ ३ ॥

## पञ्च आदौ घुट् । ४ ।

स्यादीनामादौ पञ्च वचनानि घुट्संज्ञानि भवन्ति ।

सि औ जस् । अम् औ । घुट्प्रदेशाः—"घुटि" [ ना० तृ० पादः १२ ] इत्येवमादयः ॥ ४ ॥

## नपि जस्-शसौ । ५ ।

नपुंसकलिङ्गे जस्-शसौ घुट्संज्ञौ भवतः ।

वारीणि । वारीणि । जस्-शसाविति किम् ? वारिणी । जसः पूर्वेणैव सिद्धत्वात् तदुपादानं नपुंसके 'जस्' एव 'घुट्' इति नियमार्थम् ॥ ५ ॥

## त्रयी त्रयी प्रथमादिः । ६ ।

स्यादीनां वचनानां त्रयी त्रयी प्रथमादिसंज्ञा भवति ।

सि औ जस् प्रथमा । अम् औ शस् द्वितीया । टा भ्याम् भिस् तृतीया । ङे भ्याम् भ्यम् चतुर्थी । ङसि भ्याम् भ्यम् पञ्चमी । ङस् ओस् आम् षष्ठी । ङि ओम् सुप् सप्तमी । प्रथमादिप्रदेशाः—"नाम्नः प्रथमा एक-द्वि-बहौ" [ ना० सप्त० पादः २ ] इत्येवमादयः ॥ ६ ॥

## सविशेषणम् आख्यातं वाक्यम् । ७ ।

तिबादिविभक्त्यन्तं पदम् आख्यातम्-इति रूढिः । साक्षात् पारम्पर्येण वा प्रयुज्य-

---

१. अनेन उल्लेखेन अनुमीयते यत् मूलसूत्रे 'सि-तिव्' आदिर्विभक्तिः' इत्येव शब्दरचना संभवेत् । वृत्तौ अपि 'सि' आदिः 'सुप्' पर्यन्तः तिव् आदिः 'स्यामहि' पर्यन्तश्च विभक्तिसंज्ञो भवति' इत्येवं शब्दयोजनया भवितव्यम् । परंतु लिपिकारप्रमादवशात् ईदृशी शब्दरचना नष्टा इति प्रतिभाति ।

मानेन अप्रयुज्यमानेन वा विशेषणेन सह प्रयुज्यमानम् अप्रयुज्यमानं वा आख्यातं वाक्य-संज्ञं भवति ।

धर्मो वो रक्षतु । धर्मो नो रक्षतु । शालीनां ते ओदनं ददाति । कुरु[1] ३ ग्रामं च गच्छे[2] । चैत्रेण वो दातव्यम् । साकाङ्क्षत्वेऽपि तिबाद्यन्ते भेदेन वाक्यभेदार्थं वचनम् । ओदनं पच, तव भविष्यति । वाक्यप्रदेशाः—"पदाद् वाक्यस्य वस्-नसौ बहुत्वे युग्-विभक्त्या" [ ना० चतु० पादः ४९ ] इत्येवमादयः ॥ ७ ॥

## विभक्त्यन्तं पदम् । ८ ।

विभक्त्यन्तं पदसंज्ञं भवति ।

धर्मः । कर्म । ब्रूमहे । वः । पदप्रदेशाः—"एङः पदान्ते अति" [ तृ० सन्धिः २१ ] इत्येवमादयः ॥ ८ ॥

## नं क्ये[3] । ९ ।

नकारान्तं शब्दरूपं विभक्त्यन्तं क्ये प्रत्यये परे पदसंज्ञं भवति । 'क्य' इति क्यच्-क्यष्-क्यङां सामान्येन ग्रहणम् ।

राजीयति । चर्मायति, चर्मायते । ऊष्मायते । क्ये इति किम् ? सामन्यः[4] । विभक्त्यन्तमिति किम् ? मन्या[5] । उत्तरत्र नियमाभिधानाद् विभक्त्यन्तस्यापि प्रत्यये परे पदसंज्ञा न प्राप्नोतीति वचनम् ॥ ९ ॥

---

१. कुरू ३ पा० पू० ।

२. "कुरुं च ग्राम च गच्छति"-अमोघ० ।

३. 'राजानम् इच्छति राजीयति' इत्यादिषु प्रयोगेषु 'राजानम्' इत्यादिकानां रूपाणां विभक्तिलोपेऽपि अन्तर्विभक्त्यपेक्षया 'राजपुरुष' इति प्रयोगस्थित 'राज' रूपवत् विभक्त्यन्तत्वेन "विभक्त्यन्त पदम्" इति पूर्वेण सूत्रेण सिद्धायां पदसंज्ञायां किमर्थम् अस्य सूत्रस्य समारम्भः ? अत्रोच्यते, नियमार्थम् अस्य समारम्भः—नियमश्चैवम्—क्यच्-क्यष्—क्यङ्रूपे क्ये प्रत्यये परे यत् किमपि विभक्त्यन्तत्वेन पदसंज्ञ स्यात् तत् नान्तमेव—नकारान्तमेव विभक्त्यन्तं स्यात् नान्यत् । अत एव वाचम् इच्छति वाच्यति, स्रुचम् इच्छति स्रुच्यति इत्यादिकेषु प्रयोगेषु 'वाच्' आदिकानां विभक्त्यन्तानाम् सतामपि पूर्वोक्तरूपे क्यप्रत्यये न पदसंज्ञा ततश्च तेषां चकारस्य न कत्वम् । इत्येव प्रस्तुत सूत्रं नियमार्थम् ।

४. सामनि साधुः सामन्यः । साम च सामवेदः अथवा सामरूप उपायः ।

५. 'मन्या' शब्दे "समज-निषद-निपत-निपद-मन-विद"-(कृदन्तपञ्चम पाद सूत्र ८४) इत्यादिसूत्रेण 'क्यप्' प्रत्ययः । अत्र च मूलसूत्रे 'क्ये' इति साधारण एव उल्लेखः अतः मूल-सूत्रानुसारेण क्य'स्य अविशेषविवक्षायाम् वृत्त्यनुसारेण च नकारान्तशब्दरूपस्य विद्यमानत्वात् 'विभक्त्यन्तम्' इत्यस्य अविवक्षायां च एतत् प्रत्युदाहरणं संभवति अथवा अत्र कोऽपि पाठः पतितः विकृतो वा लिपिकारप्रमादवशतः ।

## नाम सित्-अयव्यञ्जने । १० ।

सिति यवर्जितव्यञ्जनादौ च प्रत्यये परे पूर्वं नाम पदसंज्ञं भवति ।

ऊर्णायुः । पयोभ्याम् । सित्-अयव्यञ्जने इति किम्? भवन्तौ । यप्रतिषेधः किम्? दिव्यम् । नाम इति किम्? वच्मि । अन्तर्विभक्त्यैव पदत्वे सिद्धे सित्-ग्रहणं प्रत्यये परे नियमार्थम् तेन इह न भवति—भागवतम् ॥ १० ॥

## न वृत्त्यन्तः । ११ ।

परार्थाभिधानं वृत्तिः तद्वांश्च शब्दसमुदायः समासादिः । तस्या अन्तः पदसंज्ञो न भवति ।

परमगिरौ । बहुदण्डिनौ । अन्तग्रहणं किम्? राजवाक् । वाक्-त्वक्-स्रुचः इति त्रयाणां वृत्तौ न पृथग् द्वयोर्वृत्तिः इति न मध्यमस्य निषेधः । वाक्त्वचम् इत्यत्र वृत्त्यन्तत्वाभावेऽपि "समासार्थात् समासान्तः" इति त्वचः न पदत्वम् ॥ ११ ॥

## स्-तं मत्वर्थे । १२ ।

सकारान्तं तकारान्तं च शब्दरूपं मत्वर्थे प्रत्यये परे पदसंज्ञं न भवति ।

विदुष्मान् । यशस्वी । मरुत्वान् । स्-तम् इति किम्? राजवान् ॥ १२॥

## मनुर्-नभो-ऽङ्गिरो वति । १३ ।

एतानि शब्दरूपाणि वति प्रत्यये परे पदसंज्ञानि न भवन्ति ।

मनुर् इव मनुष्वत् । नभस्वत् । अङ्गिरस्वत ॥ १३ ॥

## उता स्ववर्गस्य[2] । १४ ।

उँकारेण सह उपादीयमानो वर्णः स्ववर्गस्य संज्ञा भवति । "श्चुना योगे स्तोः श्चु"—[ पञ्च० सन्धिः ९ ] तच्शेते । तच्चरति । तच्छादयति ॥ १४ ॥

## घिः असखि-अद्वन्द्वपति-इदुत् । १५ ।

सखिशब्दम् अद्वन्द्वावयवं च पतिशब्दं वर्जित्वा शेषम्—इकारान्तम् उकारान्तं च शब्दरूपं घिसंज्ञं भवति ।

---

१. 'ऊर्णायुः' इति पदे 'ऊर्णा' शब्दस्य 'ऊर्णा यस्य अस्ति' इति विग्रहे प्रथमान्तत्वेन अन्तर्विभक्त्या "विभक्त्यन्त पदम्" [ द्वितीयसन्धि सूत्र ८ ] इति सूत्रेण सिद्धेऽपि पदत्वे नियमार्थम् अयम् आरम्भः । अतः 'भागवतम्' इत्यत्र 'भगवतः इदम्' इति विग्रहे 'भगवत्' शब्दस्य षष्ठीविभक्तियुक्तत्वे सत्यपि "विभक्त्यन्त पदम्" इति पूर्वोक्तसूत्रेण न पदसंज्ञा ततश्च 'भवदीयम्' इति पदे 'भवत्' इत्यशस्य अनेन सूत्रेण पदसंज्ञया यथा तस्य दकारो जातः तथा 'भागवतम्' इत्यत्र 'भगवत्' इत्यशस्य अनेन सूत्रेण पदसंज्ञाया अभावेन 'भागवदम् इति दकारयुक्तं रूपं न जातम् इति नियमफलम् । नियमश्च वृत्तौ स्पष्टतया प्रतिपादित एव ।

२. 'कु' 'चु' इत्येवम् उकारेण सह उपादीयमानो वर्णो बोध्यः ।

मुनिना । साधुना । मुनिसुतौ । साधुसुतौ । सख्यादिप्रतिषेधः किम् ? सख्या । पत्या । अद्वन्द्वग्रहणं किम् ? पतिसुतौ[1], अत्र पतिशब्दस्य घिसंज्ञकत्वात् पूर्वनिपातः । केवलसखि-पतिशब्दप्रतिषेधाद् इह भवति—अतिसखेः आगच्छति । बहुपतेः स्वम् । घिप्रदेशाः—"घेर्ङौ" [ ना० प्रथ० पादः ३१ ] इत्येवमादयः ॥ १५ ॥

## प्रत्ययः कृतः अषष्ठयर्थस्य । १६ ।

इह शास्त्रे यो [2]विहितः स प्रत्ययसंज्ञो भवति चेत् षष्ठ्यन्तार्थस्य विहितो न स्यात् ।

"नाम्नः प्रथमा एक-द्वि-बहौ [ ना० सप्त० पादः २ ] वृक्षाः । कर्ता । गौरी । "गौरादीनाम्" [ ना० पञ्च० पादः ५१ ] इति [3]अभिधेयापेक्षा षष्ठी न 'ङी'अपेक्षया इति प्रत्ययसंज्ञा । कृतः इति किम् ? प्रकृतेर्मा भूत् । अषष्ठ्यर्थस्य इति किम् ? विकारस्य आगमस्य च मा भूत् । प्रत्ययप्रदेशाः—"प्रत्यये" [ च० सन्धिः ९ ] इत्येवमादयः ॥१६॥

## परः । १७ ।

प्रत्ययः प्रकृतेः पर एव वेदितव्यः ।

वृक्षाः । गौरी । खट्वा । पञ्चमीनिर्देशे "प्राक् पञ्चमी" [ ] इत्येव सिद्धौ अपञ्चमीनिर्देशे परत्वार्थं वचनम् ॥ १७ ॥

## स्पर्द्धे । १८ ।

द्वयोर्विध्योः अन्यत्र सावकाशयोः तुल्यबलयोः एकत्र उपनिपातः स्पर्द्धः, तस्मिन् सति यो विधिः सूत्रपाठे परः स एव वेदितव्यः ।

"उत् अतः रेः अ-घोषवतोः" [ ना० प्रथ० पादः ७ ] को हसति । "एतदश्च व्यञ्जने अनक्-नञ्समासे" [ ना० प्रथ० पादः ९ ] एष त्सरुकः । 'एष हसति' इत्यत्र लुग्-उत्वयोः पर एव लुग्विधिः । नित्य-अनित्य—अन्तरङ्ग-बहिरङ्ग-उत्सर्ग-अपवादेषु नित्य-अन्तरङ्ग-अपवादा एव लोके बलवन्तो रूढाः । परस्परप्रनिबन्धेन अप्रवृत्तौ पर्याये वा प्राप्ते वचनम् ॥ १८ ॥

## स्वरात् अन्त्यात् मित् । १९ ।

मकारानुबन्धः स्वरेषु अन्त्यात् स्वरात् परो वेदितव्यः ।

---

१. अत्र 'पति'शब्दः तत्पुरुषे समासे, न द्वन्द्वसमासे अतः घिसंज्ञा, ततश्च घिसंज्ञायाः फलं पूर्वनिपातः सिद्धः ।

२. कृतः विहितः इति पर्यायौ । अत्र प्रकृतिः न कृता सा तु स्वयंसिद्धा इति भावः ।

३. 'गौर' इत्यादि-अभिधेयवाचिनां नाम्नां स्त्रियाम्-इति तात्पर्यम् ।

पयांसि । वन्दते ॥ १९ ॥

**विरामे वा प्रथमः तृतीयस्य । २० ।**

विरतिः विरामः स भवन् अनुपसर्गस्य अवृत्तिमध्यस्य पदस्य अन्ते भवति । विरामे वर्तमानस्य तृतीयस्य स्थाने प्रत्यासत्त्या प्रथम आदेशो वा भवति ।

वाक् वाग् । षट् षड् । तत् तद । विराम इति किम् ? वागत्र । तृतीयस्येति किम् ? विद्वान् ॥ २० ॥

**न इतः प्राग् दशः ॥ २१ ॥**

इत ऊर्ध्वम् "पञ्चतो नपः अनेकतरस्य अन्यादेः स्यमोर्दश्" [ ना० प्रथ० पादः ११ ] इति दशः प्राक् यद् वक्ष्यति तद् विरामे न भवति ।

ते आहुः । भवान् लुनाति । एजादीनां स्वराद्युपश्लेषविज्ञानात् विरामे अयाद्य-भावसिद्धौ वचनं मन्दानुग्रहार्थम् ॥ २१ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्वृत्तौ द्वितीयः सन्धिः समाप्तः ॥

*

## तृतीयः सन्धिः

**एचः स्वरे अय्-आय्-अव्-आव् । १ ।**

एच्संज्ञकानां स्वरे परे यथासंख्यम् अय् आय् अव् आव् इत्यादेशा भवन्ति । नयनम् । रायौ । लवनम् । नावौ । स्वरे इति किम् ? गोकुलम् ॥ १ ॥

**इकः अस्वे यञ् । २ ।**

इक्संज्ञकानाम् अस्वे स्वरे परे प्रत्यासत्त्या यञ् आदेशो भवति । इवर्णस्य तालव्यस्य स्थाने यञ् तालव्यो यकारः । उवर्णस्य ओष्ठ्यस्य यञ् ओष्ठ्यो वकारः । ऋवर्णस्य मूर्धन्यस्य यञ् मूर्धन्यो रेफः । लृवर्णस्य दन्त्यस्य यञ् दन्त्यो लकारः ।

दध्यत्र । नद्येषा । मध्वत्र । वध्वासनम् । पित्रर्थः । लाकृतिः । इक इति किम् ? पचति । "इकः[1] परः अस्वे स्वरे परे यञ् भवति" [ ] इति व्याडि–गालवादयः । दधियत्र । मधुवत्र । तिरियङ् । भूवादयः । तदपि अतो निर्देशात् सिद्धम् ॥ २ ॥

---

१. अत्र 'इकः' इति पञ्चम्यन्तं व्याख्येयम् । श्रीपाणिनीय-हैमव्याकरणेषु अपि एषा व्याख्या समादृता ।

## ह्रस्वः अपदे वा । ३ ।

इकः अस्वे स्वरे परे ह्रस्वादेशो वा भवति, न चेत् तौ निमित्त-निमित्तिनौ एकत्र पदे भवतः ।

नदि एषा, नद्येषा । मधु अत्र, मध्वत्र । अति एति, अत्येति । ह्रस्वस्यापि ह्रस्वः पर्जन्यस्येव लक्षणस्य प्रवृत्तेः[1] । ह्रस्वविधानसामर्थ्याच्च अन्यत् कार्यान्तरं न भवति । अपदे इति किम् ? नद्यौ । वध्वौ । नद्युदकम् । वध्वासनम् । 'अनुव्यचलत्'[2] इत्यादि अखण्डमव्ययम् ॥ ३ ॥

## ऋ-लृतोः समानस्य । ४ ।

समानस्य ऋकारे लृकारे च परे ह्रस्वादेशो भवति वा ।

खट्वऋश्यः, खट्वर्श्यः । धूलिऋतुः, धूल्यृतुः । कर्तृऋश्यः, कर्तृश्यः । लृति—कन्यलृकारः, कन्यल्कारः । अनिगर्थम् स्वार्थम् पदार्थं च वचनम् ॥ ४ ॥

## दीर्घः स्वे सपरस्वरस्य । ५ ।

समानस्य स्वे स्वरे परे परेण स्वरेण सहितस्य प्रत्यासत्त्या दीर्घो भवति ।

दण्डाग्रम् । साऽऽगता । दधीदम् । नदीहते । मधूदकम् । वधूढा । पितॄषभः । पितॄतकः[3] इत्याह । 'प्रेजुः' 'प्रोपुः' इति अन्तरङ्गत्वाद् एदोद्भ्यां प्रागेव दीर्घः ॥ ५ ॥

## शसि सश्च नः पुंसि । ६ ।

समानस्य शसि परे परेण स्वरेण सहितस्य स्थानिप्रत्यासत्त्या दीर्घो भवति । पुंलिङ्गे च शसः सकारस्य नकारः ।

बुद्धीः । धेनूः । नदीः । वधूः । मातॄः । 'वनानि' 'त्रपूणि' इत्यत्र परत्वात् शि-नमौ भवतः । सश्च नः पुंसि - वृक्षान् । मुनीन् । साधून् । पितॄन् । 'चञ्चाः पुरुषान् पश्य' इत्यत्र 'चञ्चा'आदयः स्त्रीत्वं नोज्झन्ति-इति न भवति ॥ ६ ॥

## ऋवर्णस्य लृवर्णे लृः । ७ ।

ऋवर्णस्य लृवर्णे परे परेण स्वरेण सहितस्य लॄ इत्यादेशो भवति ।

होत्लॄकारः । पित्लॄतकः । ऋवर्णे तु परे ॠकारः "दीर्घः स्वे" [ तृती० सन्धिः ५ ] इत्येव सिद्धः ॥ ७ ॥

---

१. "पर्जन्यवल्लक्षणप्रवृत्तिः" इति न्यायसंग्रहे न्यायः १२ ।

२. 'अनुव्यचलत्' इत्यस्य अखण्डपदत्वेन 'अनुविअचलत्' इत्येवंरूपं कदापि न भवति ।

३. अत्र 'पितृ + ऋतकः' इति पदविभागः ।

## अवर्णस्य इवर्णादौ एत्-ओत्-अर्-अल् । ८ ।

अवर्णस्य इवर्णादौ स्वरे परे परेण स्वरेण सहितस्य यथासंख्यम् ए ओ अर् अल् इत्यादेशा भवन्ति ।

तवेयम् । मालेयम् । गन्धोदकम् । मालोदकम् । परमर्षिः । महर्षिः । तवल्कारः । सल्कारेण । त्रिमात्रयोरपि स्थानिनोः एदोतौ द्विमात्रावेव भवतः सूत्रे तथानिर्देशात् ॥८॥

## एच्-ऊचोः ऐत् औत् । ९ ।

अवर्णस्य एचि ऊचि च परे परेण स्वरेण सहितस्य प्रत्यासत्त्या ऐ औ आदेशौ भवतः ।

तवैषा । खट्वैषा । तवैन्द्री । खट्वैन्द्री । तवौदनः । खट्वौदनः । तवौपगवः । खट्वौपगवः । ऊचि—धौतः । धौतवान् ॥ ९ ॥

## प्रस्य ऊह-ऊढ-ऊढि-एष-एष्येषु । १० ।

प्रशब्दस्य संबन्धिनः अवर्णस्य ऊह-आदिषु परेषु परेण स्वरेण सहितस्य आसत्त्या ऐ औ आदेशौ भवतः ।

प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । प्रस्य इति किम् ? अपोढः । ऊहादिषु इति किम् ? प्रेतः । 'एकः प्रेष्यः' इति [1]ईषेर्ध्यणि ईष्यरूपम् ॥ १० ॥

## स्वैर-स्वैरी-अक्षौहिण्यः । ११ ।

एते अवर्णस्य परेण स्वरेण सहितस्य ऐ औ आदेशेन निपात्यन्ते ।

स्वस्य ईरः स्वैरः, स्वयम् ईर्ते इति स्वैरः अच् । स्वयम् ईरितुं शीलमस्य स्वैरी । अक्षाणाम् ऊहिनी अक्षौहिणी ॥ ११ ॥

## ओम्-आङि परः । १२ ।

अवर्णस्य ओमि आङादेशे च परे परेण स्वरेण सहितस्य परः स्वर आदेशो भवति ।

तवोङ्कारः । .... [[2] आङादेशे] — आ इहि—एहि उप एहि—उपेहि । [3]शकन्धुः । कर्कन्धुः इति पृषोदरादिः ॥ १२ ॥

---

१. 'ईष उञ्छे' इत्येतस्य धातोः 'ईष्य' इति साधिते प्र + ईष्य = प्रेष्य इति सिद्धम् ।

२. एतच्चिह्नान्तर्गतं सर्वं संपादकीयम् ।

३. शकानाम् अन्धुः—शक + अन्धुः । अत्र शकशब्दस्य अन्त्यस्य अकारस्य लोपः । शकनामकजातीयमानवानाम् – अन्धुः कूपः इत्यर्थः । एवम् अन्यत्रापि आदिमशब्दस्य अन्त्यस्वरलोपो ज्ञेयः ।

## एवे अनियोगे । १३ ।

नियोगः अवधारणम् ततोऽन्यत्र वर्तमाने एवशब्दे परे परेण स्वरेण सहितस्य अवर्णस्य स्थाने परः स्वर आदेशो भवति ।

क्वेव भोक्ष्यसे ? अनियोग इति किम् ? अद्यैव । इहैव ॥ १३ ॥

## वा ओष्ठ-ओतौ समासे । १४ ।

ओष्ठशब्दे ओतुशब्दे च परे परेण स्वरेण सहितस्य अवर्णस्य स्थाने परः स्वर आदेशो वा भवति । तौ चेत् निमित्त-निमित्तिनौ एकत्र समासे स्याताम् ।

बिम्बोष्ठी, बिम्बौष्ठी । स्थूलोतुः, स्थूलौतुः । समास इति किम् ? हे राजपुत्रौष्ठं पश्य । हे देवदत्तौतुविजृम्भितं पश्य ॥ १४ ॥

## ऋते तृतीयायाः आर् । १५ ।

तृतीयान्तस्य सबन्धिनः अवर्णस्य ऋतशब्दे परे परेण स्वरेण सहितस्य आर् आदेशो भवति । तौ चेत् निमित्त-निमित्तिनौ एकत्र समासे स्याताम् ।

सुखार्तः । दुःखार्तः । तृतीयायाः इति किम् ? परमर्तः । समास इति किम् ? सुखेनर्तः ॥ १५ ॥

## प्र-दश-ऋण-वसन-कम्बल-वत्सर-वत्सतरस्य ऋणे । १६ ।

'प्र' शब्दादीनाम् अवर्णस्य 'ऋण' शब्दे परे परेण स्वरेण सहितस्य आर् आदेशो भवति ।

प्रगतम् ऋणम् प्रार्णम् । दशानाम् ऋणम् दशार्णम् । दश ऋणानि यस्यां सा **दशार्णा नदी । दशार्णो जनपदः ।** ऋणे ऋणम् ऋणार्णम् । वसनस्य ऋणम् वसनार्णम् । कम्बलार्णम् । वत्सरार्णम् । वत्सतरार्णम् ॥ १६ ॥

## ऋति आर् उपसर्गस्य । १७ ।

उपसर्गस्य संबन्धिनः अवर्णस्य ऋकारादौ धातौ परे परेण स्वरेण सहितस्य आर् आदेशो भवति ।

उपार्ध्नोति । प्रार्च्छति । उपसर्गस्य इति किम् ? इहर्ध्नोति । प्रर्च्छको देशः—अत्र 'प्र'शब्दस्य प्रत्ययार्थेन कर्त्रा योगः न धातुना इति अनुपसर्गत्वम् । 'आर्' इति अनुवर्त-

---

१. अत्र पूर्वसूत्रात् 'समासे' इति अनुवर्तनीयम् । २. उप+ऋध्नोति । ३. प्र+ऋच्छति ।

माने पुनर् 'आर्' ग्रहणं परमपि आरं प्राकृतनो ह्रस्वो बाधते इति ज्ञापनार्थम् तेन पूर्वत्र ह्रस्वो वा भवत्येव—प्रऋणम् । सुखऋतः ॥ १७ ॥

## वा नामधातौ । १८ ।

उपसर्गस्य संबन्धिनः अवर्णस्य ऋकारादौ नामधातौ परे परेण स्वरेण सहितस्य आर् आदेशो वा भवति, पक्षे यथाप्राप्तम् ।

उपार्षभीयति, उपर्षभीयति, उपऋषभीयति । ऋतीति किम् ? ॠकारे अर् एव—[1]उपर्कारीयति ॥ १८ ॥

## ऌति आल् । १९ ।

उपसर्गस्य संबन्धिनः अवर्णस्य ऌकारादौ नामधातौ परे परेण स्वरेण सहितस्य आल् आदेशो वा भवति ।

उपाल्कारीयति, उपल्कारीयति, उपऌकारीयति ॥ १९ ॥

## एङि एङ् । २० ।

उपसर्गस्य संबन्धिनः अवर्णस्य एङादौ नामधातौ परे परेण स्वरेण सहितस्य एङ् आदेशो वा भवति ।

[2]उपेकीयति, उपैकीयति । [3]प्रोषधीयति, प्रौषधीयति ॥ २० ॥

## अनिणेधि । २१ ।

'वा' इति निवृत्तं पृथग्वचनात् । इण्—एधवर्जिते एङादौ धातौ परे परेण स्वरेण सहितस्य उपसर्गसंबन्धिनः अवर्णस्य एङ्आदेशो भवति ।

[4]प्रेलयति । [5]प्रोषयति । अनिणेधीति किम् ? [6]उपैति । [7]उपैधते ॥ २१ ॥

## एङः पदान्ते अति । २२ ।

पदान्ते वर्तमानस्य एङः अकारे परेण स्वरेण सहितस्य यथासंख्यम् एङ् आदेशो भवति । अय्-अवोः अपवादः ।

तेऽत्र । पटोऽत्र । पदान्ते इति किम् ? नयनम् । लवनम् ॥ २२ ॥

## गोः ओद् वा । २३ ।

'सपरस्वरस्य' इति निवृत्तम् 'ओद्'वचनात् । गोशब्दसंबन्धिनः एङः पदान्ते वर्तमानस्य अकारे ओकार आदेशो वा भवति ।

---

१. उप+ॠकारीयति । २. उप+एकीयति । ३. प्र+ओषधीयति । ४. प्र+एलयति । ५. प्र+ओषयति । ६. उप+एति । ७. उप+एधते ।

गो अग्रम्, गोऽग्रम्, गवाग्रम् । एङः इति किम्? चित्रग्वग्रम् । 'हे चित्रगो अग्रम्' इति लाक्षणिकत्वान्न भवति । गोः ओद्वचनं प्रकृतिभावार्थम् ॥ २३ ॥

**अवः अनक्षे स्वरे । २४ ।**

गोशब्दस्य संबन्धिनः एङः पदान्ते वर्तमानस्य अक्षशब्दस्थवर्जिते स्वरे परे अव आदेशो वा भवति ।

गवेश्वरः गवीश्वरः । पदान्त इति किम्? गवि । अनक्ष इति किम्? गोऽक्षम्, गोअक्षम् ॥ २४ ॥

**इन्द्रे । २५ ।**

गोशब्दस्य संबन्धिनः एङः पदान्ते वर्तमानस्य इन्द्रशब्दस्थे स्वरे परे अव आदेशो भवति ।

गवेन्द्रः । गवेन्द्रदत्तः । नित्यार्थं वचनम् ॥ २५ ॥

**वातायनेऽक्षे । २६ ।**

गोशब्दस्य संबन्धिनः एङः पदान्ते वर्तमानस्य अक्षशब्दस्थे स्वरे परे वातायने वाच्ये अव आदेशो भवति ।

गवाक्षः वातायनम् । वातायन इति किम्? गोऽक्षम्, गोअक्षम् ॥ २६ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्वृत्तौ तृतीयः सन्धिः समाप्तः ॥

*

## चतुर्थः सन्धिः

**प्लुतः असन्धिः अनितौ । १ ।**

'पदान्ते' इति वर्तते । 'इति'शब्दस्थवर्जिते स्वरे परे पदान्ते वर्तमानः प्लुतः असन्धिर्भवति ।

देवदत्त ३ इदमानय । अनितौ इति किम्? सुश्लोकेति ॥ १ ॥

**ए द्विवचनम् । २ ।**

---

१. अत्र 'चित्रगु'इति प्रकृते: संबोधने गुणविधायकसूत्ररूपलक्षणेन ओत्वं लाक्षणिकम् न प्रकृतिजम् इति तात्पर्यम् ।

२. अव इत्यादेशो पा० ।

३. तृतीयसन्धिस्थ-अन्तिमसूत्रात् 'पदान्ते' इति अनुवर्तनीयम् ।

द्विवचनभूतो यः एकारः स स्वरे परे असन्धिर्भवति ।

पचेते अत्र । पचेथे अत्र । पचावहे आवाम् ॥ २ ॥

## गित् । ३ ।

गानुबन्धः स्वरे परे असन्धिर्भवति ।

मुनी इमौ । शाले एते । माले इमे । स्वरे परे प्रत्यासत्तेस्तन्निमित्तकसन्धिकार्यप्रतिषेधाद् अन्यनिमित्तो दीर्घादिर्भवत्येव । इह 'मणीव' आदिषु असन्धिप्रतिषेधो न वक्तव्यः बहूनामसम्मतत्वात् । तथा च प्रयोगः—"मणी इवोद्भिन्नमनोहरत्विषौ" [ ] इति । यस्तु प्रयोगः—"मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" [ ] इति । तत्र **श्रुतपालेन** 'वा' शब्दः इवार्थो व्याख्यातः ॥ ३ ॥

## चादिः स्वरः अनाङ् । ४ ।

आङ्वर्जश्चादिः स्वरः असत्त्ववाची स्वरे परे असन्धिर्भवति ।

अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं नु मन्यसे । आ एवं किल तत् । चादिरिति किम् ? हे अ आगच्छ—हे आगच्छ । उत्तरत्र 'अन्त'ग्रहणाद् इह केवलः स्वरो गृह्यते, इह न स्यात्—त्वं चाहं च । अनाङ् इति किम् ? आ+ईषद्+उष्णम् ओष्णम् ।

"ईषदर्थे क्रियायोगे मर्यादा-अभिविधौ च यः ।
एतमातं ङितं विद्यात् वाक्य-स्मरणयोरङित् ॥ ३ ॥ [काशिका १।१।१४]

प्रत्यासत्तेर्निमित्तस्वरेण सह सन्धिप्रतिषेधाद् अन्येन भवत्येव—जानु उ जानु अस्य रुजति ॥ ४ ॥

## ओदन्तः । ५ ।

ओकारान्तश्चादिः स्वरे परे असन्धिर्भवति ।

अहो अयम् । अथो इदम् । चादिरिति किम् ? मिथोऽत्र । 'मिथो' इति चादेः पूर्वः । इह अव-यपरे केषांचित् प्रतिषेधः । तथा च प्रयोगः—"अथोऽध्याद् भारती

---

१. अस्य विधानस्य "मणी इवोद्भिन्न"-इत्यादि उदाहरणम् अत्र 'मणी' इति दीर्घान्तरूप न परस्वरनिमित्तकम् इति तात्पर्यम् ।

२. 'अ' इति विष्णुसूचकस्य 'अ'स्य संबोधनम् । २ अ + आगच्छ इत्यस्य सन्धौ जाते रूपम् ।

३. अत्र 'आ + उष्णम्' इति पूर्वावस्था बोध्या. 'ईषद्' इति तु अर्थसूचकं पदम् ।

४. अत्र 'जानु उ अस्य' इत्यत्र 'अस्य' इति पदान्तर्गते अकारे सति 'उ' इत्यस्य सन्धिप्रतिषेधः परन्तु 'जानु' पदस्य अन्तिमउकारेण परस्य 'उ' इत्यस्य न सन्धिनिषेधः इति रहस्यम् ।

देवी"[ ] "अहोऽयं निभृतः पक्षी बकः परमधार्मिकः" [ ]
इति । तद् पूर्वेषां न सम्मतम् इत्युपेक्षा ॥ ५ ॥

## सौ वा इतौ । ६ ।

सिनिमित्तः ओकारान्तः इतिशब्दे परे असन्धिर्भवति वा ।

पटो इति, पटविति । इतौ इति किम्? पटोऽत्र ॥ ६ ॥

## वर्गाद् उञः स्वरे वः असन् । ७ ।

वर्गाद् परस्य उञः स्वरे परे वकारादेशो वा भवति, स च असन् ।

कुङ्ङु आस्ते, कुङ्ङ्वास्ते । किमु इति, किम्विति । व्यवस्थितविभाषाविज्ञानात् तालव्यात् ञकारात् परस्य न भवति–यञु उपैति । असत्त्वात् द्वित्वम् अनुस्वाराभावश्च ॥७॥

## तृतीयस्य स्वः अनुनासिकः पञ्चमे । ८ ।

तृतीयस्य पदान्ते वर्तमानस्य पञ्चमे परे स्वः अनुनासिको भवति वा । मुख-नासिका-वचनः अनुनासिकः ।

वाङ्मधुरः, वाग्मधुरः । षण्नयाः, षड्नयाः । तन्नयनम् तद्नयनम् । ककुम्मण्डलम् ककुब्मण्डलम् । पञ्चम इति किम्? वाग् जयति । केचित् व्यञ्जनमात्रस्य अनुनासिके परे अनुनासिकमिच्छन्ति—हलँमात्रम्, हल्मात्रम् । तद् अन्येषां न सम्मतम् ॥ ८ ॥

## प्रत्यये । ९ ।

तृतीयस्य पदान्ते वर्तमानस्य पञ्चमादौ प्रत्यये परे नित्यं स्वः अनुनासिको भवति ।

वाङ्मयम् । षण्णाम् । नित्यार्थं वचनम् ॥ ९ ॥

## म्नां धुटि अपदान्ते । १० ।

मकार-नकाराणाम् अपदान्ते वर्तमानानां धुटि परे धुटः स्वः अनुनासिकः भवति ।

गन्ता । शङ्किता । बहुवचनं विध्यन्तरबाधनार्थम्—संरम्भः, इह परोऽपि णो न भवति । धुटि–इति किम्? गम्यते । अपदान्त इति किम्? भवान् परमः ॥ १० ॥

---

१. उपाध्यायश्रीयशोविजयमहापण्डितप्रणीते गुर्जरभाषाग्रन्थे द्रव्यगुणपर्यायरासे २५७ गाथायाः गुर्जरभाषानिबद्धे विवेचने (टबायां) अयं श्लोकः संपूर्णः एवं दृश्यते—

"शनैर्मुञ्चति पादान् जीवानामनुकम्पया ।
पश्य लक्ष्मण ! पम्पायां बकः परमधार्मिकः ॥"

२. "रमेः अपरोक्षा-शपि" [आख्यातपाद पञ्चम, सूत्र २९] इत्यनेन 'रम्' धातौ 'न्'कारागमे जाते 'रन्म्' इति स्थितौ 'न्'कारस्य णत्वं न जातम् इति बोध्यम् ।

## शिटि हे च अनुस्वारः । ११ ।

मकार-नकाराणाम् अपदान्ते वर्तमानानां शिटि हे च परे अनुस्वारो भवति ।

पुंसि । सुदिंशि[1] कुलानि । धनूंषि । गुडलिंहि कुलानि । शिटि हे च–इति किम्? गम्यते । अपदान्त इति किम्? भवान् शान्तः ॥ ११ ॥

## ममो व्यञ्जने तौ । १२ ।

ममो व्यञ्जने परे तौ निमित्तस्वः अनुनासिकः अनुस्वारश्च पर्यायेण भवतः ।

चङ्क्रम्यते, चंक्रम्यते । यंयम्यते, यँय्यम्यते । निमित्तस्व इति किम्? रंरम्यते[2] । अत्र अनुस्वार एव ॥ १२ ॥

## मः पदान्ते । १३ ।

मकारस्य पदान्ते वर्तमानस्य व्यञ्जने परे तौ निमित्तस्वः अनुनासिकः अनुस्वारश्च पर्यायेण भवतः ।

त्वङ् करोषि, त्वं करोषि । सँय्यन्ता, संयन्ता । पदान्त इति किम्? गम्यते । निमित्तस्व इति किम्? त्वं शान्तः[3] ॥ १३ ॥

## हे म-न-य-ल-वपरे । १४ ।

मकारस्य पदान्ते वर्तमानस्य म-न-य-ल-वपरे हकारे परे प्रत्यासत्तेर्म-न-य-ल-वानां स्वः अनुनासिकः अनुस्वारश्च पर्यायेण भवति ।

किँ ह्मलयति, किं ह्मलयति । किँन् ह्नुते, किं ह्नुते । किँय् ह्यः, किं ह्यः । किँल् ह्लादयति, किं ह्लादयति । किँव् ह्वयते, किं ह्वयते ॥ १४ ॥

## सम्राट् । १५ ।

समः राजतौ क्विबन्ते परे अनुस्वाराभावो निपात्यते ।

सम्राट्, सम्राजौ ॥ १५ ॥

## ह्रस्वाद् ङ-ण-नाः स्वरे द्विः । १६ ।

ह्रस्वात् परे पदान्ते वर्तमाना ङ-ण-नाः स्वरे परे द्विर्भवन्ति ।

---

१ सुदिशति इति सुदिक् तस्य प्रथमा-द्वितीयाबहुवचनम् ।

२. अत्र निमित्तभूत'र'कारस्य न कोऽपि स्वः अनुनासिकः ।

३. अत्रापि निमित्तभूत'श'कारस्य न कोऽपि स्वः अनुनासिकः ।

क्रुङ्ङास्ते । सुगण्णत्र । पचन्निह । कृषन्निह इत्यत्र "असिद्धं बहिरङ्गमन्तरङ्गे"[1] [ न्यायसंग्रहे न्याय २० ] इति णत्वं न भवति । ह्रस्वाद् इति किम् ? प्राङ् आस्ते । राजन्न् इह । स्वरे इति किम् ? पठन् रमते ॥ १६ ॥

## दीर्घाद् वा छः । १७ ।

पदान्ते वर्तमानात् दीर्घात् परः छकारो द्विर्वा भवति ।

कन्याच्छत्रम्, कन्याछत्रम् । दीर्घाद् इति किम् ? वाक्छत्रम् । पदान्त इति किम् ? ह्रीच्छति ॥ १७ ॥

## प्लुतात् । १८ ।

पदान्ते वर्तमानात् दीर्घस्थानिकात् प्लुतात् परः छकारो द्विर्वा भवति ।

आगच्छ भो वह्निभूते ३ च्छत्रमानय, आगच्छ भो वह्निभूते ३ छत्रमानय ॥१८॥

## आङ्-माङः अव्ययात् । १९ ।

आङः माङश्च अव्ययात् परः छकारो द्विर्भवति ।

आ च्छाया । मा च्छिदत् । आङ्–इति किम् ? आ छायायाम् । वाक्ये स्मरणे च अयम् आकारः[2] । अव्ययात् इति किम् ? प्रमीयते इति प्रमा, प्रमाच्छात्रः । विकल्पबाधनार्थं वचनम् ॥ १९ ॥

## स्वरेभ्यः अनु । २० ।

स्वरात् परः छकारः प्राप्ते कार्यान्तरे कृते सति पश्चाद् द्विर्भवति ।

गच्छति । ह्रीच्छति । श्वेतच्छत्रम् । अनु इति किम् ? प्रश्नः । प्रष्टा । श-षाभ्यामन्तरङ्गमपि द्वित्वं न भवति । 'विच्छिता' इति गुणो न, छकारस्य[3] इति । बहुवचनं[4] पदान्ते अपदान्ते च स्वरग्रहणार्थम् ॥ २० ॥

---

१ अन्तरङ्गलक्षणम्—"प्रकृतेराश्रितं यत् स्यात् यद् वा पूर्वं व्यवस्थितम् ।
यस्य वाऽल्पनिमित्तानि अन्तरङ्गं तदुच्यते" ॥ १ ॥
बहिरङ्गलक्षणम्—"प्रत्ययस्याश्रितं यत् स्यात् बहिर्वा यद् व्यवस्थितम् ।
बहूनि वा निमित्तानि यस्य तद् बहिरङ्गकम्" ॥ २ ॥
—[ न्यायसंग्रहे पृ० २० ]

२. सूत्रे ङित्आकारो गृहीतः अतः "वाक्य-स्मरणयोः अङित्" इति चतुर्थसन्धिगतचतुर्थसूत्रस्य वृत्तौ प्रोक्तत्वात् अत्र 'आ छायायाम्' इति प्रयोगे आकारः अङित् बोध्यः ।

३. 'छकारस्य द्वित्वे सति उपान्त्यह्रस्वस्वराभावात्' इति अध्याहार्यं प्रतिभासते ।

४. "पदान्ते अपदान्ते च" इति हैमवचनम् १।३।३०।

## र्हाभ्यामर्हं वा व्यञ्जनम् । २१ ।

स्वरात् पराभ्यां रेफ-हकाराभ्यां परं रेफ-हकारवर्जितं व्यञ्जनं द्विर्वा भवति ।

आर्य्यः, आर्यः । ब्रह्म्मा, ब्रह्मा । स्वराद् इति किम् ? अभ्रते । ह्नुते । र्हाभ्याम् इति किम् ? आस्यम् । अर्हम् इति किम् ? बर्हिः । दह्रः । अनु इत्येव—प्रोर्ण्णुनाव ॥२१॥

## अदीर्घाद् विराम-एकव्यञ्जने । २२ ।

अदीर्घात् स्वरात् परं रेफ-हकारवर्जितं व्यञ्जनं विरामे एकस्मिन् व्यञ्जने च परे द्विर्वा भवति ।

त्वक्क्, त्वक् । दद्ध्यत्र, दध्यत्र । 'अनु' इत्यधिकारात् कृत्वादौ कृते द्वित्वम् । अर्हमिति किम् ? चर्या । सह्यम् । अदीर्घाद् इति किम् ? सूत्रम् । विराम-एकव्यञ्जने इति किम् ? मृत्स्ना । विरामे द्वित्वविधानसामर्थ्यात् "पदस्य" [ना० द्विती० पादः सूत्र ६१] इति लोपो न भवति ॥ २२ ॥

## यञो वर्ग्यः । २३ ।

यञः परो वर्ग्यः वा द्विर्भवति । वृक्षव्व् करोति, वृक्षव् करोति । वल्म्मीकम्, वल्मीकम् । वर्ग्य इति किम् ? सेव्यम् ॥ २३ ॥

## ततो यञ् । २४ ।

ततो वर्ग्यात् परो यञ् वा द्विर्भवति । दध्य्यत्र, दध्यत्र । त्रप्व्वत्र, त्रप्वत्र । वर्ग्याद् इति किम् ? बाल्यम् ॥ २४ ॥

## शिटः प्रथम-द्वितीयौ । २५ ।

शिटः परौ प्रथम-द्वितीयौ द्विर्वा भवतः । कश्च्चरति, कश्चरति । त्वं क्ख्खनसि, त्वं खनसि । शिट इति किम् ? भवान् करोति ॥ २५ ॥

## ताभ्यां शिट् । २६ ।

ताभ्यां प्रथम-द्वितीयाभ्यां परः शिट् द्विर्वा भवति । तच् श्शेते, तच्शेते । वत्स्सः, वत्सः । ताभ्यामिति किम् ? भवान् साधुः ॥ २६ ॥

## न रात् स्वरे । २७ ।

रेफात् परः शिट् स्वरे परे द्विर्न भवति । अर्शः । कर्षम् । तर्सम्[1] । स्वर इति किम् ? कर्ष्ष्यते, कर्ष्यते ॥ २७ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ चतुर्थः सन्धिः समाप्तः ॥

*

---

१. अत्र श्रीहेमाचार्याः इदमुदाहरन्ति—"वार्स्यम् । कार्सरम्" । वृसी ऋषीणाम् आसनम् । वृस्या इदम् वार्स्यम् । कुसराया इदम् कार्सरम्—१।३।३७॥ 'तर्सम्' इत्यस्य पदस्य भावो न ज्ञायते ।

# पञ्चमः सन्धिः

## रो रे लुक् पूर्वस्य च अणो दीर्घः । १ ।

रेफस्य रेफे परे लुग् भवति, पूर्वस्य च अणो दीर्घः । अजर्घाः ।

हे माता रमते ॥ १ ॥

## ढः तड्ढे । २ ।

ढकारस्य तन्निमित्ते ढकारे परे लुग् भवति । पूर्वस्य च अणो दीर्घः ।

लीढम् । रूढम् । अण इति किम्? आतृढम् । तड्ढे इति किम्? गुडलिड् ढौकते ॥ २ ॥

## सहि-वहेः ओच अवर्णस्य । ३ ।

सहेः वहेश्च ढकारस्य तड्ढे परे लुग् भवति । पूर्वस्य च अवर्णस्य ओकारः—

सोढा । वोढा । अवोढाम् । अवर्णस्येति किम्? ऊढः ॥ ३ ॥

## व्यञ्जनात् यञ्-पञ्चमस्य सरूपे वा । ४ ।

व्यञ्जनात् परस्य यञः पञ्चमस्य च सरूपे परे लुग् वा भवति ।

आदित्यः, आदित्य्यः । कुञ्चो ङौ कुङ्ङौ, कुङ्ङ्ङौ । व्यञ्जनाद् इति किम्? अन्नम् । सरूप इति किम्? पित्र्यम् । केचित् "यञ्-पञ्चमस्य यञ्-पञ्चमे असरूपेऽपि लुचम् इच्छन्ति" [ ] अम्भ्रते, अम्भ्यते ॥ ४ ॥

## धुटः धुटि स्वे वा । ५ ।

व्यञ्जनात् परस्य धुटः धुटि परे स्वे लुग् भवति वा ।

भिन्तः, भिन्त्तः । धुट इति किम्? शार्ङ्गम् । धुटि इति किम्? सक्ष्ना । स्व इति किम्? तर्ता । व्यञ्जनाद् इति किम्? बोद्धा । 'वा' ग्रहणम् उत्तरत्र 'वा' अधिकार-निवृत्त्यर्थम् ॥ ५ ॥

## उदः स्था-स्तम्भः । ६ ।

उदः परस्य स्था-स्तम्भोर्धात्वोरवयवस्य धुटः धुटि परे लुग् भवति ।

उत्थाता । उत्तम्भिता । उदः परस्य इति किम्? उदस्थात् । धुटि इति किम्? उत्तिष्ठति । स्कन्देः 'उत्कन्दको रोगः' इति पृषोदरादिः ॥ ६ ॥

---

१. किम्? स अञम् पा० पू० ।

**तृतीयः तृतीय-चतुर्थयोः । ७ ।**

धुटः स्थाने तृतीये चतुर्थे च परे तृतीयः आदेशो भवति ।

मज्जति । बोद्धा । तृतीय-चतुर्थयोः इति किम्? वृत्तम् ॥ ७ ॥

**अघोषे प्रथमः अशिटः । ८ ।**

अघोषे परे अशिटः धुटः प्रथमो भवति ।

देवच्छत्रम् । गुडलिट् तरति । लप्स्यते । अघोष इति किम्? भग्यते । अशिट इति किम्? आगमश् शोभते ॥ ८ ॥

**श्चुना योगे स्तोः श्चु । ९ ।**

सकारस्य शकारेण चवर्गेण च योगे शकारो भवति तवर्गस्य च चवर्गः ।

आगमश् शोभते । तपश्चरति । मज्जति । तवर्गस्य—तच् शोभते । तच् चरति । तच् छादयति । भवाञ् जयति । राज्ञः ॥ ९ ॥

**ष्टुना ष्टु । १० ।**

सकारस्य षकारेण टवर्गेण च योगे षकारो भवति, तवर्गस्य च टवर्गः ।

कष्षण्डे । कष्टीकते । तवर्गस्य – पेष्टा । तट्टीकते । तट्टकारेण । भवाण्णकारेण । अट्टति ॥ १० ॥

**न शात् । ११ ।**

शकारात् परस्य श्चुत्वं न भवति ।

अश्नाति ॥ ११ ॥

**पदान्ते टोः अनाम्-नगरी-नवतेः । १२ ।**

पदान्ते वर्तमानात् टवर्गात् परस्य ष्टुत्वं न भवति, नाम्-नगरी-नवतिशब्दान् वर्जित्वा ।

मधुलिट् सीदति । षण्नयाः । टोः इति किम्? चतुष्टयम् । पदान्ते इति किम्? ईट्टे । अनाम्-नगरी-नवतेः इति किम्? षण्णाम् । षण्णगरी । षण्णवतिः ॥ १२ ॥

**तोः षि । १३ ।**

तवर्गस्य पदान्ते वर्तमानस्य षकारे परे ष्टुत्वं न भवति ।

अग्निचित् षडिकः । महान् षण्डः । तोः इति किम्? कष्षण्डे ॥ १३ ॥

## लि लौ । १४ ।

तवर्गस्य पदान्ते वर्तमानस्य स्थानिनः प्रत्यासत्त्या लकारे परे लौ सानुनासिक-निरनुनासिकरूपौ भवतः ।

तल्लुनाति । भवाँल्लिखति ॥ १४ ॥

## हः तृतीयात् चतुर्थो वा । १५ ।

पदान्ते वर्तमानात् तृतीयात् परस्य हकारस्य प्रत्यासत्त्या पूर्वचतुर्थो वा भवति ।

वागघीनः, वागहीनः अज्झलौ, अजहलौ । षड्ढलानि, षड् हलानि । तद्धितम्, तद्हितम् । त्रिष्टुब्भुतम्, त्रिष्टुब्हुतम् । तृतीयात् इति किम्? भवान् हरति ॥ १५ ॥

## शस्य अधुटि प्रथमात् छः । १६ ।

पदान्ते वर्तमानात् प्रथमात् परस्य शकारस्य अधुटि परे छकारो वा भवति ।

वाक्छूरः, वाक्शूरः । तच्छ्मशानम्, तच्श्मशानम् । अधुटि इति किम्? वाक् श्च्योतति । प्रथमात् इति किम्? भवान् शोभनः ॥ १६ ॥

## शिटि ङः कक् । १७ ।

पदान्ते वर्तमानस्य ङकारस्य शिटि परे कक् आगमो भवति वा ।

क्रुङ्क् छेते, क्रुङ् शेते । शिटि इति किम्? प्राङ् करोति ॥ १७ ॥

## णः टक् । १८ ।

पदान्ते वर्तमानस्य णकारस्य शिटि परे टक् आगमो भवति वा ।

सुगण्ट् छेते, सुगण् शेते ॥ १८ ॥

## डः सः अश्चः तट् । १९ ।

पदान्ते वर्तमानात् डकारात् परस्य सकारस्य तट् आगमो वा भवति । न चेत् स सकारः श्चसंयोगावयवो भवति ।

मधुलिड्त् सीदति, मधुलिड् सीदति । अश्च इति किम्? षट् श्च्योतन्ति ॥ १९ ॥

## नः । २० ।

पदान्ते वर्तमानात् नकारात् परस्य सकारस्य श्चसंयोगावयववर्जितस्य तट् आगमो वा भवति ।

महान्त् संसदि, महान् संसदि । अश्च इति किम्? भवान् श्च्योतति ॥ २० ॥

## शि चक् । २१ ।

पदान्ते वर्तमानस्य नकारस्य श्वसंयोगावयववर्जिते शकारे परे चक् आगमो वा भवति ।

कुर्वञ्च् शेते, कुर्वञ् शेते । अश्व इति किम् ? भवान् श्च्योतति । चकारविधान-सामर्थ्यात् चकः कुत्वं न भवति ॥ २१ ॥

## नॄनः पे वा रक् । २२ ।

'नॄन्' इत्येतस्य नकारस्य पदान्ते वर्तमानस्य पकारे परे रक् आगमो भवति वा।[1]

नॄः पाहि, नॄन् पाहि । 'वा' ग्रहणम् उत्तरत्र 'वा' अधिकारनिवृत्त्यर्थम् ॥ २२ ॥

## द्वित्वे कानः कानि सक् । २३ ।

द्वित्वे सति 'कान्' इत्येतस्य नकारस्य कानि परे सक्[2] आगमो भवति ।

कांस्कान् । सको विधानसामर्थ्यात् रिर्न भवति । अन्यथा 'रक्' एव अनुवर्त्येत ॥२३॥

## पुमः अघोषे अशिटि अधुट्परे । २४ ।

'पुम्' इत्येतदन्तस्य पदान्ते वर्तमानस्य अधुट्परे अशिटि अघोषे परे सैक् आगमो भवति ।

पुंस्कोकिलः । पुंस्खननम् । अघोष इति किम् ? पुंदासः । अशिटि इति किम् ? पुंशरः । अधुट्परे इति किम् ? पुंक्षुरः ॥ २४ ॥

## नः अप्रशानः च-छ-ट-ठ-त-थे । २५ ।

'प्रशान्' शब्दवर्जितस्य नकारस्य पदान्ते वर्तमानस्य च-छ-ट-ठ-त-थेषु अधुट्परेषु सैक् आगमो भवति ।

भवांश्चरति । भवांश्छादयति । भवांष्टीकते । भवांष्ठकारेण । भवांस्तरति । भवांस्थुडति । अप्रशान इति किम् ? प्रशान् चरति । अधुट्पर इति किम् ? भवान्त्सरुकः । पदान्त इति किम् ? भवन्तः ॥ २५ ॥

## रः सः अशिट्परे । २६ ।

पदान्ते वर्तमानस्य रेफस्य अशिट्परेषु च-छ-ट-ठ-त-थेषु[3] परेषु सकारादेशो[4] भवति ।

---

१. अत्र श्रीहेमाचार्याः रकारम् आदेशं निर्दिशन्ति तथा रकारात् पूर्वस्य अनुस्वार-अनुनासिकौ च भवतः इत्यपि सूचयन्ति । उदाहरन्ति च —नॄं×पाहि, नॄँ×पाहि, नॄन् पाहि —।१।३।१०।

२. अत्रापि सर्वत्र श्रीहेमाचार्याः सकारम् आदेशं कथयन्ति पूर्वस्य च अनुस्वार-अनुनासिकौ । १।३।११-९-८ । ३. -षु सकारा-पा० । ४. पूर्वसूत्रेषु आगमविधानात् तस्यैव च अनुवर्तनात् अत्र अधस्तात्र श्रीमलयगिरिसूरिः 'सकारादेशम्' इति कथं कथयितुं शक्तः ? इति न गम्यते ।

कश्चरति । कश्छादयति । कष्टीकते । कष्टकारेण । कस्तरति । कस्थुडति । अशिट्पर इति किम् ? पुरुषः त्सरुकः ॥ २६ ॥

### श-ष-से वा अघोषपरे तु लुक् च । २७ ।

पदान्ते वर्तमानस्य रेफस्य ,अशिट्परेषु श-ष-सेषु परेषु सकारादेशो भवति, अघोषपरेषु तु लुक् च वा ।

कश्शेते, कः शेते । कष्षण्डे, कः षण्डे । कस्साधुः, कः साधुः । चेतस्स्खलति, चेत स्खलति, चेतः स्खलति । अशिट्पर इति किम् ? कः श्शाकारः ॥ २७ ॥

### क-ख—प-फयोः ᳵक-ᳶपौ । २८ ।

पदान्ते वर्तमानस्य रेफस्य क-खयोः प-फयोश्च परयोः अशिट्परयोः यथासंख्यं ᳵक ᳶप इत्यादेशौ भवतः वा ।

कᳵ करोति, कः करोति। कᳵ खनति, कः खनति । कᳶ पचति, कः पचति । कᳶ फलति, कः फलति । अन्तᳵ करोति, अन्तः करोति । अशिट्पर इति किम् ? वासः क्षौमम्। ककार-पकार-अकारा उच्चारणार्थाः ॥ २८ ॥

### गतेः तिरसः सुः । २९ ।

गतिसंज्ञकस्य 'तिरस्' शब्दस्य संबन्धिनो रेफस्य अशिट्परेषु क-ख-प-फेषु परेषु 'सुः' आदेशो वा भवति ।

तिरस्कृत्य, तिरःकृत्य । गतेरिति किम् ? तिरः कृत्वा—तिर्यग् इत्यर्थः ॥ २९ ॥

### नमस्-पुरसः । ३० ।

अनयोर्गतिसंज्ञकयोः संबन्धिनो रेफस्य अशिट्परेषु क-ख-प-फेषु परेषु 'सुः' आदेशो भवति ।

नमस्कृत्य । पुरस्कृत्य । गतिसंज्ञकयोरिति किम् ? पुरः करोति—नगरीः इत्यर्थः । पृथग्योगो नित्यार्थः ॥ ३० ॥

### चतुर्-निर्-दुर्-बहिर्-आविस्-प्रादुसः । ३१ ।

एषां रेफस्य अशिट्परेषु क-ख-प-फेषु 'सुः' आदेशो भवति [illegible]

चतुष्काण्डकम् । चतुष्पात्रम् । निष्करोति । निष्पिबति । दु[illegible]रोति । दुष्पिबति । बहिष्करोति । बहिष्पिबति । आविष्करोति। आविष्पिबति । प्रादुष्करोति [illegible] ॥

---

१. अत्र सर्वत्र श्रीहेमाचार्याः 'अशिट्परेषु' इति न निर्दिशन्ति—२।३।१ इत्यतः सर्वत्र सविधानप्रकरणे ।

## सुचः वा । ३२ ।

'सुच्' प्रत्ययान्तस्य संबन्धिनो रेफस्य अशिट्परेषु क-ख-प-फेषु परेषु सुः आदेशो वा भवति ।

द्विष्करोति, द्विः करोति । चतुष्पिबति, चतुः पिबति । 'चतुः'शब्दस्य सुजन्तस्य परत्वाद् अनेन विकल्पः । अशिट्पर इति किम्? द्विः क्षरति ॥ ३२ ॥

## इस्-उसः व्यपेक्षायाम् । ३३ ।

इस्-उस्प्रत्ययान्तस्य संबन्धिनो रेफस्य अशिट्परेषु क-ख-प-फेषु परेषु 'सुः' आदेशो भवति वा । स्थानि-निमित्ते चेत् पदे परस्परव्यपेक्षायां भवतः ।

सर्पिष्करोति, सर्पिः करोति । सर्पिष्पिबति, सर्पिः पिबति । धनुष्खण्डयति, धनुःखण्डयति । इस्-उसोः प्रत्यययोर्ग्रहणात् इह न भवति । मुनिः करोति । मुहुः पठति । इसा साहचर्याद् उसः अतिवादेर्ग्रहणात् इह न भवति । भिन्धुः पापानि । व्यपेक्षाया-मिति किम्? तिष्ठतु सर्पिः पिब त्वमुदकम् । परमसर्पिः कुण्डम् । व्यपेक्षा हि भिन्नपद-विषयत्वाद् वाक्ये एव भवति—इति ऐकपद्ये न भवति ॥ ३३ ॥

## न अक्रियापदैकार्थे । ३४ ।

इस्-उस्प्रत्ययान्तस्य संबन्धिनो रेफस्य अशिट्परेषु क-ख-प-फेषु क्रियापद-वर्जितसमानाधिकरणपदस्थेषु परेषु 'सुः' आदेशो न भवति व्यपेक्षायाम् ।

सर्पिः कालकम् । यजुः पीतकम् । अक्रियापद-इति किम्? सर्पिष्क्रियते, सर्पिःक्रियते । एकार्थे इति किम्? सर्पिष्कुम्भे, सर्पिः कुम्भे ॥ ३४ ॥

## असमस्तस्य समासे । ३५ ।

पूर्वेण असमस्तस्य इस्-उस्प्रत्ययान्तस्य संबन्धिनो रेफस्य अशिट्परेषु क-ख-प-फेषु 'सुः' आदेशो भवति, स्थानि-निमित्ते चेद् एकत्र समासे भवतः ।

सर्पिष्कुण्डम् । धनुष्खण्डम् । समास इति किम्? तिष्ठतु सर्पिः पिब त्वमुदकम् । असमस्तस्य इति किम्? परमसर्पिः कुण्डम् । इस्-उस्ग्रहणे "प्रत्ययः प्रकृत्यादेः" [ ] इति नियमो न लभ्यते, तत्र इदमेव लिङ्गम् तेन व्यपेक्षायां समस्तस्यापि भवति । परमसर्पिष्करोति । इह च बहुसर्पिष्कुण्डम्-इति ॥ ३५ ॥

## शिरस्-अधसः पदे । ३६ ।

पूर्वेण असमस्तयोः शिरस्-अधस्शब्दयोः संबन्धिनः रेफस्य पदशब्दे परे 'सुः' आदेशो भवति, स्थानि-निमित्ते चेद् एकत्र समासे भवतः ।

शिरस्पदम् । अधस्पदम् । पदे इति किम् ? शिरःखण्डम् । समास इति किम् ? अधः पदम् । असमस्तस्य इति किम् ? परमशिरःपदम् ॥ ३६ ॥

## कृ-कमि-कंस-कुशा-कुम्भ-कर्णी-पात्रे अतः अनव्ययस्य । ३७ ।

अनव्ययस्य पूर्वेण असमस्तस्य संबन्धिनः रेफस्य अकारात् परस्य कृ-कमि-आदिषु परेषु 'सुः' आदेशो भवति, स्थानि-निमित्ते चेद् एकत्र समासे भवतः ।

अयस्कृत् । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुशा । पयस्कुम्भः । पयस्कर्णी । अयस्पात्रम् । "नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" [ न्यायसंग्रहे न्याय १६ ] अयस्पात्री। अत इति किम् ? भाःकरणम् । अनव्ययस्य इति किम् ? पुनःकरणम्। असमस्तस्य इति किम् ? परमयशःकामः । समासे कृ-कम्यादीनामुत्तरपदत्वविज्ञानाद् इह न भवति । पयसः कुम्भकपालम् पयःकुम्भकपालम् । अत्र हि 'कुम्भकपाल' इत्येतावद् उत्तरपदम् न कुम्भशब्दः ॥ ३७ ॥

## प्रत्यये । ३८ ।

अनव्ययस्य संबन्धिनः रेफस्य अशिट्परेषु क-ख-प-फेषु प्रत्ययस्थेषु 'सुः' आदेशो भवति ।

पयस्कल्पम् । गीष्पाशा । अनव्ययस्य इति किम् ? प्रातःकल्पम् ॥ ३८ ॥

## रेः काम्ये । ३९ ।

काम्यप्रत्यये परे रिरूपस्यैव रेफस्य 'सुः' आदेशो भवति ।

यशस्काम्यति । पूर्वेणैव सिद्धे नियमार्थो योगः— इह न भवति— धूः काम्यति । अहः काम्यति ॥ ३९ ॥

## नाम्नः ह्रस्वात् तादौ । ४० ।

नाम्नो विहिते तकारादौ प्रत्यये परे ह्रस्वात् परस्य रेफस्य 'सुः' आदेशो भवति ।

सर्पिष्टरम् । नाम्नः इति किम् ? चक्षुस्तराम् । ह्रस्वादिति किम् ? [1]गीस्तरा । प्रत्यय इति किम् ? सर्पिस्तरति ॥ ४० ॥

## निसः अनासेवायां तपतौ । ४१ ।

आसेवा पुनः पुनः करणम्, तदभावः अनासेवा, तस्यां गम्यमानायां निसः संबन्धिनः रेफस्य तकारादौ तपतौ परे 'सुः' आदेशो भवति ।

---

१. गीस्तराम् पा० ।

निष्टपति सुवर्णं सुवर्णकारः । निष्टप्ता अरातयः । अनासेवायाम् इति किम्? निस्तपति सुवर्णं सुवर्णकारः इति आसेवायाम् । तादौ इति किम्? निरतपत् । 'तिप्' निर्देशात् यङः श्लुचि न भवति—निस्तातपीति ।

" तिपा शपाऽनुबन्धेन निर्दिष्टं यद् गणेन च ।

एकस्वरनिमित्तं च पञ्चैतानि न यङ्श्लुचि ॥" [ न्यायसंग्रहे न्याय १८ ] ॥४१॥

## कस्क–आदयः । ४२ ।

एते 'कस्क' आदयः शब्दा रेफस्य अशिट्परेषु क-ख-प-फेषु 'सु' आदेशेन निपात्यन्ते ।

कस्कः । कौतस्कुतः । भ्रातुष्पुत्रः । शुनस्कर्णः । सद्यस्कालः । साद्यस्क्रम् । तमस्काण्डम् । अयस्कान्तः । अयस्पिण्डः । सर्पिष्कुण्डिका । यजुष्पात्रम् इति कस्कादिः, आकृतिगणश्चायम् अत एव बहुवचनम् ॥ ४२ ॥

## विसर्गः । ४३ ।

पदान्ते वर्तमानस्य रेफस्य विसर्गो भवति ।

कः करोति । 'तवर्षभः' 'मुखार्तः' 'नार्कुटः' 'नार्पत्यः' इति रेफस्य बहिरङ्गत्वाद् न भवति ॥ ४३ ॥

## न अविरामे घोषवत्-स्वरे । ४४ ।

घोषवति स्वरे च परे पदान्ते वर्तमानस्य रेफस्य विसर्गो न भवति, न चेत् स रेफो विरामे ।

साधुर्दयते । मुनिरयम् । अविराम इति किम्? अग्निः अत्र । अत एव 'अविरामे' इति वचनात् "न इतः प्राग् दशः" [ द्विती० सन्धिः सू० २१ ] इति विरामे न विसर्ग-प्रतिषेधः ॥ ४४ ॥

## वा अहर्पत्यादयः । ४५ ।

'अहर्पति' आदयः रेफस्य विसर्ग-उत्वभावा-ऽभावाभ्यां वा निपात्यन्ते ।

अहर्पतिः, अहःपतिः । गीर्पतिः, गीःपतिः । धूर्पतिः, धूःपति । हे प्रचेता राजन्!, हे प्रचेतो राजन्! ॥ ४५ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ पञ्चमः सन्धिः ॥

*

## नाम्नि प्रथमः पादः

### समः सटि सादौ लुग् वा । १ ।

समः अन्तस्य सकारादौ सटि परे लुग् वा भवति ।

सस्कर्ता, संस्कर्ता । सादौ इति किम्? सञ्चस्कार । समस्करोत् ॥ १ ॥

### अवर्ण-भो-भगो-अघोभ्यः रेः यः स्वरे । २ ।

अवर्णात् भो-भगो-अघोभ्यश्च परस्य रेः स्वरे परे यकार आदेशो भवति ।

कयास्ते । देवायासते । भोयत्र । भगोयत्र । अघोयत्र । स्वर इति किम्? कः करोति ॥ २ ॥

### लुग् गित् । ३ ।

अवर्ण-भो-भगो-अघोभ्यः परस्य रेः स्वरे परे लुग् भवति, स च गित् ।

क आस्ते । देवा आसते । भो अत्र । भगो अत्र । अघो अत्र । लुचो गित्वात् सन्धिकार्याभावः ॥ ३ ॥

### घोषवति । ४ ।

अवर्ण-भो-भगो-अघोभ्यः परस्य रेः घोषवति परे लुग् भवति ।

देवा यान्ति । भो हसति । भगो हसति । अघो हसति ॥ ४ ॥

### व्योः अवर्णात् । ५ ।

अवर्णात् परयोः वकार-यकारयोः घोषवति परे लुग् भवति ।

वृक्षवृश्चमाचक्षाणो वृक्षव्—वृक्ष हसति । अव्यय्—अव्य गच्छति । कुलाय्—कुला हसति ॥ ५ ॥

### स्वरे वा । ६ ।

अवर्णात् परयोः वकार-यकारयोः स्वरे परे लुग् भवति वा, सा च गित् ।

पट इह, पटविह । असा इन्दुः, असाविन्दुः । त आहुः, तयाहुः ॥ ६ ॥

### उत् अतः रेः अ-घोषवतोः । ७ ।

अकारात् परस्य रेः स्थाने अकारे घोषवति च परे उकारादेशो भवति ।

श्रमणोऽस्ति । धर्मो जयति । अहोभ्याम् । अत इति किम्? सुश्रोता ३ अत्र ।

सुश्रोता ३ देहि । रेः इति किम् ? अन्तर् अस्मि । अन्तर् दयते । अ-घोषवतोः इति किम् ? कः खनति ॥ ७ ॥

## तदः स्वरे लुक् पादपूरणे । ८ ।

'तद्'शब्दस्य संबन्धिनः अकारात् परस्य रेः स्थाने स्वरे परे लुग् भवति, लोपेन चेत् पादः पूर्यते ।

"सैष दाशरथी रामः सैष राजा युधिष्ठिरः" । पादपूरणे इति किम् ? "स एष भरतो राजा"[1] ॥ ८ ॥

## एतदश्च व्यञ्जने अनक्-नञ्समासे । ९ ।

तदः एतदश्च संबन्धिनः अकारात् परस्य रेः स्थाने व्यञ्जने परे लुग् भवति, अकि नञ्समासे च न ।

एष त्सरुकः । स क्षरति । परमैष करोति । परमस ददाति । व्यञ्जने इति किम् ? एषोऽस्मि । सोऽहम् । अनक्-नञ्समासे इति किम् ? एषकः करोति । सकः करोति । अनेषो गच्छति । असो गच्छति ॥ ९ ॥

## पञ्चतः नपः अनेकतरस्य अन्यादेः स्यमोर्दश् । १० ।

पञ्चपरिमाणस्य नपुंसकलिङ्गस्य अन्यादेः संबन्धिनोः स्यमोर्दश् आदेशो भवति, एकतरशब्दं वर्जित्वा[2] ।

अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् । हे अन्यत् । हे अन्यतरत् । पञ्चत इति किम् ? नेमं तिष्ठति । नेमं पश्य । नप इति किम् ? अन्यः पुरुषः । अन्यादेः संबन्धिनोः इति किम् ? प्रियान्यं तिष्ठति । प्रियान्यं पश्य । शकारः सर्वादेशार्थः । अकार उच्चारणार्थः ॥ १० ॥

## अतः अम् । ११ ।

अकारान्तस्य नपुंसकलिङ्गस्य संबन्धिनोः स्यमोः अम् आदेशो भवति ।

कुण्डं तिष्ठति । कुण्डं पश्य । 'म्' इत्यनुक्त्वा 'अम्' विधानं जरसर्थम्—अतिजरसं कुलम् । अत एव 'अम्'विधानात् संनिपातपरिभाषा[3] नोपतिष्ठते ॥ ११ ॥

## श्लुक् । १२ ।

नपुंसकलिङ्गस्य संबन्धिनोः स्यमोः श्लुग् भवति ।

---

१. "यो न्याय्ये पथि वर्तते" इत्यधिकम् शाक० अमोघवृ० १।१।१५९ । २. वर्जयित्वा पू० । ३. "सन्निपातलक्षणो विधिः अनिमित्तं तद्विघातस्य" इत्येवं सन्निपातपरिभाषा—(न्यायसंग्रहे न्याय १९, पृ० १९ ।)

दधि तिष्ठति । दधि पश्य । पयः तिष्ठति । पयः पश्य । शकारः सर्वादेशार्थः "श्लुचि" [ ] इति कार्यार्थश्च—तत् कुलम् । यत् कुलम् ॥ १२ ॥

## जरसो वा । १३ ।

जरसन्तस्य नपुंसकलिङ्गस्य संबन्धिनोः स्यमोः श्लुग् वा भवति ।

अतिजरसं कुलम्, अतिजरः कुलम् ॥ १३ ॥

## इकः लुग् च । १४ ।

इगन्तस्य नपुंसकलिङ्गस्य संबन्धिनोः स्यमोः श्लुक् लुग् च भवति ।

हे वारे !, हे वारि ! । हे कर्तः !, हे कर्तृ ! । प्रियतिसृ, प्रियत्रि कुलम् । इक इति किम् ? तत् कुलम् ॥ १४ ॥

## पुंवच्च अन्यतः टादौ स्वरे । १५ ।

इगन्तं शब्दरूपम् अन्यतः विशेष्यवशात् नपुंसकार्थं टादौ स्वरे परे वा पुंवद् भवति ।

ग्रामण्या, ग्रामणिना कुलेन । चित्रगुणे, चित्रगवे कुलाय । कर्तृणा, कर्त्रा कुलेन । अन्यतः इति किम् ? पीलुने फलाय । टादौ इति किम् ? ग्रामणिनी कुले । स्वर इति किम् ? ग्रामणिभ्याम् । इक इति किम् ? कीलालपेन कुलेन । चकारः 'वा' अनुकर्षणार्थः तन उत्तरत्र नानुवर्तते ॥ १५ ॥

## अस्थि-सक्थि-अक्षि-दध्नः अनङ् । १६ ।

'अस्थि' आदीनां नपुंसकलिङ्गानाम् इगन्तानां टादौ स्वरे परे 'अनङ्' अन्तादेशो भवति ।

अस्थ्ना । सक्थ्ना । अक्ष्णा । दध्ना । प्रियास्थ्न्या शुन्या । स्वरे इति किम् ? अस्थिभ्याम् । नपुंसकानाम् इति किम् ? दधिर्नाम कश्चित् धानशीलो वा—तस्मै दधये ॥ १६ ॥

## नम् स्यादौ । १७ ।

इगन्तस्य नपुंसकलिङ्गस्य तत्संबन्धिनि स्वरादौ स्यादौ परे नम् भवति ।

वारिणी । वारीणाम् । स्यादौ इति किम् ? तौम्बुरवं चूर्णम् । तत्संबन्धिनि इति किम् ? निर्वारी कूपौ । स्वर इति किम् ? हे त्रपो ! । इक इति किम् ? कुण्डे ॥ १७ ॥

## स्वरात् शौ । १८ ।

स्वरान्तात् नपुंसकलिङ्गात् विहिते शौ परे नम् भवति ।

वनानि । कर्तॄणि कुलानि । स्वरात् इति किम् ? चत्वारि अहानि ॥ १८ ॥

## धुटाम् । १९ ।

स्वरात् परा या धुट्जातिः तदन्तस्य नपुंसकस्य शौ परे अन्त्यात् स्वरात् परो नम् भवति ।

उदश्विन्ति । पयांसि । काष्ठतक्षि कुलानि । स्वरात् इति किम् ? बहूर्जि कुलानि । बहुवचनं धुट्जातिप्रतिपत्त्यर्थम् ॥ १९ ॥

## ततः प्राग् वा । २० ।

धुट्जात्यन्तस्य नपुंसकस्य शौ परे ततो धुट्जातेः प्राग् वा नम् भवति ।

बहूर्ञ्जि बहूर्जि कुलानि । सुवल्ञ्गि सुवल्गि कुलानि ॥ २० ॥

## अवर्णात् अश्नः शतुर्वा ङी-ग्योः । २१ ।

श्नावर्जिताद् अवर्णात् परस्य शतृप्रत्ययस्य ङी-ग्योः परयोर्वा नम् भवति ।

तुदन्ती, तुदती स्त्री । तुदन्ती, तुदती कुले । करिष्यन्ती, करिष्यती स्त्री, कुले वा । भान्ती, भाती स्त्री, कुले वा । अवर्णात् इति किम् ? सुन्वती स्त्री । सुन्वती कुले । अश्न इति किम् ? क्रीणती स्त्री । क्रीणती कुले । अत एव अवर्णात् परः शता भूतपूर्वतया द्रष्टव्यः ॥ २१ ॥

## शप्-श्यात् । २२ ।

शपः श्याच्च परस्य शतृप्रत्ययस्य ङी-ग्योः परयोः नम् भवति ।

भवन्ती स्त्री । भवन्ती कुले । दीव्यन्ती स्त्री । दीव्यन्ती कुले । नित्यार्थं वचनम् ॥ २२ ॥

## न द्व्युक्ति-जक्षपञ्चतो नम् । २३ ।

द्विरुक्तात् जक्षपञ्चतश्च परस्य शतृप्रत्ययस्य सर्वोऽपि नम् न भवति ।

ददती स्त्री । ददती कुले । ददत्, ददतौ । दधत् । जक्षत् । दरिद्रत् । जाग्रत् । चकासत् । शासत् । नमि अनुवर्तमाने पुनर् 'नम्' ग्रहणं 'नम्'मात्रप्रतिषेधार्थम् ॥२३॥

---

१. 'शतृ'शब्दस्य प्रथमैकवचनम् । तुद् + श + अतृ इति अवस्थायां तुद + अतृ इति जाते 'तुद'रूपस्य अकारलोपे तुद् + अतृ = तुदतृ इति-स्थिते इदं सूत्रं कथं प्रवर्तते ? यतः अत्र अतृप्रत्ययः अवर्णात् परो न वर्तते इति जिज्ञासायाम् आह- भूतपूर्वतया शता प्रत्ययः अवर्णात परो बोध्यः ।

## शौ वा । २४ ।

द्व्युक्तेः जक्षपञ्चतश्च परस्य शतृप्रत्ययस्य शौ परे नम् भवति वा ।

ददन्ति, ददति कुलानि । जक्षति, जक्षन्ति कुलानि ॥ २४ ॥

## परस्मै अन्तः अत् । २५ ।

द्व्युक्तेः जक्षपञ्चतश्च परस्य परस्मैपदविषयस्य 'अन्त्' इत्येतस्य अवयवस्य अत् इत्यादेशो भवति ।

ददति । ददत् । जक्षत् । जक्षति । जक्षतु ॥ २५ ॥

## इत्-उतः अस्त्रेः औतः गि-गु । २६ ।

इकारात् उकाराच्च परस्य औकारस्य यथासंख्यं गि गु आदेशौ भवतः, स्त्रीशब्दस्थम् इकारं वर्जित्वा[1] ।

मुनी तिष्ठतः । मुनी पश्य । साधू तिष्ठतः । साधू पश्य । इत्-उतः इति किम् ? नद्यौ । वध्वौ । अस्त्रेः इति किम् ? अतिस्त्रियौ पुरुषौ । 'अतिशस्त्री पुरुषौ' इति "अर्थवद्ग्रहणे नानर्थकस्य" [ न्यायसंग्रहे न्याय १४ ] इति प्रतिषेधो न भवति । इदमेव च 'अस्त्रेः' इति ज्ञापकम् 'इय्-उव्'अपवादेन 'इत्-उत्'कार्यमिति । तेन अतिस्त्रयः सहस्त्रयः इत्यादि सिद्धम् । गकारः "गित्" [च० सन्धिः सू० ३] इति सन्धिप्रतिषेधार्थः ॥२६॥

## जसि एङ् । २७ ।

इकारस्य उकारस्य च जसि परे यथासंख्यम् एङ् आदेशो भवति ।

मुनयः । साधवः । बुद्धयः । धेनवः ॥ २७ ॥

## सखि-पतेः ङिः औत् । २८ ।

आभ्यां परो ङिः औत् भवति ।

सख्यौ । पत्यौ ॥ २८ ॥

## नियः आम् । २९ ।

'नी'शब्दात् परः ङिः आम् भवति ।

नियाम् । ग्रामण्याम् ॥ २९ ॥

---

१. वर्जयित्वा पू० ।

## घेः ङौ । ३० ।

'घि'संज्ञकात् इकारात् उकाराच्च परो ङिः डौ भवति ।

मुनौ । साधौ । बुद्धौ । धेनौ ॥ ३० ॥

## टः अस्त्रिया ना । ३१ ।

अस्त्रीलिङ्गात् 'घि'संज्ञकात् इकारात् उकाराच्च परस्य टावचनस्य 'ना' आदेशो भवति ।

मुनिना । साधुना । अस्त्रिया इति किम् ? बुद्ध्या । धेन्वा । 'पुंसः' इति न कृतम् 'अमुना कुलेन' इति नपुंसके 'ना'भावार्थम् । नमि हि गुवर्णोऽसन् भवति । घेः इति किम् ? सख्या । पत्या ॥ ३१ ॥

## ङिति अदिति एङ् । ३२ ।

अदकारानुबन्धे ङिति स्यादौ परे 'घि'संज्ञकस्य इकारस्य उकारस्य च यथासंख्यम् एङ् भवति ।

मुनये । मुनेः[1] । मुनेः[2] । साधवे । साधोः । साधोः । बुद्धये । धेनवे । अदिति किम् ? बुद्ध्यै । बुद्ध्याः । स्यादौ इति किम् ? पट्वी ॥ ३२ ॥

## नपः जस्-शसोः शिः । ३३ ।

नपुंसकस्य संबन्धिनोः जस्-शसोः स्थाने शिः भवति ।

वनानि तिष्ठन्ति । वनानि पश्य । शकारः सर्वादेशार्थः ॥ ३३ ॥

## औतः गीः । ३४ ।

नपुंसकस्य संबन्धिनः औकारस्य गी इति आदेशो भवति ।

वने तिष्ठतः । वने पश्य । पयसी ॥ ३४ ॥

## आपः । ३५ ।

आबन्तस्य संबन्धिनः औकारस्य गी इति आदेशो भवति ।

शाले तिष्ठतः । शाले पश्य । 'आ+आप्-आप्' इति आकारप्रश्लेषात् इह न भवति—प्रियशालौ पुरुषौ ॥ ३५ ॥

---

१. पञ्चम्यन्तम् । २. षष्ठयन्तम् ।

## टा-ओसि एत् । ३६ ।

आबन्तस्य तत्संबन्धिनोः टा-ओसोः परयोः एकारः अन्तादेशो भवति ।

मालया । मालयोः ॥ ३६ ॥

## ङे-ङसि-ङस्-ङीनाम् यै-यास्-यास्-यामः । ३७ ।

आबन्तस्य संबन्धिनां ङे-ङसि-ङस्-ङीनां स्थाने यथासंख्यं यै-यास्-यास्-याम् इति आदेशा भवन्ति ।

मालायै । मालायाः । मालायाः । मालायाम् ॥ ३७ ॥

## सर्वादेः डस्पूर्वाः । ३८ ।

सर्वादेः आबन्तस्य संबन्धिनां ङे-ङसि-ङस्-ङीनां यै-यास्-यास्-यामः डस्पूर्वा भवन्ति ।

सर्वस्यै । सर्वस्याः । सर्वस्याः । सर्वस्याम् ॥ ३८ ॥

## इत्-उतः स्त्रिया वा दै-दास्-दास्-दामः । ३९ ।

स्त्रीलिङ्गात् इकारात् उकाराच परेषां ङे-ङसि-ङस्-ङीनां स्थाने यथासंख्यं दै-दास्-दास्-दाम् इत्यादेशा भवन्ति वा ।

बुद्ध्यै, बुद्धये । बुद्ध्याः, बुद्धेः । बुद्ध्याः, बुद्धेः । बुद्ध्याम्, बुद्धौ । धेन्वै, धेनवे । धेन्वाः, धेनोः । धेन्वाः, धेनोः । धेन्वाम्, धेनौ । पत्यै, पत्ये । प्रियबुद्ध्यै, प्रियबुद्धये स्त्रियै पुरुषाय वा । स्त्रिया इति किम्? मुनेः । साधोः ॥ ३९ ॥

## स्त्रीदूतः अपुंसः । ४० ।

असंभविपुमर्थात् स्त्रीलिङ्गात् ईकारान्तात् ऊकारान्ताच परेषां ङे-ङसि-ङस्-ङीनां स्थाने यथासंख्यं दै-दास्-दास्-दाम् इत्यादेशा भवन्ति ।

नद्यै । नद्याः । नद्याः । नद्याम् । वध्वै । वध्वाः । वध्वाः । वध्वाम् । लक्ष्म्यै । अतिवध्वै स्त्रियै पुरुषाय वा । स्त्रीदूत इति किम्? बुद्धये । अपुंस इति किम्? ग्रामण्ये, खलप्वे स्त्रियै ॥ ४० ॥

## वा इय्-उवः अस्त्रियाः । ४१ ।

'इय्-उव्'आदेशभाविनौ यौ ईकार-ऊकारौ तदन्तात् असंभविपुमर्थात् स्त्रीदूतः परेषां ङे-ङसि-ङस्-ङीनां स्थाने यथासंख्यं वा दै-दास्-दास्-दाम् इत्यादेशा भवन्ति, स्त्रीशब्दं वर्जयित्वा ।

श्रियै, श्रिये । श्रियाः, श्रियः । श्रियाः, श्रियः । श्रियाम्, श्रियि । भ्रुवै, भ्रुवे । भ्रुवाः, भ्रुवः । भ्रुवाः, भ्रुवः । भ्रुवाम्, भ्रुवि । अतिश्रियै, अतिश्रिये स्त्रियै पुरुषाय वा । इय्-उव इति किम् ? आध्यै । प्रध्यै । अस्त्रियाः इति किम् ? स्त्रियै । । अपुंसः इति किम् ? यवक्रिये, कटप्रुवे स्त्रियै ॥ ४१ ॥

## नाम् आमः । ४२ ।

'इय्-उव्'आदेशभावि-ईकार-ऊकारान्तात् असंभविपुमर्थात् स्त्रीवृत्तेः परस्य आमः षष्ठीबहुवचनरूपस्य स्थाने नाम् आदेशो वा भवति, स्त्रीशब्दं वर्जयित्वा ।

श्रीणाम्, श्रियाम् । भ्रूणाम्, भ्रुवाम् । पृथुश्रीणाम्, पृथुश्रियाम् । लम्बभ्रूणाम्, लम्बभ्रुवाम् । अस्त्रियाः इति किम् ? स्त्रीणाम् ॥ ४२ ॥

## सदित्-ईत्-ऊत्-नम्-ह्रस्व-आपः । ४३ ।

यतः ईकारात् ऊकाराच्च दै-दास्-दास्-दामः तौ सदितौ, तदन्तात्, नमन्तात्, ह्रस्वान्तात्, आबन्ताच्च परस्य आमः स्थाने नाम् आदेशो भवति ।

नदीनाम् । वधूनाम् । स्त्रीणाम् । लक्ष्मीणाम् । नम्—वारीणाम् । त्रपूणाम् । ह्रस्व—वृक्षाणाम् । मुनीनाम् । साधूनाम् । पितॄणाम् । आप्—शालानाम् । मालानाम् । 'नम्'ग्रहणं परानपि विधीन् नम् बाधते इति ज्ञापनार्थम्, तेन वारीणि इत्यादि सिद्धम् ॥४३॥

## र्-ष्-णां संख्यानाम् । ४४ ।

रेफान्त-षकारान्त-नकारान्तानां संख्यावाचिनां संबन्धिनः आमः स्थाने नाम् आदेशो भवति ।

चतुर्णाम् । परमचतुर्णाम् । षण्णाम् । पञ्चानाम् । सप्तानाम् । र्-ष्-णाम् इति किम् ? त्रिंशताम् । बहुवचनं षष्ठ्यभिव्यक्त्यर्थम् तेन तत्संबन्धिन एव भवति नान्यसंबन्धिनः—अतिचतुराम् ॥ ४४ ॥

## त्रेः त्रयः । ४५ ।

'त्रि'शब्दस्य 'आम्'संबन्धिनः स्थाने त्रय आदेशो भवति ।

त्रयाणाम् । परमत्रयाणाम् । 'आम्'संबन्धिविज्ञानात् इह न भवति—प्रियत्रीणाम् । 'तिसृणाम्' इत्यत्र स्पर्धेन बाधा ॥ ४५ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने नाम्नि प्रथमः पादः समाप्तः ॥

*

# नाम्नि द्वितीयः पादः

## धातोः गति-कारकसमस्त-अनेकस्वरस्य अतत्संयोगात् उवर्णः वः स्वरे । १ ।

धातोः गतिना कारकेण च समस्तस्य अनेकस्वरस्य च संबन्धिनः उवर्णस्य स्वरादौ स्यादौ परे वकार आदेशो भवति, न चेत् स उवर्णो धातोः अवयवात् संयोगात् परो भवति ।

सुल्वौ । सुल्वः । यवल्वौ । यवल्वः । वसु इच्छति क्यच्—वस्वौ । वस्वः । गतिकारकसमस्त-अनेकस्वरस्य इति किम् ? लुवौ । लुवः । अतत्संयोगात् इति किम् ? कटप्रुवौ । 'तत्'ग्रहणात् इह प्रतिषेधो न भवति-उल्ल्वौ । स्वरे इति किम् ? सुलु: । स्यादौ इति किम् ? लुलुवतुः ॥ १ ॥

## दृन्-पुनर्-कर-वर्षाभिः भुवः । २ ।

'दृन्'आदिभिः सह समस्तस्य भूधातोः ऊवर्णस्य स्वरादौ स्यादौ परे वकारादेशो भवति ।

दृन्भ्वौ । पुनर्भ्वौ । करभ्वौ । एकदेशविकृतस्य अनन्यत्वात् कारभ्वौ । वर्षाभ्वौ । 'दृन्'आदिभिः किम् ? स्वयंभुवौ । 'दृन्'आदिभिः पूर्वेणैव सिद्धे[द्धेम्] तेषां नियमार्थं वचनम् ॥२॥

## इवर्णस्य असुधी-इणः प्रत्यये यः । ३ ।

गति-कारकसमस्तस्य अनेकस्वरस्य च धातोः सुधी-इण्वर्जितस्य संबन्धिनः इवर्णस्य स्वरादौ प्रत्यये परे यकार आदेशो भवति, न चेत् स इवर्णः तस्य धातोः अवयवात् संयोगात् परः स्यात् ।

सुन्यौ । सुन्यः । सेनान्यौ । सेनान्यः । ऌन्युः । पून्युः । चिच्ये । निन्ये । असुधी-इणः इति किम् ? सुधियौ । सुधियः । ईयतुः । ईयुः । अत एव इणः प्रतिषेधात् "प्रकृति-प्रत्यययोः प्रत्ययकार्यं बलीयः" [ ] तेन इयादेशे कृते दीर्घः । गति-कारकसमस्त-अनेकस्वरस्य इति किम् ? नियौ । परमनियौ । अतत्संयोगात् इति किम् ? यवक्रियौ । शिश्रियतुः । 'तत्'ग्रहणात् इह प्रतिषेधो न भवति—उन्न्यौ ॥ ३ ॥

---

१. भुवौ । भुवः । पू० । २. प्रतिगतः पाठः । ३. "एतैरेव भुवः नान्यैः इति"—शाक० अमोघ-वृ० ।१।२।३९ । ४. "प्रत्यया-ऽप्रत्यययोः प्रत्ययस्यैव" इति न्यायसंग्रहे न्यायः २, पृ० ५३ ।

## शेषयोः उव्-इयौ । ४ ।

धातोः संबन्धिनोः शेषयोः उवर्ण-इवर्णयोः स्वरादौ प्रत्यये परे यथासंख्यम् उव् इय् इत्यादेशौ भवतः ।

लुवौ । नियौ । लुलुवतुः । शिश्रियतुः । नयनम्, लवनम् इत्यादौ परत्वात् गुणः । स्वर इति किम् ? लूभ्याम् । नीभ्याम् ॥ ४ ॥

## [ भ्रू-व्यञ्जनश्नोः ] । ५ ।

'भ्रू'शब्दस्य व्यञ्जनात् परस्य श्नोश्च संबन्धिनः उवर्गस्य स्वरादौ प्रत्यये परे उव् आदेशो भवति ।

भ्रुवौ । भ्रुवः । आप्नुवन्ति । व्यञ्जनग्रहणं किम् ? चिन्वन्ति । स्वरादौ इति किम् ? आप्नुतः । ५ ॥

## स्त्रियाः । ६ ।

स्त्रीशब्दस्य संबन्धिनः इवर्गस्य स्वरादौ प्रत्यये परे इय् आदेशो भवति ।

स्त्रियौ । अतिस्त्रियौ । 'स्त्रीणाम्' इत्यत्र नित्यत्वात् नाम् ॥ ६ ॥

## वा अम्-शसि । ७ ।

स्त्रीशब्दस्य संबन्धिनः इवर्णस्य अमि शसि च परे वा इय् आदेशो भवति ।

स्त्रियम्, स्त्रीम् । स्त्रियः, स्त्रीः । अतिस्त्रियम्, अतिस्त्रीम् । अतिस्त्रियः, अतिस्त्रीः ॥ ७ ॥

## अवर्णस्य अदसः दः मः अस्माद् वर्णो गुवर्णश्च अषि-नि असन् । ८ ।

अदसः अवर्गान्तस्य संबन्धिनः दकारस्य मकारो भवति, अस्माच्च मकारात् परो वर्णः गुवर्णः, स च षेः 'ना'भावाच्च अन्यस्मिन् कार्ये असन् ।

अमुम् । अमू । अवर्णस्य इति किम् ? अदः कुण्डम् । प्रियादसौ । चकारः संनियोगशिष्टतार्थः, तेन उत्तरत्र गुवर्णो न विकल्प्यते । अषि-नि इति किम् ? अमुष्मै । अमुना । असन् इति किम् ? अमुया । 'असन्' इति अधिकारः 'न ऊर्म्यादिभ्यः' [ ना० द्विती० पादः सू० ७३ ] इति यावत् ।

---

१. आदर्शद्वयेऽपि नैतत् मूलसूत्रम् तथापि वृत्त्यनुसारेण योजितमेतत् । "भ्रू-श्नोश्च इयुवौ" ।१।२।४१। इति शाकटायनसूत्रम् ।

असत्त्वेऽमू, सुकर्माणः, पिपठीः, मुमुद्, औजिढत् ।
गुडलिण्मान्, भवान्, इष्टम्, राजभिश्च इति सिध्यति ॥ ८ ॥

**वा अद्रेः । ९ ।**

अद्र्यन्तस्य अदसः दकारस्य यथासंभवं विकल्पेन मकारादेशो भवति, अस्माच्च मकारात् परो गुवर्णः, स च असन् ।

अमुद्र्यङ् । अदमुयङ् । अमुमुयङ् । अदद्र्यङ् ॥ ९ ॥

**मीः बहुषु एः । १० ।**

बहुषु वर्तमानस्य अदसः मकारात् परस्य एकारस्य स्थाने 'मीः' इत्यादेशो भवति ।

अमी । अमीभिः । बहुषु इति किम्? अमू कुले कन्ये वा । माद् इति किम्? अमुकेभ्यः ॥ १० ॥

**नः लुक् स्याद्याश्रये । ११ ।**

स्यादौ परे पूर्वस्य स्यादेश्च कार्ये कर्तव्ये नकारस्य लुक् असती च भवति ।

राजभ्याम् । राजभिः । स्याद्याश्रय इति किम्? राजीयति । 'वृत्रहभ्याम्' इत्यत्र "असिद्धं बहिरङ्गमन्तरङ्गे" [ न्यायसंग्रहे न्याय २०, पृ० २० ] इति तक् न भवति । 'स्याद्याश्रय एव' इति नियमार्थं वचनम् ॥ ११ ॥

**परे । १२ ।**

इतः ऊर्ध्वम् 'न ऊर्म्यादिभ्यः' [ ना० द्विती० पादः सू० ७३ ] इत्यतः प्राक् वक्ष्यमाणो विधिः परस्मिन् कार्ये असन् वेदितव्यः ।

पिपठीः । गुडलिण्मान् । पर इति किम्? सर्पिष्टरम् । 'काष्ठतट्' इत्यादौ स्कोर्लुक्, असति न भवति, वचनात् ॥ १२ ॥

**र-षात् नः णः । १३ ।**

परिभाषा इयम् स्थान-निमित्तनियमार्था । इह शास्त्रे यः णः विधेयः स सर्वः

---

१ "'काष्ठतट्' इति अपवादः वचनप्रामाण्यात्"-शाक० अमोघवृ० । १ । २ । ४९ । अत्र 'काष्ठतक्ष्' इति अवस्थायां [ "संयोगस्य" ना० सू० ६२ ] इत्यनेन 'क्ष्' इत्यत्र आदिस्थस्य ककारस्य लोपे 'काष्ठतष्' इति जाते [ "धुटः तृतीयः" ना० सू० ४६ ] इत्यनेन षस्य डत्वे ततश्च डस्य टत्वे 'काष्ठतट्' इति सिध्यति । अत्र "संयोगस्य" इत्यादिना कलोपस्य असत्त्वे ["पदस्य" ना० सू० ६३ ] इत्यनेन 'ष्'लोपः कथं न स्यात्? इति प्रश्ने वचनात्-वचनप्रामाण्यात् 'ष्' लोपो न भवति इति आशयः ।

रेफात् षकाराच्च नकारस्य स्थाने वेदितव्यः, इतश्च परस्मिन् कार्ये असन् ।

"अभिन्ने णः" [ना० द्वितीo पादः, सू० २० ]—चतुर्णाम् । पूष्णः । र-षात् इति किम् ? यज्वना ।

"णोऽस्रोः"-रविणागः[1]।

र-षात् इति किम् ? देवनागः ॥ १३ ॥

## न क्षुभ्नादीनाम् । १४ ।

एषां नकारस्य णो न भवति ।

क्षुभ्नाति । तृप्नोति ।

क्षुभ्ना । तृप्नु । आचार्यानी । आचार्यभोगीन । युवन् । अहन् । पक्व । नृनमन । सर्वनामन् । नट । नद । नगर । नृत्त । नदी । निवेश । निवास । अग्नि । अनूप । नन्दिन् । नन्दन । नर्तन । गहन । नदन ।

"अन्तरः अयन-हनो देशे"[2] इत्यादि ॥ १४ ॥

## नृतेः यङः । १५ ।

नृतेर्धातोः यङन्तस्य नः णः न भवति ।

नरीनृत्यते । नरिनर्ति ॥ १५ ॥

## हनः घ्यन्तरे । १६ ।

हनेः घकारे स्थानि-निमित्तयोर्व्यवधायके सति नकारस्य णो न भवति ।

वृत्रघ्ना । घि इति किम् ? वृत्रहणौ ॥ १६ ॥

## श-चु-ल-टु-स-तौ । १७ ।

शकारे चवर्गे लकारे टवर्गे सकारे तवर्गे च स्थानि-निमित्तयोरन्तरे सति नकारस्य णो न भवति ।

शकारे—रशना । चवर्गे—अर्चनम् । लकारे—वृषलेन । प्रक्लृप्यमानम् । अत्रापि लकारेण व्यवधानम् स्वरभागमध्यगतलकारं हि लृवर्णं प्रतिजानते पूर्वे । टवर्गे—पृष्टेन ।दृढेन । करणेन । सकारे—रसना । तवर्गे—नर्तनम् । तीर्थेन । षकारात् अव्यवधाने नकारस्य णः 'ष्टुना ष्टुः' [ पञ्च० सन्धिः सू० १० ] इत्येव सिद्धः इति तदुपादानात् अतः प्रतिषेधवचनात् वा अन्यस्मिन् अन्तरेऽपि भवति । पितॄणाम् । स्वरभागमध्यगतरेफं हि ऋवर्णं प्रतिजानते पूर्वे । ऋषिणा । बृंहणम् । उरःकेण । शुष्केण । अर्घेण । दर्पेण ॥ १७ ॥

---

१ वार्तिकवचनमेतत् । "'णोऽस्रोः' रविणागः, शूर्पणखा"—अमोघवृ० । १।२।५० । "णोऽस्रोः" इति शाकटायनीयसूत्रम् । २ । २ । १५९ । अतः 'रविणागः' इति उदाहरणं भवेत् इति कल्पना । २ "देशे अन्तरः अयन-हनः" । २।३।९१ । इति हेमचन्द्रीय सूत्रं णत्वनिषेधकम् ।

## अतद्धिते पदेऽनाङि । १८ ।

आङ्वर्जिते पदे स्थानि-निमित्तयोः अन्तरे सति नकारस्य णो न भवति, न चेत् तस्मात् पदात् परः तद्धितप्रत्ययः स्यात् ।

पर्यवनद्धम् । माषकुम्भवापेन । चतुरङ्गयोगेन । अनाङि इति किम्? प्राणद्धम् । अतद्धित इति किम्? आर्द्रगोमयेण ॥ १८ ॥

## अन्तस्य । १९ ।

पदे अन्तभूतस्य नकारस्य णो न भवति ।

वृक्षान् ॥ १९ ॥

## अभिन्ने णः । २० ।

'न' इति निवृत्तम् । रेफात् षकाराच्च परस्य नकारस्य णो भवति, न चेत् स नकारः निमित्तपदात् भिन्ने पदे भवति ।

तीर्णः । पूर्णः । प्रसज्यप्रतिषेधाश्रयणात् 'मेषनासिकः' इत्यादौ न भवति, अत्र हि समासपदस्य अभिन्नत्वेऽपि अवयवौ भिन्ने एव पदे । 'खारपायणः' इत्यादौ तु नकारः प्रत्ययस्थः न भिन्नपदस्थ इति भवत्येव ॥ २० ॥

## पूर्वपदस्थात् वा अन्त-स्यादि-नमः । २१ ।

पूर्वपदस्थात् रेफात् षकाराच्च परस्य उत्तरपदस्य अन्तभूतस्य, स्याद्यवयवस्य, नमश्च नकारस्य णो वा भवति ।

माषवापिणौ, माषवापिनौ । माषवापेण, माषवापेन । माषवापाणि, माषवापानि । पूर्वपदस्थात् इति किम्? कूपवारिणा, पुरुषकारेण इति अन्तरङ्गत्वान्नित्यमेव । अन्त-स्यादि-नम इति किम्? दाक्षीणां भगिनी दाक्षिभगिनी । 'आर्ययूना, प्रपक्वानि' इति क्षुम्नादित्वात् न भवति ॥ २१ ॥

## सकु-एकस्वरयोः । २२ ।

पूर्वपदस्थात् रेफात् षकाराच्च परस्य सकवर्गस्य एकस्वरस्य च उत्तरपदस्य अन्त-भूतस्य, स्याद्यवयवस्य, नमश्च नकारस्य नित्यं णकारो भवति ।

मोक्षगामिणौ । ऋषिमुखेण । क्षीरमेघाणाम् । एकस्वर—वृत्रहणौ । क्षीरपेण । माषपाणि ॥ २२ ॥

---

१ चतुर्दशतमं सूत्रं पादेऽस्मिन् ।

## क्तित्तादेशः अषि । २३ ।

क्तितः तकारस्य स्थाने यः आदेशः स षकारात् अन्यस्मिन् परे विधौ कर्तव्ये असन् भवति ।

क्षामिमान् । छ्न्युः । पून्युः । अपि इति किम् ? वृक्ण । वृक्णवान् । परे इति किम् ? लग्नः "अघोषे प्रथमः अशिटः" [ पञ्च० सन्धिः सू० ८ ] इति प्रथमो न भवति ॥२३॥

## कु-नामि-यञः सेः षिः । २४ ।

इयमपि परिभाषा स्थानि-निमित्तनियमार्था । य इह शास्त्रे षिर्विधास्यते स सर्वः कवर्गात् नामिनः यञश्च परस्य सकारस्य स्थाने वेदितव्यः । परस्मिश्च कार्ये असन् । "कृतस्य असक्-सातः अपद-बहोः षिः" [ ना० द्वितीं० पादः सू० ३० ]

वाक्षु । कुङ्क्षु । सर्पिषा । गीर्षु । कु-नामि-यञ इति किम् ? शालासु ॥२४॥

## एनि अकः । २५ ।

श्रीषेणः । कु-नामि-यञ इति किम् ? वीरसेनः ॥ २५ ॥

## शिट्-नमः अपि । २६ ।

इयमपि परिभाषा । कु-नामि-यञः परात् शिटः नमश्च अपि परस्य सकारस्य स्थाने षिर्भवति ।

सर्पिष्षु । धनुष्षु । सर्पींषि । 'नमे'ग्रहणं नम एव अनुस्वार यथा स्यात् तेन इह न भवति—पुंसु । 'निस्से' इत्यत्र कु नामि यञः परात् शिटः परो नास्ति इति न भवति ॥२६॥

## सिचः न यङि । २७ ।

सिचो धातोर्यङि परे षिः-आदेशो न भवति ।

सेसिच्यते । अभिसेसिच्यते । यङि इति किम् ? सिषेच । अभिषिषिक्षति ॥२७॥

## सुञः स्य-सनि । २८ ।

सुञः स्ये सनि च परे षिः-आदेशो न भवति ।

अभिसोष्यति । सुसूषति । स्य-सनि इति किम् ? सुषाव । अभिषुणोति ॥ २८ ॥

## सेधतेः गतौ । २९ ।

सेधतेः गतौ वर्तमानस्य षिः—आदेशो न भवति ।

अभिसेधति गाः । गतौ इति किम् ? प्रतिषेधति अकार्यात् ॥ २९ ॥

---

१ " 'नम्'ग्रहणम् अनुस्वारनियमार्थम् "—शाक० अमोघवृ० १ । २ । ६१ ।

## कृतस्य असक्-सातः अपद्-बहोः षिः । ३० ।

सक्-सात्वर्जितस्य कृतस्य सकारस्य षिः—आदेशो भवति, न चेत् सकारः पदात् बहुप्रत्ययाच्च परो भवति ।

वाक्षु । एषा । कृतस्य इति किम्? असिसेकत् । असक्-सातः इति किम्? दधिस्यति । मुनिसात्करोति । अत एव सातः प्रतिषेधात् "नाम सित्-अयव्यञ्जने" [ द्वि० सन्धिः सू० १० ] इति पदात् अप्रतिषेधः—अग्निषु । अपद-बहोः इति किम्? दधि-सेक् । बहुसेक् । 'मुनिस्तरति' इत्यादौ "सोः" [ ना० द्वितो० पादः सू० ३१ ] इति वचनस्य नियमार्थत्वात् "असिद्धं बहिरङ्गमन्तरङ्गे" [ न्यायसंग्रहे न्याय २०, पृ० २० ] इति न्यायाद् वा न भवति ॥ ३० ॥

## सोः । ३१ ।

सोः स्थाने षिर्भवति ।

द्विष्करोति । पूर्वेणैव सिद्धे पदान्ते नियमार्थम् "असिद्धं बहिरङ्गमन्तरङ्गे" [ न्याय-सग्रहे न्याय २०, पृ० २० ] इति न्यायाद अप्राप्तौ वा वचनम् ॥ ३१ ॥

## शासि-वसि-घसः । ३२ ।

एषां सकारस्य षिर्भवति ।

अशिषत् । उषितः । जक्षतुः । घसिः प्रकृत्यन्तरमस्ति इति उपात्तः ॥ ३२ ॥

## ष-ढोः कः से । ३३ ।

षकार-ढकारयोः सकारे परे ककारादेशो भवति, स च परस्मिन् विधौ असन् ।

पेक्ष्यति । लेक्ष्यति । से इति किम्? द्वेष्टि ॥ ३३ ॥

## भ्वादेः इकः दीर्घः अकुरु-छुरः वोः न-अतद्धितयव्यञ्जने । ३४ ।

कुरु-छुरवर्जितस्य भ्वादेः इकः तदवयवे वकारे रेफे च परे दीर्घो भवति, नकारे तद्धितयवर्जिते व्यञ्जने परे ।

प्रतिदीव्ना । शीर्णम् । धूर्वति । भ्वादेः इति किम्? चतुर्भिः । चतुर्यति । तद-वयवयोः इति किम्? दिवूना-दीव्यता इत्यर्थः । अकुरु-छुर इति किम्? कुर्यात् । छुर्यात् । 'कुरु' इति उकारः किम्? कुरत् शब्दे–कूर्यात् ।—अतद्धितय-इति किम्? गिर्यः । धुर्यः । तद्धितग्रहणं किम्? दीव्यति ॥ ३४ ॥

## पदान्ते । ३५ ।

भ्वादेः इकः वकारे रेफे च परे पदान्ते दीर्घो भवति ।

आशीः । गीर्षु ॥ ३५ ॥

## म्-वोश्च मः निः । ३६ ।

मकारस्य म्वादेः अन्तस्य पदान्ते मकार-वकारयोश्च परयोः नकार आदेशो भवति ।

प्रशान् । प्रशान्भिः । म्वोः—नंनन्मः । नंनन्वः । म्—वोश्च इति किम् ? प्रतामौ । म्वादेः इति किम् ? इदम् ॥ ३६ ॥

## नशेः गः वा । ३७ ।

नशेः पदान्ते वर्तमानस्य गः अन्तादेशो वा भवति ।

जीवनक् । जीवनग्भ्याम् । पक्षे जीवनट् । जीवनड्भ्याम् ॥ ३७ ॥

## ऋत्विज्-आदेः । ३८ ।

ऋत्विज्-आदेः पदान्ते गः अन्तादेशो भवति ।

ऋत्विग् । दिग् । पदान्त इति किम् ? ऋत्विजौ । दिशौ ।

ऋत्विज् । दिश् । स्पृश् । दधृष् । उष्णिह् । इति ऋत्विजादिः ॥ ३८ ॥

## सः अक्वसु-स्रंस्-ध्वंसः रिः । ३९ ।

क्वस्-स्रंस्-ध्वंस्वर्जितस्य सकारस्य पदान्ते वर्तमानस्य रिः आदेशो भवति ।

निजः । पयस्सु । अक्वसु-स्रंस्-ध्वंस इति किम् ? उपसेदिवत् कुलम् । उखास्रत् । पर्णध्वत् । पदान्त इति किम् ? पयसा ॥ ३९ ॥

## न दिपि । ४० ।

सकारस्य पदान्ते वर्तमानस्य दिपि परे रिर्न भवति ।

अचकात्, अन्वशात् भवान् ॥ ४० ॥

## सिपि द-धोः वा । ४१ ।

पदान्ते वर्तमानयोः द-धोः सकारस्य च सिपि परे रिर्वा भवति ।

अभिनस्त्वम्, अभिनत् त्वम् । अरुणस्त्वम्, अरुणत् त्वम् । अचकास्त्वम्, अचकात् त्वम् ॥ ४१ ॥

## सजुषः । ४२ ।

सजुषः पदान्ते रिः अन्तादेशो भवति ।

सजूः । सजूर्भ्याम् ॥ ४२ ॥

## अह्नः । ४३ ।

'अह्न्' शब्दस्य पदान्ते रिः अन्तादेशो भवति ।

अहः । अहोभ्याम् ॥ ४३ ॥

## रः अस्यादि-रूप-रात्रि-रथन्तरे स्वर-घोषवति । ४४ ।

'अह्न्'शब्दस्य पदान्ते स्यादि-रूप-रात्रि-रथन्तरवर्जिते स्वरे घोषवति च परे रः-अन्तादेशो भवति ।

अहरधीते । अहर्दधाति । अस्यादि-रूप-रात्रि-रथन्तर इति किम् ? अहोभ्याम् । अहोरूपम् । अहोरात्रः । अहोरथन्तरम् । स्वर-घोषवति इति किम् ? अहः करोति ॥ ४४ ॥

## रः सुपि । ४५ ।

रेफस्य सुपि परे रः-अन्तादेशो भवति । गीर्षु । धूर्षु । 'पयस्सु' इति रेः असत्त्वाद् न भवति । रेफस्य वचनं विसर्गबाधनार्थम् ॥ ४५ ॥

## धुटः तृतीयः । ४६ ।

धुटः पदान्ते वर्तमानस्य तृतीय आदेशो भवति ।

षड् । षड्भिः । वाग् । वग्भिः । उखास्रद् । पर्णध्वद् । पदान्ते इति किम् ? वाचौ ॥ ४६ ॥

## ग-ड-द-बआदेः चतुर्थान्तस्य एकस्वरस्य आदेश्चतुर्थः स-ध्वे च प्रत्यये । ४७ ।

ग-ड-द-बआदेः चतुर्थान्तस्य एकस्वरस्य शब्दावयवस्य आदेः चतुर्थ आदेशो भवति पदान्ते, सकारादौ ध्वशब्दादौ च प्रत्यये परे ।

पर्णधुट् । पर्णबुड्भ्याम् । तुण्डिभम् आचक्षाणः कुर्वाणो वा तुण्ढिप् । गोधुक् । स-ध्वे—भोत्स्यते । अभुग्ध्वम् । ग-ड-द-बआदेः इति किम् ? कुत् । क्रोत्स्यति । चतुर्थान्तस्य इति किम् ? सुगण् । दास्यति । एकस्वर इति किम् ? दामलिट् । स-ध्वे च—इति किम् ? धर्मबुधौ ॥ ४७ ॥

## धाञः धुटि । ४८ ।

धाञः चतुर्थान्तस्य दकारादेः धुडादौ प्रत्यये परे आदेः चतुर्थ आदेशो भवति ।

धत्तः । धत्थः । धत्ते । धत्से । धुटि इति किम् ? दध्वः । चतुर्थान्तस्य इति किम् ? दधाति ॥ ४८ ॥

**यंङः वा । ४९ ।**

धाञः यङ्लुगन्तस्य दकारादेश्चतुर्थान्तस्य धुडादौ प्रत्यये परे आदेश्चतुर्थो वा भवति ।

धात्तः । धात्थः । पक्षे दात्तः । दग्धः । धुटि इति किम् ? दाध्वः ॥ ४९ ॥

**धेटः चतुर्थात् त-थोः । ५० ।**

धेटः यङ्लुगन्तात् चतुर्थान्तात् परयोः तकार-थकारयोः चतुर्थो वा भवति ।

दाद्धः । दाद्धः । पक्षे दात्तः । दात्थः । धेट इति किम् ? धात्तः । धात्थः ॥५०॥

**अधः । ५१ ।**

दधातिवर्जात् चतुर्थात् परयोः तकार-थकारयोः चतुर्थो भवति ।

दोग्धा । लब्ध्वा । अध इति किम् ? धत्तः । धत्थः ॥ ५१ ॥

**नामिनः अद्यतनी-परोक्षा-आशिषो धः ढः । ५२ ।**

नामिनः परासाम् अद्यतनी-परोक्षा आशिषां संबन्धिनः धकारस्य ढकारादेशो भवति ।

अच्योढ्वम् । चकृढ्वे । चेषीढ्वम् । नामिन इति किम् ? पक्षीध्वम् । अद्यतनी–परोक्षा-आशिषामिति किम् ? स्तुध्वे ॥ ५२ ॥

**ह-यञः ञीङ्भ्यां वा । ५३ ।**

हकारात् यञश्च परस्मात् ञिचः ञिटश्च परासाम् अद्यतनी-परोक्षा-आशिषां संबन्धिनः धकारस्य ढकारादेशो वा भवति ।

ग्राहिषीढ्वम् , ग्राहिषीध्वम् । उपदिदीयिढ्वे, उपदिदीयिध्वे । संवलिषीढ्वम् , संवलिषीध्वम् । ह-यञ इति किम् ? आसिषीध्वम् ॥ ५३ ॥

**हः धुट्-पदान्ते । ५४ ।**

हकारस्य धुडादौ प्रत्यये परे पदान्ते च ढकारादेशो भवति ।

लेढा । गुडलिड्भ्याम् । धुट्-पदान्त इति किम् ? गुडलिहौ ॥ ५४ ॥

**दादेः भ्वादेः घः । ५५ ।**

भ्वादेः धातोः दकारादेः अवयवस्य संबन्धिनः हकारस्य धुटि परे पदान्ते च घकार-आदेशो भवति ।

---

१ "यङः अन्येषाम्" । १२ । २ । ७८ । इति शाकटायनीय सूत्रम् । 'अन्येषाम्–एकेषामाचार्याणां मतेन'– अमोघवृ० १ । २ । ७८ । २ अत्रापि 'अन्येषाम्' इति अनुवर्तते शाकटायने । ३ 'आशिषाम्' इति पाठो न सूत्रगतः किन्तु वृत्तिगतः ।

दोग्धा। गोधुक्। दादेः इति किम्? गुडलिट्। म्वादेः इति किम्? दामलिट्। धुट्-पदान्त इति किम्? गोदुहौ ॥ ५५ ॥

**मुहादीनां वा । ५६ ।**

'मुह'आदीनां हकारस्य धुडादौ प्रत्यये परे पदान्ते च घकार-आदेशो वा भवति।

मोग्धा, मोढा। द्रोग्धा, द्रोढा। उन्मुक्, उन्मुट्।

द्रुह मुह ष्णुह ष्णिह इति मुहादि। बहुवचनं यङः श्लुचि अपि भावार्थम्-मोमोग्धि, मोमोढि ॥ ५६ ॥

**नहेः धः । ५७ ।**

नहेः हकारस्य धुडादौ प्रत्यये परे पदान्ते च धकार-आदेशो भवति।

नद्धा। उपानत् ॥ ५७ ॥

**अनडुहः दः । ५८ ।**

'अनडुह्'शब्दस्य धुटि पदान्ते च दकार-आदेशो भवति।

स्वनडुत्। अनडुद्भ्याम् ॥ ५८ ॥

**च्वोः कुः । ५९ ।**

चवर्गस्य धुडादौ प्रत्यये परे पदान्ते च कवर्ग-आदेशो भवति।

वक्ता। वाक्। "प्रत्यये" इत्यधिकारात् इह कुत्वं न भवतिः-इच्छति। इदंच्ञ्चुः। इदंचगः इत्यादौ लाक्षणिकत्वात् न भवति ॥ ५९ ॥

**युजि-अञ्चि-क्रुञ्चः । ६० ।**

एषाम् अन्तस्य धुडादौ प्रत्यये पदान्ते च कवर्ग-आदेशो भवति।

युङ्। प्राङ्। क्रुङ्। धुटि पूर्वेण एव सिद्धे, पदान्ते "पदस्य" [ ना० द्विती० पादः ६३ ] इति लोपे नकारस्य न सिध्यति-इति वचनम्। 'क्रुञ्चः' इति अत एव निर्देशात् क्विपि 'न'लोपाभावः। 'युजि'आदिसाहचर्यात् चवर्गस्य धातोरेव स्यात् इति पृथग्योगः ॥ ६० ॥

**छ-श-भ्रस्जादीनां षः । ६१ ।**

छकारस्य शकारस्य 'भ्रस्ज'आदीनां च अन्तस्य धुडादौ प्रत्यये परे पदान्ते च षकार-आदेशो भवति।

---

१ अनडुहः दः ॥ अनडुह्(द्) अनडुद्भ्याम् पू०। २ अस्मिन् पादे तृतीयसूत्रे 'प्रत्यये' इति पद वर्तते। ३ अत्र पदान्ते चवर्गस्य अभावात् तथा धुडादिप्रत्ययस्याऽपि असत्त्वात् न घटते इदमुदाहरणम्। ४ अत्र 'च'स्य कत्वं कथं प्राप्तमिति न गम्यते, अत एव च अस्पष्टं विभाति। शाकटा० अमोघवृत्ती अपि एतादृशमेव ।१।२।८८।

पृष्टः । उपविष्टः । भ्रष्टा । स्रष्टा । देवेट् । धानाभृट् । 'व्रश्च्'आदिसाहचर्यात् धातोरेव छ–शोर्ग्रहणम् तेन इह न भवति–निशा–निज्भ्याम् ।

भ्रस्ज सृज मृज यज राज भ्राज व्रश्च इति भ्रस्जादि । बहुवचनं यङः श्लुचि अपि भावार्थम्–बरीभृट् इत्यादि ॥ ६१ ॥

## संयोगस्य आदिस्-कोः लुक् । ६२ ।

धुडादौ प्रत्यये परे पदान्ते च यः संयोगः तस्य आदौ सकारस्य ककारस्य च लोपो भवति ।

लग्नः । लग्नवान् । तष्टा । काष्ठतट् । धुट्-पदान्ते इति किम् ? काष्ठतक्षौ । 'प्रत्यये' इति अधिकारात् इह न भवति-शकृत्स्थाता[1] । काक्यर्थम्, वास्यर्थम् इति बहिरङ्गस्य यत्रः असिद्धत्वात् अनेन उत्तरेण च लुग् न भवति ॥ ६२ ॥

## पदस्य । ६३ ।

संयोगान्तस्य पदस्य अन्तलोपो भवति ।

श्रीमान् । पदग्रहणं धुटः निवृत्त्यर्थम्–स्यन्त्वा ॥ ६३ ॥

## रात् सः । ६४ ।

रेफात् परस्य सकारस्य लोपो भवति ।

चिकीर्ष्याम् । "पदस्य" [ ना० द्वितीо पादः सू० ६३ ] इति सिद्धे नियमार्थं वचनम् । "पुंवञ्च अन्यतः" [ ष० सन्धिः सू० १५ ] इति निर्देशात् 'रात् सः एव' इति नियमः तेन इह न भवति–ऊर्ग् ॥ ६४ ॥

## तिब्-आदेः । ६५ ।

तिबाद्यन्तस्य संयोगान्तस्य पदस्य अन्तलोपो भवति ।

अजागर् भवान् ।अवावक् ॥ ६५ ॥

## नाम्नः नः अन्अह्नः । ६६ ।

'अहन्'वर्जितस्य नाम्नः पदस्य अन्तनकारस्य लोपो भवति ।

राजा । राजभ्याम् । नाम्नः इति किम् ? अपचन् । अन्अह्नः इति किम् ? अहः । पदस्य इति किम् ? राजानौ ॥ ६६ ॥

---

१ पृ० ४७ टिप्पण २ । २ 'काष्ठशकृत्स्थाता' इति काशिकायाम् । ८ । २ । २९ । ३ –क्यर्थः, वा-पा० ।

## न आमन्त्र्ये । ६७ ।

आमन्त्र्ये अर्थे वर्तमानस्य पदस्य अन्तनकारलोपो न भवति ।

हे राजन् ! ॥ ६७ ॥

## नपि वा न । ६८ ।

आमन्त्र्ये नपुंसकेऽर्थे वर्तमानस्य नकारान्तस्य पदस्य अन्तलोपो वा भवति ।

हे चर्म, हे चर्मन् ॥ ६८ ॥

## नि हनेः हः घः । ६९ ।

हनेः हकारस्य नकारे परे घकार-आदेशो भवति ।

वृत्रघ्ना । घ्नन्ति । हन इति किम् ? अह्नः ॥ ६९ ॥

## म-अवर्णान्त-उपान्त्य-अपञ्चमवर्ग्यात् मतोः मः वः । ७० ।

मकारान्तात् अवर्णान्तात् मकारोपान्त्यात् अवर्णोपान्त्यात् पञ्चमवर्जात् वर्ग्याच्च परस्य मतोः मकारस्य वकार-आदेशो भवति ।

किंवान् । वृक्षवान् । शमीवान् । पयस्वान् । विद्युत्वान् ॥ ७० ॥

## नाम्नि । ७१ ।

नाम्नि विषये मतोः मकारस्य वकार–आदेशो भवति ।

**अहीवती, कपीवती, मुनीवती** एवंनामानो नद्यः ॥ ७१ ॥

## अष्ठीवत्-आदिः । ७२ ।

एते 'मतु'प्रत्ययान्ता निपात्यन्ते ।

अस्थिशब्दस्य मतौ 'अष्ठी'भावे अष्ठीवान् शरीरैकदेशः । 'चक्र'शब्दस्य चक्रीवान् रासभः राजा वा कश्चित् । 'कक्ष्या'शब्दस्य कक्षीवान् ऋषिः कश्चित् । 'चर्मन्'शब्दस्य 'न्'लोपाभावे **चर्मण्वती** नाम नदी । 'लवण'शब्दस्य **रुमण्वान्** नाम पर्वतः मन्त्री वा कश्चित् । अन्यत्र न भवति–अस्थिमान् । चक्रवान् । कैक्ष्यावान् । चर्मवान् । लवणवान् । 'उदक'शब्दस्य संज्ञायां जलधारके च 'उदन्'भावः–उदन्वान् ऋषिः समुद्रो वा । उदन्वान् मेघः घटो वा । 'उदकवान् घटः' इत्यत्र उदकसंबन्धमात्रं विवक्षितम् न धारणम् ।

१.-मवर्णात् पा० । २. 'कक्षा'श-पा० । पू० । ३. कक्षावान् पा० पू० ।

'राजन्'शब्दस्य सौराज्ये 'न्'लोपाभावः- राजन्वान् देशः । "राजन्वत्यस्त्वया प्रजाः" [ ] । अन्यत्र न भवति–राजवान् देशः ॥ ७२ ॥

## न ऊर्मि-आदिभ्यः । ७३ ।

एभ्यः परस्य मतोर्मकारस्य वकारो न भवति ।

ऊर्मिमान् । यवमान् ।

ऊर्मि । भूमि । दल्मि । कृमि । यव । क्रुञ्चा । वशा । द्राक्षा । गरुत् । हरित् । ककुद् । द्रु । मधु इति ऊर्मि–आदिः ॥ ७३ ॥

## ख्यात्रः यः सवत् । ७४ ।

ख्यात्रः संबन्धी यकारः सकारवत् वेदितव्यः ।

पुंख्यानम्–अत्र "पुमः अघे.पे अशिटि अधुट्परे" [ पञ्च० सन्धिः सू० २४ ] इति सक् न भवति । नमः ख्यात्रे–अत्र "क-ख-प-फयोः≍क–)(पौ" [पञ्च० सन्धिः सू० २८] इति न भवति । पर्याख्यानम्–अत्र "श्-चु-ल् टु-स्-तौ" [ नाम० द्विती० पादः सू० १७ ] इति णत्वप्रतिषेधः । सौप्रख्यम् अत्र य-उपान्तलक्षणो वुञ् न भवति ॥ ७४ ॥

## दिवः औः सौ । ७५ ।

दिवः सौ परे औकार–अन्तादेशो भवति ।

द्यौः । हे द्यौः ! । प्रियद्यौः । अत्र 'दिव्'शब्दस्य अक्रियावाचिनः ग्रहणात् इह न भवति–अक्षद्यूः ॥ ७५ ॥

## उः पदान्तेऽनूत् । ७६ ।

'दिव्'शब्दस्य पदान्ते वर्तमानस्य उकारः–अन्तादेशो भवति, अनूत् चेत् ।

विमलद्यु दिनम् । द्युभ्याम् । अनूत् इति किम् ? अद्यौः द्यौः भवति द्युभवति–अत्र च्वौ दीर्घो न भवति । वृद्धिस्तु भवत्येव–द्यौकामिः ॥ ७६ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि द्वितीयः पादः समाप्तः ॥

*

१. अनेन सूत्रेण विहितः उकारो दीर्घो न भवति, अत एव अद्यौः द्यौः भवति इति च्वौ अपि 'द्युभवति' इत्येव प्रयोगो जायते, 'द्यूभवति' इति न हि भवति इति तात्पर्यम् 'अनूत्' इत्यस्य ।

## नाम्नि तृतीयः पादः

**त्रि-चतुरः स्त्रियां तिसृ-चतसृ स्यादौ । १ ।**

त्रि-चतुर्‌शब्दयोः स्त्रीलिङ्गे वर्तमानयोः स्यादौ परे यथासंख्यं तिसृ चतसृ इत्यादेशौ भवतः ।

तिस्रः । चतस्रः । तिसृषु । चतसृषु । प्रियतिसा । प्रियचतसा । "असिद्धं बहिरङ्गम् अन्तरङ्गे" [न्यायसंग्रहे न्याय २०, पृ० २०] इति तल्लक्षणः कच् न भवति । स्त्रियाम् इति किम् ? त्रयः । चत्वारः । स्यादौ इति किम् ? प्रियत्रिकः । प्रियचतुष्कः ॥ १ ॥

**ऋतः रः स्वरे अनमि । २ ।**

तिसृ - चतसृशब्दस्थस्य ऋतः स्यादौ स्वरादौ परे अनम्‌विषये रः भवति ।

तिस्रः । चतस्रः । स्वर इति किम् ? तिसृभिः । अनमि इति किम् ? प्रियतिसृणी ॥ २ ॥

**नीचः वा ङि-घुटि । ३ ।**

उपसर्जनयोः तिसृ-चतस्रोः ऋकारस्य ङौ घुटि च अनम्‌विषये स्वरादौ परे वा रः भवति ।

प्रियतिस्रि, प्रियचतस्रि, प्रियतिसरि, प्रियचतसरि । प्रियतिस्रौ, प्रियतिसरौ । प्रियचतस्रौ, प्रियचतसरौ । ङि-घुटि इति किम् ? प्रियतिस्रः स्वम् । नीचः इति किम् ? तिस्रः । परमचतस्रः । अनमि इति किम् ? प्रियतिसृणि । प्रियचतसृणि । स्वर इति किम् ? प्रियतिसृभिः ॥ ३ ॥

**ऋतः अर् । ४ ।**

ऋकारस्य ङौ घुटि च स्वरादौ परे अर् भवति ।

पितरि । पितरौ । पितरः । पितरम् । पितरौ ॥ ४ ॥

**ङसि-ङसोः अतः डुः । ५ ।**

ऋतः परयोः ङसि-ङसोः अतः डुः भवति ।

पितुः आगच्छति । पितुः स्वम् ॥ ५ ॥

**ख्य-त्यात् अस्वरात् उः । ६ ।**

ख्य-त्यशब्दाभ्याम् अस्वराभ्यां परयोः ङसि-ङसोः अतः उः भवति ।

सख्युः, सख्युः । पत्युः, पत्युः । क्लन्युः, क्लन्युः । "क्वित्वादेशः अपि" [ना०

द्विती० पादः सू० २३ ] इति नस्य असत्त्वात् 'य'रूपत्वम् । अस्वरात् इति किम्? मुख्यात् । अपत्यात् । अतः इति किम्? सख्याः ॥ ६ ॥

**एङः लुक् । ७ ।**

एङः परयोः ङसि-ङसोः अतः लुग् भवति ।

मुनेः, मुनेः । द्योः । गोः ॥ ७ ॥

**अणः अमः । ८ ।**

अणः परस्य अमः अकारस्य लुग् भवति ।

वृक्षम् । खट्वाम् । मुनिम् । साधुम् । नदीम् । वधूम् । वनम् । धनम् । अणः इति किम्? रायम् ॥ ८ ॥

**दीर्घङी-आप्-व्यञ्जनात् सेः । ९ ।**

दीर्घङी—आबन्ताभ्याम् व्यञ्जनात् च परस्य सेः लुग् भवति ।

गौरी । बहुश्रेयसी । शाला । बहुराजा । राजा । तक्षा । दीर्घग्रहणं किम्? निष्कौशाम्बिः । अतिखट्वः । ङी-आप्-व्यञ्जनग्रहणं किम्? लक्ष्मीः । कीलालपाः ॥ ९ ॥

**ऋत्-उशनस्-पुरुदंशस्-अनेहसः अक्लीबे डा नैकामन्त्रणे । १० ।**

ऋकारात् 'उशनस्'आदेश्च अक्लीबे वर्तमानात् परस्य सेः डा भवति, न तु एकामन्त्रणे ।

पिता । कर्ता । उशना । पुरुदंशा । अनेहा । अक्लीब इति किम्? कर्तृ कुलम् । नैकामन्त्रणे इति किम्? हे पितः! । हे उशनः! । हे पुरुदंशः! । हे अनेहः! । एकग्रहणम् उत्तरार्थम् ॥ १० ॥

**सख्युः इतश्च । ११ ।**

'सखि'शब्दात् इकारान्तात् अक्लीबे वर्तमानात् परस्य सेः डा भवति, नैकामन्त्रणे ।

सखा । प्रियसखा । इतः इति किम्? इयं सखी । सखीयतेः क्विप्—सखीः । अक्लीबे इति किम्? सुसखि कुलम् । चकारः 'अक्लीबे'इत्यस्य अनुकर्षणार्थः तेन उत्तरत्र न अनुवर्तते ॥ ११ ॥

**घुटि ऐत् । १२ ।**

इकारान्तस्य सखिशब्दस्य घुटि परे ऐकारो भवति, नैकामन्त्रणे ।

सखायौ, सखायः, सखायम, सखायौ। इतः इति किम्? इमौ सख्यौ। 'प्रियसखीनि कुलानि' इत्यत्र तु नित्यत्वात् प्रथममेव नमि सति तेन व्यवधानात् न भवति। नैकामन्त्रणे इति किम्? हे सखे!। एकग्रहणं किम्? हे सखायौ!॥ १२॥

## तृ-स्वसृआदेः डार्। १३।

'तृ'प्रत्ययान्तस्य 'स्वसृ'आदीनां च अन्तस्य घुटि परे डार् आदेशो भवति, नैकामन्त्रणे।

कर्तारौ, कर्तारः, कर्तारम्, कर्तारौ। स्वसारौ। नप्तारौ।

स्वसृ नप्तृ नेष्टृ त्वष्टृ क्षत्तृ होतृ पोतृ प्रशास्तृ। केचित् 'शास्तृ'–ग्रहणमपि इच्छन्ति–"प्रणम्य शास्तारम्" [ ] इति। नैकामन्त्रण इति किम्? हे कर्तः!। हे स्वसः। डकारोऽन्तादेशार्थः॥ १३॥

## क्रुशः तुनः तृच् टादौ तु स्वरे वा। १४।

क्रुशः परस्य 'तुन्' प्रत्ययस्य घुटि परे तृच् आदेशो भवति, नैकामन्त्रणे, टादौ तु स्वरे वा।

क्रोष्टारौ, क्रोष्टारः, अतिक्रोष्टा। घुटि–इति किम्? क्रोष्टून्। बहुक्रोष्टु वनम्। नैकामन्त्रण इति किम्? हे क्रोष्टो!। [क्रोष्ट्रा, क्रोष्टुना। क्रोष्ट्रे, क्रोष्टवे इत्यादि॥१४॥

## [2]नि दीर्घः। १५।

## स्-महतः। १६।

सकारान्तस्य 'महत्'शब्दस्य च स्वरस्य घुटि परे दीर्घः भवति, नैकामन्त्रणे।

श्रेयांसि। महान्ति कुलानि। सर्पींषि, धनूंषि। श्रेयान्, श्रेयांसौ, श्रेयांसः, श्रेयांसम्, श्रेयांसौ। महान्, महान्तौ। प्रियश्रेयान्। नैकामन्त्रणे इति किम्?] हे [1]श्रेयन्। हे महन्॥ १६॥

---

१ अत्र आदर्शे [ ] इति चिह्नान्तर्गतः पाठः खण्डितः। केवलम् 'हे श्रेयन्! हे महन्!' इति आदर्शस्थं शेषभूतं पाठं दृष्ट्वा शाकटायनीयव्याकरणम् १।२।१३५–१।२।१३२–१।२।१३४– तस्य अमोघवृत्तिसंज्ञिकां च वृत्तिं समालोक्य अस्य पाठस्यात्र उपयोगितां चावधार्य उक्तचिह्नान्तर्गतः पाठः समुद्धृतः।

२ यद्यपि इदं सूत्रं न दृश्यते आदर्शे परंतु तद् अतिआवश्यकम्। सूत्रकार एव अत्र सप्तदशतमे सूत्रे तथा एकोनविंशतितमे सूत्रे "नि" इति निर्दिशति अतः अनुमीयते यत् एतत् सूत्रमत्र "नि दीर्घः" अनेन रूपेण पञ्चदशतमं भवेत् तेन च 'राजा' 'राजानौ'इत्यादिप्रयोगेषु दीर्घतासिद्धिः। अस्य सूत्रस्य वृत्तिः एवं कल्पनीया—

घुटि परे यो नः तस्मिन् परे नैकामन्त्रणे स्वरस्य दीर्घो भवति। राजा, राजानौ, राजानः, राजानम्, राजानौ। नैकामन्त्रणे इति किम्? हे राजन्!। एक इति किम्? हे राजानौ॥१५॥

## इन्-हन्-पूष-अर्यमणः शौ । १७ ।

'इन्'–आदीनां शौ परे यो नकारः तस्मिन् पूर्वस्य समानस्य दीर्घो भवति ।

बहुदण्डीनि । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्यमाणि । "नि" [ नाम्नि तृ० पा० सू० १५ ] इत्येव सिद्धौ नियमार्थं वचनम्–शौ एव । तेन इह न भवति–दण्डिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ ॥ १७ ॥

## सौ अतोश्च । १८ ।

अत्वन्तस्य इन्-आदीनां च सौ परे नकारे पूर्वस्य समानस्य दीर्घो भवति, नैकामन्त्रणे ।

भवान् । गोमान् । दण्डी । वृत्रहा । पूषा । अर्यमा । प्रियदण्डी । नैकामन्त्रण इति किम् ? हे गोमन् ! । हे दण्डिन् ! । 'अतु'इति उकारानुबन्धस्य अत्वन्तस्य ग्रहणात् इह न भवति–पचन् ॥ १८ ॥

## अभ्वादेः असश्च । १९ ।

अभ्वादेः असन्तस्य सौ परे पूर्वस्य समानस्य दीर्घो भवति, नैकामन्त्रणे ।

सुस्रोता नदी । स्थूलशिरस्यतेः क्विप् स्थूलशिराः । अभ्वादेः इति किम् ? पिण्डग्रः । नैकामन्त्रण इति किम् ? हे वेधः । पृथग्योगः "नि" [ नाम्नि तृ० पा० सू० १५ ] इत्यस्य अभावार्थः । चकारः 'नैकामन्त्रणे' इत्यस्य अनुकर्षणार्थः ॥ १९ ॥

## ऋत्-उदित्-अचो नम् । २० ।

ऋदितः उदितश्च अभ्वादेः अञ्चतेश्च घुटि परे नम् भवति ।

पचन्, पचन्तौ । गोमान्, गोमन्तौ । प्राङ्, प्राञ्चौ । अभ्वादेः इति किम् ? उखास्रत् । भ्वादेः प्रतिषेधात् इह भवत्येव–गोमत्यतेः क्विप् गोमान् ॥ २० ॥

## युजिरः असमासे । २१ ।

'युजिरी योगे' इत्यस्य असमासे घुटि परे नम् भवति ।

युङ्, युञ्जौ । बहुयुङ् । इरा निर्देशः किम् ? युजि समाधौ–युजं समापन्ना ऋषयः । असमास इति किम् ? अश्वयुक् । घुटि इति किम् ? युजः पश्य । युजौ कुले ॥ २१ ॥

## अनडुहः सौ । २२ ।

'अनडुह'शब्दस्य सौ परे नम् भवति ।

अनड्वान् । बह्वनड्वान् ॥ २२ ॥

## पुंसः ङ्स् । २३ ।

'पुंसः' इति एतस्य घुटि परे ङ्स्–अन्तादेशो भवति ।

पुमान् । पुमांसौ । बहुपुमांसि । घुटि इति किम्? पुंसः । द्विपुंसी कुले । पुंसः उदित्वात् नम् ङी ह्रस्वविकल्पश्च–बहुपुंसितरा, बहुपुंसीतरा ॥ २३ ॥

## ओतः औः । २४ ।

ओतः घुटि परे और्भवति ।

गौः, गावौ, गावः । द्यौः, द्यावौ, द्यावः । अतिगौः । प्रियगौः । ओतः इति किम्? चित्रगुः । लाक्षणिकत्वात् इह न भवति– हे चित्रगो! । घुटि इति किम्? गवा ॥ २४ ॥

## आ अम्-शसः अता । २५ ।

ओतः अम्–शसोः अता सह आ भवति ।

गाम्, गाः । द्याम्, द्याः । सुगाम् । अतिद्याम् ॥ २५ ॥

## पथि-मथि-ऋभुक्षः सौ इनः । २६ ।

'पथि'–आदीनाम् इनः सौ घुटि परे आकारो भवति ।

पन्थाः । मन्थाः । ऋभुक्षाः । हे पन्थाः! । सौ इति किम्? पन्थानौ ॥ २६ ॥

## अन् । २७ ।

'पथि'–आदीनाम् इनः घुटि परे अन् भवति ।

पन्थानौ । मन्थानौ । ऋभुक्षाणौ । सुपन्थानि वनानि । इनः इति किम्? पन्थानम् इच्छन्तौ पथ्यौ । घुटि इति किम्? सुपथी वने ॥ २७ ॥

## थः न्ट् । २८ ।

'पथि'–आदीनाम् इन्–अन्तानां घुटि परे थकारस्य न्ट् आगमो भवति ।

पन्थानौ । मन्थानौ । पन्थानः ॥ २८ ॥

## अपदस्य अन्त्यस्वरादेः ण्लुक् । २९ ।

'पथि'–आदीनाम् इन्–अन्तानाम् अपदसंज्ञकानाम् अन्त्यस्वरादेः ण्लुक्[1] भवति ।

पथः, पथा । मथः, मथा । ऋभुक्षः, ऋभुक्षा । सुपथी नगरी । इनः इति किम्? पन्थानम् इच्छतः पथ्यः पश्य । अपदस्य इति किम्? पथिभ्याम् ॥ २९ ॥

---

१ शाक० अमोघवृत्तौ 'लुक्' इति–१।२।१०५, १०६, १०७, १०८ ।

## ङिति । ३० ।

अपदसंज्ञकस्य ङिति परे अन्त्यस्वरादेः ण्लुक्[1] भवति ।

मुनौ । साधौ । पितुः । महाकरः[2] ॥ ३० ॥

## अणिच्-य-घुटि आतः अनापः । ३१ ।

अपदसंज्ञकावयवस्य आकारस्य अनापः णिच्-य-घुट्वर्जिते प्रत्यये परे ण्लुक् भवति ।

कीलालपः । कीलालपा । हाहे देहि । अनाप. इति किम् ? शालाः पश्य । अणिच्-य-घुटि इति किम् ? कीलालपयति । कीलालपायते । कीलालपाः तिष्ठन्ति । अपदस्य इति किम् ? कीलालपाभ्याम् ॥ ३१ ॥

## पादः पद् । ३२ ।

अपदसंज्ञकस्य संबन्धिनः 'पाद्' इत्यवयवस्य अणिच्-य-घुटि प्रत्यये परे पद् इत्यादेशो भवति ।

द्विपदः पश्य । द्विपदी कुले । पादयतेः क्विप्—पदी कुले । अपदस्य इति किम् ? द्विपाद्भ्याम् । अणिच्-य-घुटि इति किम् ? पादयति । द्विपाद्यति । द्विपाद्यते । बहुपान्दि कुलानि ॥ ३२ ॥

## क्वस् उस् । ३३ ।

अपदसंज्ञकस्य सबन्धिनः 'क्वस्'इत्यवयवस्य अणिच्-य-घुटि प्रत्यये परे उस् आदेशो भवति ।

विदुषः । विदुषा । विदुष्मान् । "स्—तं मत्वर्थे" [ द्विती० सन्धिः सू० १२ ] इति मतौ अपदत्वम् । पेचुषः । अणिच्-य-घुटि इति किम् ? विद्वयति । विद्वस्यति । विद्वस्यते । विद्वांसौ । 'क्वस्' इति ककारः किम् ? चर्मवसा ॥ ३३ ॥

## अचः श्चः प्राग् दीर्घश्च । ३४ ।

अपदसंज्ञकस्य संबन्धिनः 'अच्' इत्यवयवस्य अणिच्-य-घुटि परे 'श्च' इत्यादेशो भवति, दीर्घश्च प्राक् ।

दधीचः, दधीचा । दधीची कुले । मधूचः, मधूचा । अणिच्-य-घुटि इति किम् ?

---

१ अत्र 'ण्लुक्' इति शाक० अमोघवृ० ।१।२।१५१।

२ महत्याः करः महाकरः ।

दध्ययति । दध्यच्यति । दध्यच्यते । दध्यञ्चि कुलानि । अच इति किम् ? लुप्तनकारस्य अञ्चतेर्ग्रहणात् इह न भवति—साध्वञ्चा । शकारः सर्वादेशार्थः ॥ ३४ ॥

## उदः ईः । ३५ ।

उदः परस्य 'अच्' इत्येतस्य अपदसंज्ञकस्य अणिच्-य-घुटि प्रत्यये परे आदेः ईकारादेशो भवति ।

उदीचः, उदीचा । अणिच्-य-घुटि इति किम् ? उदयति । उदच्यति । उदच्यते । उदञ्चि कुलानि । अपदस्य इति किम् ? उदग्भ्याम् । लुप्तनकारस्य अञ्चतेर्ग्रहणं किम् ? उदञ्चा ॥ ३५ ॥

## श्वन् युवन्-मघोनः वस्य ङी-स्यादौ उश् । ३६ ।

श्वन्-युवन्-मघवन् इत्येतेषाम् अपदसंज्ञकानां संबन्धिनः 'व'शब्दस्य ङीप्रत्यये घुट्वर्जिते स्यादौ च परे उश् आदेशो भवति ।

इयं शुनी । प्रियशुनी कुले । शुनः, शुना । अतियूनी इयम् । अतियूनी कुले । यूनः, यूना । अतिमघोनी इयम् । मघोनः, मघोना । ङी-स्यादौ इति किम् ? शौवनं मांसम् । यौवनं वर्तते । माघवनः स्थालीपाकः । घुट्वर्जिते इति किम् ? श्वानौ । युवानौ । मघवानौ । अपदस्य इति किम् ? श्वभ्याम् । 'युवन्'इति वकारः नकारान्तसंप्रत्ययार्थः, इह न भवति-युवनीः पश्य । शकारः सर्वादेशार्थः ॥ ३६ ॥

## अव-मन्तसंयोगात् अनः श्नः । ३७ ।

अपदसंज्ञकस्य संबन्धिनः अवयवस्य अनः स्थाने अघुटि ङी-स्यादौ परे श्न आदेशो भवति, न चेत् सः— अन् व-मन्तसंयोगात् परो भवति ।

राज्ञी । राज्ञा, राज्ञः । अव-मन्तसंयोगात् इति किम् ? पर्वणा । चर्मणा । अघुटि इति किम् ? राजानौ । अपदस्य इति किम् ? राजभ्याम् । ङी-स्यादौ इति किम् ? राजानः । शकारः सर्वादेशार्थः ॥ ३७ ॥

## ङि-ण्योः वा । ३८ ।

अपदसंज्ञकावयवस्य अनः ङौ ण्यादेशे च परे श्न आदेशो वा भवति, न चेत् सः—अन् व-मन्तसंयोगात् परो भवति ।

राज्ञि, राजनि । साम्नी, सामनी । अव-मन्तसंयोगात् इति किम् ? पर्वणि । चर्मणि । पर्वणी । चर्मणी ॥ ३८ ॥

## अत्-एति अतः लुक् । ३९ ।

अपदसंज्ञकावयवस्य अतः अकारे एकारे च परे लुग् भवति ।

सः, तौ । पचन्ति, पचे । अत्-एति इति किम् ? श्रवणा । अपदस्य इति किम् ? दण्डाग्रम् ॥ ३९ ॥

## उशनसः नश्च आमन्त्ये वा सौ । ४० ।

आमन्त्ये वर्तमानस्य उशनसः अन्तस्य नकारः लुक् च सौ परे वा भवति ।

हे उशनन् !, हे उशना !, हे उशनः ! । आमन्त्ये इति किम् ? उशना । सौ इति किम् ? हे उशनसौ ॥ ४० ॥

## भवतः सिना भोस् । ४१ ।

'भवत्'शब्दस्य आमन्त्ये अर्थे वर्तमानस्य सिना सह भोस् इति [ वा ] निपात्यते ।

हे भोः !, हे भवन् ! । निपातनस्य इष्टविषयत्वात् 'भवत्'शब्दस्य सर्वादेर्ग्रहणम् तेन इह न भवति—भानि अस्य सन्ति इति मतुः भवतेर्वा शता-हे भवन् ! ॥ ४१ ॥

## नित्यदितः ह्रस्वः । ४२ ।

नित्यं दै-दास्-दास्-दामः यस्मात् तस्य आमन्त्ये अर्थे वर्तमानस्य सिना सह ह्रस्वः भवति ।

हे स्त्रि ! । हे लक्ष्मि ! । हे नदि ! । हे वधु ! । हे श्वश्रु ! । हे अतिलक्ष्मि ! । नित्यदितः इति किम् ? हे श्रीः ! । हे भ्रूः ! ॥ ४२ ॥

## द्विस्वर-अम्बार्थस्य । ४३ ।

द्विस्वरस्य अम्बार्थस्य आमन्त्र्यार्थवृत्तेः सिना सह ह्रस्वः भवति ।

हे अम्ब ! । हे अक्क ! । हे परमाम्ब ! । हे प्रियाम्ब ! । द्विस्वर-इति किम् ? हे अम्बाडे ! । हे अम्बाले ! । हे अम्बिके ! । 'हे मातर्' इत्यत्र परत्वात् अर् ॥ ४३ ॥

## ह्रस्वस्य गुणः । ४४ ।

ह्रस्वान्तस्य आमन्त्र्यार्थवृत्तेः सिना सह गुणो भवति ।

हे पितः ! । हे मातः ! । हे मुने ! । हे साधो ! ॥ ४४ ॥

## एत् आपः । ४५ ।

'आप्'अन्तस्य आमन्त्र्यार्थवृत्तेः सिना सह एद् भवति

हे माले ! । हे बहुराजे ! । 'आ+आप्' इति आकारप्रश्लेषात् 'आ'रूपस्य आपः ग्रहणम् तेन इह न भवति—हे प्रियशाल ! ॥ ४५ ॥

**पुत्रे अर्हे मातुः कचः डः । ४६ ।**

'मातृ'शब्दात् पुत्रे वर्तमानात् आमन्त्र्यार्थवृत्तेः परस्य कचः सिना सह 'ड' आदेशो भवति, प्रशंसायां गम्यमानायाम् ।

हे गार्गीमात ! । हे वात्सीमात ! । पुत्रे इति किम् ? हे गार्गीमातृके वत्से ! । अर्हे इति किम् ? अरे गार्गीमातृक ! । डकारः अन्त्यस्वरादिलुगर्थः ॥ ४६ ॥

**सेः अत्-एतः अदशि ण्णुक् । ४७ ।**

अदन्तात् एदन्ताच्च आमन्त्र्यार्थवृत्तेः परस्य सेः ण्णुक् भवति, अदश्विषये ।

हे श्रमण ! । हे उपकुम्भ ! । हे अतिहे ! । अदशि इति किम् ? हे अन्यत् ! ॥४७॥

**उतः अनडुत्-चतुरः वः । ४८ ।**

आमन्त्र्ये अर्थे वर्तमानयोः अनडुत्-चतुरोः उतः सौ परे वकारो भवति ।

हे अनड्वन् ! । हे प्रियचत्वः ! ॥ ४८ ॥

**वा घुटि । ४९ ।**

अनडुत्-चतुरोः उतः घुटि परे 'वा'शब्द आदेशो भवति ।

अनड्वान्, अनड्वाहौ । प्रियचत्वाः, प्रियचत्वारौ । चत्वारः ॥ ४९ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि तृतीयः पादः समाप्तः ॥

*

## नाम्नि चतुर्थः पादः

**परस्पर-अन्योऽन्य-इतरेतरस्य आम् स्यादेः वा अपुंसि । १ ।**

'परस्पर'आदीनाम् अपुंसि वर्तमानानां संबन्धिनः स्यादेः आम् आदेशो वा भवति ।

इमे सख्यौ कुले वा परस्परां भोजयतः, परस्परं भोजयतः । इमे सख्यौ कुले वा अन्योन्यां भोजयतः, अन्योन्यं भोजयतः । इतरेतराम् इतरेतरं वा भोजयतः । आमिः

सखीभिः एभिः कुलैर्वा परस्परां भोज्यते, परस्परेण भोज्यते । अन्योन्याम् अन्योन्येन, इतरेतराम् इतरेतरेण भोज्यते । अपुंसि इति किम् ? परस्परम् इमे जना भोजयन्ति । 'अम्' [ ] इति अन्ये । 'पुंसि' [ ] इति अपरे । इमे परस्पर-आदयः शब्दाः स्वभावतः क्रियाव्यतिहार-एकत्वविषयाः सर्वत्र पुंस्त्वोपादानाः ॥ १ ॥

## अष्टः जस्-शसोः औश् । २ ।

'अष्टन्'शब्दस्य कृताऽऽकारस्य संबन्धिनोः जस्-शसोः स्थाने औश् आदेशो भवति ।

अष्टौ तिष्ठन्ति । अष्टौ पश्य । परमाष्टौ तिष्ठन्ति । परमाष्टौ पश्य । अकारान्तनिर्देशः किम् ? अष्ट तिष्ठन्ति । अष्ट पश्य । तत्संबन्धिविज्ञानं किम् ? प्रियाष्टाः तिष्ठन्ति । प्रियाष्टः पश्य । केचित् "गिचि क्विपि औशम्" [ ] इच्छन्ति तद् अपि अतो निर्देशात् सिद्धम् । शकारः सर्वादेशार्थः ॥ २ ॥

## डति-ष्-णां संख्यानां ण्लुक् । ३ ।

डति-षकार-नकारान्तायाः संख्यायाः संबन्धिनोः जस्-शसोः ण्लुग् भवति ।

कति तिष्ठन्ति । कति पश्य । यति तिष्ठन्ति । यति पश्य । तति तिष्ठन्ति । तति पश्य । षट् । पञ्च । डति-ष्-णाम् इति किम् ? चत्वारः । संख्यानाम् इति किम् ? विप्रुषः । यज्वानः । तत्संबन्धिज्ञानं किम् ? प्रियषषः । प्रियपञ्चानः ॥ ३ ॥

## अव्ययस्य । ४ ।

अव्ययस्य संबन्धिनः स्यादेः ण्लुग् भवति । स्वः । उच्चैः ।

परमोच्चैः । तत्संबन्धिविज्ञानात् इह न भवति—अत्युच्चैसौ, अत्युच्चैसः ॥ ४ ॥

## अव्ययीभावस्य । ५ ।

अव्ययीभावस्य संबन्धिनः स्यादेः ण्लुग् भवति ।

अधिस्त्रि । उपवधु । तत्संबन्धिविज्ञानं किम् ? प्रियोपवधुः । पृथग्योगः उत्तरार्थः ॥५॥

## न अतः । ६ ।

अकारान्तस्य अव्ययीभावस्य संबन्धिनः स्यादेः ण्लुग् न भवति ।

उपकुम्भेन । उपकुम्भात् । अतः इति किम् ? अधिस्त्रि ॥ ६ ॥

## अम् अपञ्चम्याः । ७ ।

अकारान्तस्य अव्ययीभावस्य संबन्धिनः स्यादेः अम् भवति, पञ्चमीं वर्जयित्वा ।

उपकुम्भं तिष्ठति । उपकुम्भं पश्य । उपकुम्भं देहि । उपकुम्भे स्वम् । अपञ्चम्या इति किम् ? उपकुम्भात् ॥ ७ ॥

## वा तृतीयायाः । ८ ।

अकारान्तस्य अव्ययीभावस्य संबन्धिन्याः तृतीयायाः अम् आदेशो वा भवति ।

उपकुम्भेन, उपकुम्भम् ॥ ८ ॥

## सप्तम्याः । ९ ।

अकारान्तस्य अव्ययीभावस्य संबन्धिन्याः सप्तम्याः अम् आदेशो वा भवति ।

उपकुम्भम्, उपकुम्भे । पृथग्योगः उत्तरार्थः ॥ ९ ॥

## ऋद्ध-नदी-वंश्यस्य । १० ।

ऋद्धान्तस्य नद्यन्तस्य वंश्यान्तस्य च अव्ययीभावस्य अकारान्तस्य संबन्धिन्याः सप्तम्याः नित्यम् अम् आदेशो भवति ।

समद्रं वसति । समगधं वसति । नदी—उन्मत्तगङ्गम् । लोहितगङ्गम् । वंश्य—एकविंशति भारद्वाजं वसति । प्रतिपदोक्तस्य नद्यन्तस्य अव्ययीभावस्य ग्रहणात् इह न भवति—उपगङ्गे ॥ १० ॥

## भे अपः द् । ११ ।

'अप्'शब्दस्य भकारादौ स्यादौ परे 'द्'अन्तादेशो भवति ।

अद्भिः । अत्यद्भिः । भे इति किम् ? अप्सु । स्यादौ इति किम् ? अब्भक्षः ॥११॥

## जरायाः वा स्वरे डस् । १२ ।

'जरा'शब्दस्य स्वरादौ स्यादौ परे वा 'डस्' अन्तादेशो भवति ।

जरसौ, जरसा । एकदेशविकृतस्य अनन्यत्वात् अतिजरसौ, अतिजरसा । पक्षे जरे, जरया ॥ १२ ॥

## अष्टनः आ । १३ ।

'अष्टन्'शब्दस्य स्यादौ परे आकारः अन्तादेशो वा भवति ।

अष्टाभिः । अष्टासु । अष्टभिः । अष्टसु । प्रियाष्टौ, प्रियाष्टानौ । स्यादौ इति किम् ? अष्टसूत्री ॥ १३ ॥

## रायः व्यञ्जने । १४ ।

'रै'शब्दस्य व्यञ्जनादौ स्यादौ परे आकारः अन्तादेशो भवति ।

राः । राभ्याम् । ऐकदेशविकृतस्य अनन्यत्वात्[1]—अतिराभ्यां कुलाभ्याम् । स्यादौ इति किम्? रैभारः ॥१४॥

## अतः एत् बहौ । १५ ।

अकारस्य बहुविषये व्यञ्जनादौ स्यादौ परे एकार आदेशो भवति ।

एभिः । अमीभिः । श्रमणेभ्यः । श्रमणेषु । सर्वेषाम् । 'वृक्षाणाम्' इत्यत्र परत्वात् दीर्घः ॥ १५ ॥

## ओसि । १६ ।

अकारस्य ओसि परे एकारो भवति ।

वृक्षयोः ॥ १६ ॥

## आ जस्-भ्याम्-ये । १७ ।

अकारस्य जसि भ्यामि ये च स्यादौ परे आकारो भवति ।

वृक्षाः । वृक्षाभ्याम् । वृक्षाय । स्यादौ इति किम्? बाणान् जस्यति इति बाणजः ॥ १७ ॥

## भिस ऐस् । १८ ।

अकारात् परस्य भिसः स्यादेः ऐस् आदेशो भवति ।

वृक्षैः । 'ऐस्'करणात् स्यादिविधौ सन्निपातपरिभाषा[2] नोपतिष्ठते । अतिजरसैः । स्यादेः इति किम्? ओदनभिस्सटा । अतः इति किम्? मुनिभिः ॥ १८ ॥

## न इदम्-अदसः अनकः । १९ ।

इदमः अदसश्च अक्वर्जितात् परस्य भिसः ऐस् न भवति । एभिः । अमीभिः । अनक इति किम्? इमकैः । अमुकैः ॥ १९ ॥

## टा-ङसोः इन-स्यौ । २० ।

अकारात् परयोः टा-ङसोः स्थाने यथासंख्यम् 'इन' 'स्य' इत्यादेशौ भवतः ।

---

१ "एकदेशविकृतम् अनन्यवत्"–[ न्यायसंग्रहे न्याय ७ पृ० ८ ]

२ "सन्निपातलक्षणो विधिः अनिमित्तं तद्विघातस्य" इति परिभाषा–[ न्यायसंग्रहे न्याय १९ पृ० १९ ]

वृक्षेण । वृक्षस्य । अतिजरसिन ॥ २० ॥

## ङे-ङसेः य-आत् । २१ ।

अकारात् परयोः ङे-ङस्योः स्थाने यथासंख्यं 'य' 'आत्' इत्यादेशौ भवतः ।

वृक्षाय । वृक्षात् । अतिजरसात् ॥ २१ ॥

## सर्वादेः स्मै स्मात् । २२ ।

सर्वादेः अकारान्तस्य संबन्धिनोः ङे-ङस्योः स्थाने यथासंख्यं स्मै स्मात् आदेशौ भवतः ।

सर्वस्मै, सर्वस्मात् । विश्वस्मै, विश्वस्मात् । सर्वादेः संबन्धिनोः इति किम् ? प्रिय-सर्वाय, प्रियसर्वात् । अतः इति किम् ? भवतः । सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम त्व त्वत् नेम। सम सिम सर्वार्थे। पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधराणि व्यवस्थायाम् । स्वम् अज्ञाति-धनाख्यायाम् । अन्तरं बहिर्योग-उपसंव्यानयोः अपुरि । त्यद् तद् यद् अदस् इदम् एतद् एक द्वि युष्मद् भवतु अस्मद् किम् । असंज्ञायां सर्वादिः ॥२२॥

## ङेः स्मिन् । २३ ।

सर्वादेः अकारान्तस्य संबन्धिनः ङेः स्मिन् आदेशो भवति ।

सर्वस्मिन् । विश्वस्मिन् ॥ २३ ॥

## जसः शिः । २४ ।

सर्वादेः अकारान्तस्य संबन्धिनः जसः स्थाने शिर्भवति ।

सर्वे । विश्वे । शकारः सर्वादेशार्थः ॥ २४ ॥

## नेम-अल्पादेः वा । २५ ।

नेमस्य सर्वादेः अल्पादेश्च अकारान्तस्य संबन्धिनः जसः स्थाने शिः वा भवति ।

नेमे, नेमाः । अल्पे, अल्पाः । प्रथमे, प्रथमाः । अल्प प्रथम चरम अर्ध कतिपय तय अय इति अल्पादिः । नेमस्य सर्वादेः इति किम् ? नेमाः नाम केचित् । तत्संबन्धि-विज्ञानं किम् ? प्रियनेमाः । अतः इति किम् ? नेमाः स्त्रियः ॥ २५ ॥

## द्वन्द्वे । २६ ।

द्वन्द्वे समासे वर्तमानानाम् अकारान्तानां सर्वादीनां संबन्धिनो जसः स्थाने शिः वा भवति ।

---

१ औ स्मिन् पा० ।

कतरकतमे, कतरकतमाः । तत्संबन्धिज्ञानं किम् ? वस्त्रान्तर–वसनान्तराः ॥२६॥

**न सर्वादिः । २७ ।**

द्वन्द्वे समासे वर्तमानः सर्वादिः सर्वादिर्न भवति ।

कतरकतमानाम् । दक्षिणोत्तरपूर्वाणाम् । द्वन्द्वे निषेधेन "अवयवे" [ ] इति पुंभावो भवति ॥ २७ ॥

**तृतीयान्तात् पूर्व-अवरं योगे । २८ ।**

तृतीयान्तात् परौ पूर्व–अवरशब्दौ संबन्धे सति सर्वादी न भवतः ।

मासेन पूर्वाय मासपूर्वाय । दिनेन अवराय दिनावराय । तृतीयान्तात् इति किम् ? पूर्वस्मै मासेन । योगे इति किम् ? आगमिष्यति देवदत्तः मासेन. पूर्वस्मै दीयतां कम्बलः ॥ २८ ॥

**वा नव पूर्वा शि–स्मिन्–स्माति । २९ ।**

पूर्वादयो नव सर्वादयः शि–स्मिन्–स्मात्विषये सर्वादयो वा भवन्ति ।

पूर्वे, पूर्वाः । पूर्वस्मिन् 'पूर्वे । पूर्वस्मात्' पूर्वात् । एवम्–परे, पराः इत्यादि । नव इति किम् ? त्ये । सर्वादयः इति किम् ? उत्पादाख्ये पूर्वे ॥ २९ ॥

**तीयं ङित्कार्ये । ३० ।**

तीयप्रत्ययान्तं शब्दरूपं स्यादिङित्कार्ये कर्तव्ये सर्वादि वा भवति ।

द्वितीयस्मै, द्वितीयाय । तृतीयस्मै, तृतीयाय । ङित्कार्ये इति किम् ? द्वितीयकाय । प्रतिपदोक्तस्य तीयस्य ग्रहणात् इह न भवति–मुखतीयाय ॥ ३० ॥

**विदिक् । ३१ ।**

विदिग्वाची सर्वादिः सर्वादिर्वा भवति ।

उत्तरपूर्वस्यै, उत्तरपूर्वायै ॥ ३१ ॥

**न बहुव्रीहौ ॥ ३२ ॥**

बहुव्रीहौ सर्वादिः सर्वादिर्न भवति ।

त्वत्कपितृकः मत्कपितृकः । वचनात् अत्र अवयवेऽपि निषेधः ॥ ३२ ॥

**अवर्णस्य आमः साम् ॥ ३३ ॥**

---

१ जैनपरम्पराया मूलागमरूपायां द्वादशाङ्ग्यां दृष्टिवादो नाम द्वादशतमम् अङ्गम् तत्र चतुर्दश पूर्वाणि नाम्ना शास्त्राणि । तेषु प्रथमम् उत्पादाख्यं पूर्वम् ।

अवर्णान्तस्य सर्वादेः संबन्धिन आमः स्थाने साम् आदेशो भवति ।

सर्वेषाम् । येषाम् । सर्वासाम् । तत्संबन्धिविज्ञानं किम् ? प्रियसर्वाणाम् ॥ ३३ ॥

## युष्मद्-अस्मद्भ्याम् आकम् । ३४ ।

आभ्यां परस्य आमः स्थाने आकम् आदेशो भवति ।

युष्माकम् । अस्माकम् । प्रिययुष्माकम् । प्रियास्माकम् । 'आकम्' इति आकारः ण्यन्तार्थम्–युष्मान् आचक्षाणानां युष्माकम् ॥ ३४ ॥

## शसः ङ्नुः । ३५ ।

युष्मद्–अस्मद्भ्यां परस्य शसः ङ्नु आदेशो भवति ।

युष्मान् । अस्मान् । प्रियत्वान् । प्रियमान् ॥ ३५ ॥

## अम्–औ म् । ३६ ।

युष्मद्–अस्मद्भ्यां परः अम् औश्च म् भवति ।

त्वाम् । माम् । अतित्वाम् । अतिमाम् । युवाम् । आवाम् । अतियुवाम् । अत्यावाम् ॥ ३६ ॥

## ङसि–भ्यसोः अद् । ३७ ।

युष्मद्-अस्मद्भ्यां परस्य ङसे, तस्य संबन्धिनः एव भ्यसश्च अद् आदेशो भवति ।

त्वद् । मद् । अतियुवत् । अत्यावत् । युष्मत् । अस्मत् ॥ ३७ ॥

## अभ्यं भ्यसः । ३८ ।

युष्मद्–अस्मद्भ्यां परस्य चतुर्थीभ्यसः स्थाने अभ्यम् आदेशो भवति ।

युष्मभ्यम् । अस्मभ्यम् । अतित्वभ्यम् । अतिमभ्यम् ॥ ३८ ॥

## आ व्यञ्जने । ३९ ।

व्यञ्जनादौ स्यादौ परे युष्मद्–अस्मदोः आकारः अन्तादेशो भवति ।

त्वाम् । माम् । युष्मान् । अस्मान् ॥ ३९ ॥

## दोः लुक् । ४० ।

युष्मद्–अस्मदोः दकारान्तयोः स्यादौ परे अन्तस्य लुग् भवति ।

युष्मभ्यम् । अस्मभ्यम् । त्वत् । मत् ॥ ४० ॥

## मोः वा । ४१ ।

मकारान्तयोः युष्मद्-अस्मदोः स्यादौ परे लुग् वा भवति ।

युवाम् युष्मान् वा आचक्षाणेभ्यः युष्मभ्यम् युषभ्यम् । अस्मभ्यम् असभ्यम् ॥ ४१ ॥

## टा-ङि-ओसि यः । ४२ ।

टा ङि ओस्सु परेषु युष्मद्-अस्मदोः अन्तस्य यकार आदेशो भवति ।

त्वया । मया । त्वयि । मयि । युवयोः । आवयोः । अतियुवया । अतिआवया ॥ ४२ ॥

## मन्तस्य युव-आवौ द्वयोः । ४३ ।

द्वित्वविशिष्टे अर्थे वर्तमानयोः युष्मद्-अस्मदोः मकारान्तस्य अवयवस्य स्यादौ परे युव आव इति आदेशौ भवतः ।

युवाम् । आवाम् । अतियुवाम् । अतिआवाम् । अतियुवामु । अतिआवामु । मन्तस्य इति किम् ? युवयोः । आवयोः । अत्र दकारस्य यकारः यथा स्यात् । स्यादौ इति किम् ? युवयोः पुत्रः युष्मत्पुत्रः ॥ ४३ ॥

## त्व-मौ प्रत्यय-उत्तरपदे च एकस्मिन् । ४४ ।

एकत्वविशिष्टे अर्थे वर्तमानयोः युष्मद्-अस्मदोः मकारान्तस्य अवयवस्य स्यादौ परे प्रत्यय-उत्तरपदयोः यथासंख्यं त्व-मौ आदेशौ भवतः ।

त्वाम् । माम् । अतित्वामु । अतिमामु । त्वयति । मयति । त्वयते । मयते । त्वत्पुत्रः । मत्पुत्रः । प्रत्यय-उत्तरपदे च इति किम् ? अधियुष्मद् । अधिअस्मद् । एकस्मिन् इति किम् ? युष्माकम् । अस्माकम् ॥ ४४ ॥

## त्वम् अहम् सिना प्राक् च अकः । ४५ ।

युष्मद्-अस्मदोः सिना सह यथासंख्यं त्वम् अहम् इति आदेशौ भवतः, अकश्च प्रसङ्गे तस्मात् प्राक् ।

त्वम् । अहम् । अतित्वम् । अतिअहम् । प्राक् च अकः इति किम् ? त्वकम् । अहकम् ॥ ४५ ॥

## यूयम् वयम् जसा । ४६ ।

युष्मद्-अस्मदोः स्थाने जसा सह यथासंख्यं यूयम् वयम् इति आदेशौ भवतः, प्राक् च अकः ।

यूयम् । वयम् । प्रियः त्वम् युवाम् यूयं वा येषां ते प्रिययूयम् । प्रियवयम् । प्राक् च अकः इति किम् ? यूयकम् । वयकम् ॥ ४६ ॥

## तुभ्यं मह्यं ङ्या । ४७ ।

युष्मद्-अस्मदोः ङया सह यथासंख्यं तुभ्यम् मह्यम् इति आदेशौ भवतः, प्राक् च अकः ।

तुभ्यम् । मह्यम् । प्रियः त्वम् युवाम् यूयं वा यस्य तस्मै प्रियतुभ्यम् । प्रियमह्यम् । प्राक् च अकः इति किम् ? तुभ्यकम् । मह्यकम् ॥ ४७ ॥

## तव मम ङसा । ४८ ।

युष्मद्-अस्मदोः ङसा सह यथासंख्यं तव मम इति आदेशौ भवतः, प्राक् च अक. ।

तव । मम । प्रियः त्वम् युवाम् यूयम् वा यस्य तस्य प्रियतव । प्रियमम । प्राक् च अक' इत्येव ? तवक । ममक ॥ ४८ ॥

## पदात् वाक्यस्य वस्-नसौ बहुत्वे युग्विभक्त्या । ४९ ।

वाक्यस्य अवयवात् पदात् परयोः तद्वाक्यस्यैव अवयवयोः युष्मद्-अस्मदोः बहुत्वविषयया सनविभक्त्या सह यथासंख्यं वस् नस् इति आदेशौ भवतः, उत्तरत्र अन्वादेशे नित्यं विधानात् इह विकल्पः ।

धर्मः वः रक्षतु । धर्मः नः रक्षतु । धर्मः युष्मान् रक्षतु । धर्मः अस्मान् रक्षतु । शीलं वः दीयते । शीलं नः दीयते । शीलं युष्मभ्यं दीयते । शीलम् अस्मभ्यं दीयते । शीलं वः स्वम् । शीलं नः स्वम् । शीलं युष्माकं स्वम् । शीलम् अस्माकं स्वम् । पदात् इति किम् ? युष्मान् धर्मः रक्षतु । वाक्यस्य इति किम् ? पदावयवात् मा भूत्-अतियुष्मान् पश्य । तद्वाक्यस्यैव अवयवयोः इति किम् ? ओदनं पचत, युष्माकं भविष्यति । युग्विभक्त्या इति किम् ? गृहे यूयं तिष्ठत ॥ ४९ ॥

## वाम् नौ द्वित्वे । ५० ।

वाक्यस्य अवयवात् पदात् परयोः तद्वाक्यस्यैव अवयवयोः युष्मद्-अस्मदोः द्वित्व-विषयया युग्विभक्त्या सह यथासंख्यं वाम् नौ इत्यादेशौ भवतः वा ।

धर्मः वां पातु । धर्मः युवां पातु । धर्मः नौ पातु । धर्मः आवां पातु । शीलं वां दीयते । शीलं युवाभ्यां दीयते । शीलं नौ दीयते । शीलम् आवाभ्यां दीयते । शीलं वां स्वम् । शीलं युवयोः स्वम् । शीलं नौ स्वम् । शीलं आवयोः स्वम् ॥ ५० ॥

## ङे-ङसा ते मे । ५१ ।

वाक्यस्य अवयवात् पदात् परयोः तद्वाक्यस्यैव अवयवयोः युष्मद्-अस्मदोः यथा-संख्यं ङया ङसा च सह ते मे इत्यादेशौ भवतः वा ।

धर्मः ते दीयते । धर्मः तुभ्यं दीयते । धर्मः मे दीयते । धर्मः मह्यं दीयते । धर्मः ते स्वम् । धर्मः तव स्वम् । धर्मः मे स्वम् । धर्मः मम स्वम् ॥ ५१ ॥

## अमा त्वा मा । ५२ ।

वाक्यस्य अवयवात् पदात् परयोः तद्वाक्यस्यैव अवयवयोः युष्मद्-अस्मदोः अमा सह यथासंख्यं त्वा मा आदेशौ भवतः वा ।

धर्मः त्वा पातु । धर्मः त्वां पातु । धर्मः मा पातु । धर्मः मां पातु ॥ ५२ ॥

## असत् इव आमन्त्र्यं पूर्वम् । ५३ ।

आमन्त्र्यार्थं पदं युष्मद्-अस्मद्भ्यां पूर्वम् अविद्यमानम् इव वेदितव्यम्, तेन तदा-श्रयं वस्-नसादि न भवति ।

देवदत्त ! युष्मान् पातु धर्मः । साधू ! युवां पातु धर्मः । साधो ! त्वां पातु शीलम् । 'इव'ग्रहणं विद्यमानताभावार्थम् । आमन्त्र्यम् इति किम् ? धर्मः वः रक्षतु । पूर्वम् इति किम् ? "मयैतत् सर्वमाख्यातं युष्माकं मुनिपुंगवाः !" [ ] परस्य असत्त्वे "पादाद्योः" [ ना० चतु० पा० सू० ५६ ] इति प्रतिषेधो न स्यात् । पूर्वस्य अविद्यमान-वद्भावः व्यवहितस्यापि अविद्यमानवद्भावार्थः अन्यथा 'न आमन्त्र्यात्' इत्येव उच्यते, तेन–'देवदत्त ! धर्मः वः रक्षतु' इत्यत्र "पदात् प्रथमाया वा" [ ना० चतु० पा० सू० ६० ] इति विकल्पो न भवति ॥ ५३ ॥

## जस्विशेष्यं वा आमन्त्र्ये । ५४ ।

तद्-अतद्विषयं विशेष्यम् तस्य व्यवच्छेदकं विशेषणम् । जसन्तम् आमन्त्र्यार्थं पदं विशेष्यं युष्मद्-अस्मद्भ्यां पूर्वम् तद्विशेषणे आमन्त्र्ये पदे परे अविद्यमानम् इव वा भवति ।

देवा ! शरण्याः ! युष्मान् अथो शरणं प्रपद्ये, देवाः ! शरण्या ! वः अथो शरणं प्रपद्ये । देवाः ! शरण्याः ! अस्मान् अथो रक्षत, देवाः ! शरण्याः ! नः अथो रक्षत । जस्–इति किम् ? साधो ! शरण्य ! वः अथो शरणं प्रपद्ये । विशेष्यम् इति किम् ? शरण्याः ! साधवः ! युष्मान् शरणं प्रपद्ये । आमन्त्र्ये इति किम् ? आचार्याः ! युष्मान् शरण्यान् शरणं प्रपद्ये । अन्वादेशे विकल्पार्थं वचनम् ॥ ५४ ॥

---

१ 'त् पूर्वमा ' पा० ।

## न अन्यत् । ५५ ।

युष्मद्-अस्मद्भ्यां पूर्वम् जसन्तात् अन्यत् आमन्त्र्यं विशेष्यम् आमन्त्र्ये तद्वि-शेषणे परे अविद्यमानमिव न भवति ।

साधो ! शरण्य ! त्वा शरणं प्रपद्ये । साधू ! शरण्यौ ! मा रक्षतः ॥ ५५ ॥

## पादाद्योः । ५६ ।

नियतपरिमाणमात्रा-अक्षरपिण्डः पादः । पदात् परयोः पादस्य आदिभूतयोः युष्मद्-अस्मदोः यदुक्तं 'वस्-नस्' आदि तत् न भवति ।

"रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ।

स एव नाथो भगवान् अस्माकं पापनाशनः" ॥ [ ] पादाद्योः इति किम् ?

'पान्तु वः तिग्ममार्तण्डमयूखोत्करसन्निभाः ।

तमस्काण्डभिदो ब्रह्मज्ञानदीपप्रभाङ्कुराः" ॥

[ ] ॥ ५६ ॥

## च-वा-ह-अह-एवयोगे । ५७ ।

'च'आदिभिः योगे 'वस्–नस्' आदि न भवति ।

जनो युष्मांश्च पश्यति । जनो युष्मान् वा पश्यति । जनः अस्मान् ह पश्यति । जनो युष्मान् अह पश्यति । जनो युष्मान् एव पश्यति । योगे इति किम् ? ज्ञानं च शीलं च ते स्वम् ॥ ५७ ॥

## मनसि ईक्षार्थैः । ५८ ।

ईक्षा दर्शनम् तदर्थैः धातुभिः सह यद् वाक्यम् तस्य अवयवात् पदात् परयोः युष्मद्–अस्मदोः 'वस्–नस्' आदि न भवति, सा चेत् ईक्षा मनोविषया भवति ।

जनः युष्मान् समीक्ष्य आगतः । जनः अस्मान् समीक्ष्य आगतः । जनः तव कार्यम् आलोचयति । मनसि इति किम् ? जनः नः पश्यति चक्षुषा इत्यर्थः । ईक्षार्थैः इति किम् ? जनः वः मन्यते ॥ ५८ ॥

## नित्यम् अन्वादेशे । ५९ ।

तेन अन्येन वा शब्देन किञ्चिद् विधातुं कथितस्य प्रतिपाद्यान्तरप्रतिपादनाय

---

१ इदमेव संपूर्णं पद्यम् काशिकायाम् ८।१।१८। केवलं तत्र 'अस्माकं शत्रुमर्दनः" इति पाठभेदः ।

पुनस्तेन कथनम् अन्वादेशः, तस्मिन् विषये पदात् परयोः युष्मद्-अस्मदोः यद् उक्तं 'वस्-नस्' आदि तत् नित्यं भवति ।

यूयं विनीताः तद् वः गुरवो मानयन्ति । वयं विनीताः तद् नः गुरवो मानयन्ति । धनवान् त्वम् अथो त्वा लोकः मानयति । धनवान् अहम् अथो मा लोकः मानयति । अन्वादेशे नित्यवचनात् अन्यत्र विकल्पः ॥ ५९ ॥

## पदात् प्रथमाया वा । ६० ।

पदात् परं यत् पदं प्रथमान्तं तस्मात् परयोः युष्मद्-अस्मदोः यद् उक्तं 'वस्-नस्' आदि तत् वा भवति ।

यूयं विनीताः तद् गुरवः वः मानयन्ति, तद् गुरवः युष्मान् मानयन्ति । धनवान् अहम् तद् लोकः मा मानयति, तद् लोकः मां मानयति ॥ ६० ॥

## त्यदाम् एनत् एतदः द्वितीया-टा-ओसि अवृत्त्यन्ते । ६१ ।

त्यदादीनां संबन्धिन्यां द्वितीयायाम् टायाम् ओसि च परे अन्वादेशे एतदः स्थाने एनद् आदेशो भवति, वृत्त्यन्ते वर्तमानस्य तु न भवति ।

अधीतम् एतत् सूत्रम् अथो एनद् नः व्याचढ्वम् । एतेन रात्रिः अधीता अथो[१] एनेन अहरपि अधीतम् । एतयोः शोभनं शीलम् अथो एनयोः महती कीर्तिः । एनच्छ्रितकः-अर्थात् प्रकरणात् वा अपेक्ष्ये निर्ज्ञाते इदम् उदाहरणम् । द्वितीया-टा-ओसि इति किम् ? एतस्मै सूत्रं देहि अथो एतस्मै व्याख्यां कुरु । अवृत्त्यन्ते इति किम् ? परमैतं पश्य ॥ ६१ ॥

## इदमः । ६२ ।

त्यदां संबन्धिनि द्वितीया-टा-ओसि परे अन्वादेशे इदमः एनद् आदेशो भवति ।

अधीतम् इदम् सूत्रम् अथो एनद् नः व्याचढ्वम् । अनेन रात्रिः अधीता अथो एनेन अहः अपि अधीतम् । अनयोः शोभनं शीलम् अथो एनयोर्महती कीर्तिः ॥ ६२ ॥

## व्यञ्जने अश् । ६३ ।

त्यदां संबन्धिनि व्यञ्जनादौ स्यादौ परे अन्वादेशे इदमः स्थाने अश् आदेशो भवति ।

इमकाभ्यां शैक्षकाभ्यां रात्रिः अधीता अथो आभ्याम् अहः अपि अधीतम् ।

---

१ ०थोऽनेन अह० पा० । ०थोनेव अह० पू० ।

अवृत्यन्ते इत्येव ? परमेमकस्मै । शकारः सर्वादेशार्थः । उत्तरेण अनकः विधिः इति स-'अक्'अर्थं वचनम् ॥ ६३ ॥

### अनक् । ६४ ।

योगविभागात् 'अन्वादेशः' 'अवृत्यन्ते' इति च निवृत्तम् । त्यदां संबन्धिनि व्यञ्जनादौ स्यादौ परे 'अक्'वर्जितस्य इदमः अश् आदेशो भवति ।

अस्मै । अस्मात् । अनक् इति किम् ? इमकाभ्याम् । त्यदां संबन्धिनि इति किम् ? प्रियेदंभ्याम् । इह तु भवति—परमास्मै ॥ ६४ ॥

### टा–ओसि अनः । ६५ ।

त्यदां संबन्धिनोः टा-ओसोः परयोः अक्वर्जितस्य इदमः स्थाने अन आदेशो भवति ।

अनेन, अनयोः । परमानेन, परमानयोः । त्यदां संबन्धिनोः इति किम् ? प्रियेदमा । अनक् इति किम् ? इमकेन ॥ ६५ ॥

### दः म् स्यादौ । ६६ ।

त्यदां संबन्धिनि स्यादौ परे इदमः दकारस्य मकार आदेशो भवति ।

इमौ । इमे । त्यदां संबन्धिनि इति किम् ? प्रियेदमौ ॥ ६६ ॥

### सौ मः । ६७ ।

त्यदां संबन्धिनि सौ परे इदमः मकारस्य 'म्' आदेशो भवति ।

अयम् । परमायम् । 'अश्' बाधनार्थं वचनम् ॥ ६७ ॥

### इदस्य अयः पुंसि । ६८ ।

त्यदां संबन्धिनि सौ परे इदमः पुंसि वर्तमानस्य संबन्धिनः 'इद'रूपस्य अवयवस्य 'अय' इति आदेशो भवति ।

अयम् । परमायम् । अयकम् । त्यदां संबन्धिनि इति किम् ? प्रियेदम् ॥६८॥

### स्त्रियाम् इयः । ६९ ।

त्यदां संबन्धिनि सौ परे इदमः स्त्रियां वर्तमानस्य संबन्धिनः 'इद'रूपस्य अवयवस्य 'इय' इति आदेशो भवति ।

---

१ अनक इति पा०पू० । २ परस्मै पा०पू० । ३ अन इति पा०पू० । ४ "व्यञ्जने अश्" सूत्रम् अत्रैव पादे ६१ । इत्यनेन प्राप्तस्य अशः बाधनार्थम् ।

इयम् । परमेयम् । इयकम् ॥ ६९ ॥

**किमः कः 'तम्'आदौ च । ७० ।**

त्यदां संबन्धिनि स्यादौ तसादौ च प्रत्यये परे किमः 'क' आदेशो भवति ।

कः, कौ, के । कदा । कर्हि । स'अकः' अपि--कः, कौ, के । त्यदां संबन्धिनि इति किम् ? प्रियकिमौ । 'किम्' इत्यत्र नित्यत्वात् प्रथममेव श्लुक् ॥ ७० ॥

**आ द्वेः अः । ७१ ।**

'द्वि' शब्दम् अभिव्याप्य त्यदां तत्संबन्धिनि स्यादौ तसादौ च परे अकारः अन्तादेशो भवति ।

स्यः, त्यौ, त्ये । सः, तौ, ते । तत्र । तदा । परमत्यौ । द्वौ । त्यदां संबन्धिनि इति किम् ? प्रियत्यदौ । आ द्वेः इति किम् ? भवान् ॥ ७१ ॥

**तः सौ सः । ७२ ।**

त्यदां द्विपर्यन्तानां संबन्धिनि सौ परे तकारस्य सकार आदेशो भवति ।

स्यः, स्यकः, परमस्यः । सः, सकः । सौ इति किम् ? त्यौ । त्यदां संबन्धिनि इति किम् ? प्रियैतद् देवदत्तः ॥ ७२ ॥

**अदसः दः । ७३ ।**

त्यदां संबन्धिनि सौ परे अदसः दकारस्य सकारो भवति ।

असौ, असकौ ॥ ७३ ॥

**औः सः सिलुक् च । ७४ ।**

त्यदां संबन्धिनि सौ परे अदसः सकारस्य औकारो भवति, सिलुक् च ।

असौ, असकौ, हे असकौ ! ॥ ७४ ॥

**असुकः वा अकि । ७५ ।**

त्यदां संबन्धिनि सौ परे अदसः अकि सति 'असुक' इति वा निपात्यते ।

असुकः, असकौ, हे असुक !, हे असकौ ! ॥ ७५ ॥

**स्वरस्य दीर्घः नामि अतिसृ-चतसृ-ष्-रः । ७६ ।**

आमादेशे नामि परे तिसृ-चतसृ-षकारान्त-रेफान्तवर्जितस्य शब्दसंबन्धिनः स्वरस्य दीर्घो भवति ।

श्रमणानाम् । मुनीनाम् । साधूनाम् । पितॄणाम् । अतिसृ-चतसृ-ष्-रः इति किम् ?

तिसृणाम् । चतसृणाम् । षण्णाम् । चतुर्णाम् । 'षु-रः' इति प्रतिषेधात् एकवर्णव्यवधानेऽपि दीर्घः—पञ्चानाम् । सप्तानाम् । 'दधिनाम' 'दण्डिनाम' इति अनर्थकत्वात् न भवति ॥ ७६ ॥

**नुः वा । ७७ ।**

'नृ'शब्दस्य नामि परे दीर्घः वा भवति ।

नृणाम्, नृणाम् ॥ ७७ ॥

**संख्या-वि-सायात् अह्नस्य अहन् ङौ । ७८ ।**

संख्यावाचिनः वि-सायशब्दाभ्यां च परस्य 'अह्न'शब्दस्य ङौ परे अहन् आदेशो वा भवति ।

द्वयोः अह्नोः भवः द्व्यह्नः तस्मिन् द्व्यह्नि, द्व्यहनि, द्व्यह्ने । तावदह्नि, तावदहनि, तावदह्ने । विगतम् अहः व्यह्नः तस्मिन् व्यह्नि, व्यहनि, व्यह्ने । सायम् अह्नः सायाह्नः तस्मिन् सायाह्नि, सायाहनि सायाह्ने । संख्या-वि-सायात् इति किम् ? मध्याह्ने ॥ ७८ ॥

**शसादौ दन्त-उदक-पाद-नासिका-हृदय-असृक्-यूष-दोष्-यकृत्-शकृतः दत्-उदन्-पद्-नस्-हृद्-असन्-यूषन्-दोषन्-यकन्-शकन् । ७९ ।**

'दन्त'आदीनां शसादौ परे यथासंख्यं 'दत्' इत्यादयः आदेशा वा भवन्ति ।

दतः, दन्तान् । उद्ना, उदकेन । पदः, पादान् । नसा, नासिकया । हृदि, हृदये । अस्ना, असृजा । यूष्णा, यूषेण । दोष्णा, दोष्णा । यक्ना, यकृता । शक्ना, शकृता ॥ ७९ ॥

**मास-निशा-आसनस्य लुक् । ८० ।**

एषाम् अन्तस्य शसादौ परे लुग् भवति वा ।

मासः, मासान् । निशा, निशया । आसनि, आसने ॥ ८० ॥

**ङ्याम् अतः । ८१ ।**

ङीप्रत्यये परे पूर्वस्य अतः लुग् भवति ।

गौरी । कुरुचरी । अतः इति किम् । पट्वी ॥ ८१ ॥

**मत्स्यस्य यः । ८२ ।**

'मत्स्य'शब्दस्य संबन्धिनः यकारस्य ङीप्रत्यये परे लुग् भवति ।

मत्सी । मत्स्यः नाम कश्चित् तस्य अपत्यम् इञ्–मात्सी, ङ्यादेशो हि ङीग्रहणेन गृह्यते ॥ ८२ ॥

**तद्धितस्य व्यञ्जनात् । ८३ ।**

तद्धितप्रत्ययस्य संबन्धिनः यकारस्य व्यञ्जनात् परस्य ङीप्रत्यये परे लुग् भवति ।

गार्गी । वात्सी । तद्धितस्य इति किम् ? ऋश्यी । व्यञ्जनात् इति किम् ? कारिकेयी ॥ ८३ ॥

**सूर्य-आगस्त्ययोः ईये च । ८४ ।**

'सूर्य'-'आगस्त्य'शब्दयोः यकारस्य ङीप्रत्यये ईये च परे लुग् भवति ।

सूर्यस्य भार्या सूरी । आगस्ती । सूर्यस्य इयं सौरी, आगस्ती प्रभा । सौरीयः । आगस्तीयः । ईये च इति किम् ? सौर्यः । आगस्त्यः ॥ ८४ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि चतुर्थः पादः समाप्तः ॥

*

## नाम्नि पञ्चमः पादः

**गुरु-उपोत्तमस्य अनार्षे अपत्ये स्त्रियाम् अण्-इञः ष्यङ् । १ ।**

'उत्तम'शब्दः अव्युत्पन्नः स्वभावात् त्रिप्रभृतीनाम् अन्त्यमाह, तत्समीपम् गुरु उपोत्तमं[1] यस्य तस्य अनार्षे अपत्ये स्त्रियां विहितौ यौ अण्–इञौ तदन्तस्य ष्यङ् आदेशो भवति ।

करीषगन्धेः अपत्यं कारीषगन्ध्या । औडुलोम्या । दीर्घग्रहणम् अकृत्वा गुरुग्रहणम् अनेकव्यञ्जनव्यवधानेऽपि यथा स्यात् इत्येवमर्थम् अन्यथा वचनात् एकव्यञ्जनव्यवधाने एव स्यात् । गुरु-उपोत्तमस्य इति किम् ? औपगवी । अनार्षे इति किम् ? वासिष्ठी । अपत्ये इति किम् ? अहिच्छत्रे जाता आहिच्छत्री । स्त्रियाम् इति किम् ? निर्वाराहिः स्त्री । अण्–इञ इति किम् ? आर्तभागी । विदादि 'अञ्' । ङकारः अन्तादेशार्थः ॥ १ ॥

---

१ उपोत्तमम्–उपान्त्यम् ।

## गोत्रलवे वृद्धे । २ ।

प्रथमप्रकाशकपुरुषाभिधानः तदपत्यसंतानो गोत्रम् । अप्रधानं गोत्रं गोत्रलवः । तस्मिन् वृद्धसंज्ञके अनार्षे स्त्रियां विहितयोः अण्–इञोः ष्यङ् आदेशो भवति ।

पुणिकस्य अपत्यं वृद्धं पौणिक्या । 'पुणिक'आदयः कुलाख्या अनृषिप्रभवा अपि लोके 'गोत्राणि' इति उच्यन्ते तत्र अप्राधान्यविवक्षायाम् अयम् अण्[1] । वृद्ध इति किम् ? अनन्तरापत्ये न भवति–पौणिकी । अनार्षे इति किम् ? गौतमी । अगुरु-उपोत्तमार्थं वचनम् ॥ २ ॥

## रूढादिभ्यः । ३ ।

एभ्यः स्त्रियाम् अण्–इञोः ष्यङ् आदेशो भवति ।

रूढस्य अपत्यम् स्त्री रौढ्या । क्रौड्या । रूढ क्रोड चोपयत इत्यादि ॥ ३ ॥

## दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्ठेविद्धेः वा । ४ ।

एषां स्त्रियाम् इञन्तानां ष्यङ् अन्तादेशो वा भवति ।

दैवयज्ञी, दैवयज्ञ्या । शौचिवृक्षी, शौचिवृक्ष्या । सात्यमुग्री, सात्यमुग्र्या । काण्ठेविद्धी, काण्ठेविद्ध्या ॥ ४ ॥

## आत् आप् । ५ ।

अकारान्तात् स्त्रियां वर्तमानात् परः 'आप्' प्रत्ययो भवति ।

कारीषगन्ध्या । या । सा ॥ ५ ॥

## अजादेः । ६ ।

'अज' आदेः संबन्धिन्यां स्त्रियां ततः परः 'आप्' प्रत्ययो भवति ।

अजा । एडका । चटका । कोकिला । मूषिका । अत्र जातिलक्षणस्य ङी[2]ो बाधा । बाला । पाका । हेडा । वत्सा । मन्दा । विलाता । कन्या । अत्र वयोलक्षणस्य । पूर्वापहाणा । अपरापहाणा । अत्र टिल्लक्षणस्य, निपातनात् णत्वम् । त्रिफला । अत्र द्विगुलक्षणस्य । क्रुञ्चा[3] । देवविशा । उष्णिहा । अजादेः संबन्धिन्यां स्त्रियाम् इति किम् ? पञ्चानाम् अजानां समाहारः पञ्चाजी ॥ ६ ॥

## ऋचि पादः पात्-पदे । ७ ।

---

१ "अयम् ष्यङ्" १।३।३। शाक० अमोघवृत्तौ । २ 'ङी' प्रत्ययस्य । ३ अत्र हलन्तत्वात् "आत् आप्" इति पञ्चमसूत्रेण अप्राप्तिः । "अत्र हलन्तत्वात् "अतः" इत्यप्राप्तिः" १।३।१३। शाक० अमोघवृ० ।

ऋचि स्त्रियां वर्तमानस्य 'पात्' शब्दान्तस्य संबन्धिनः पादः पात् पदा इति निपात्यते ।

त्रिपात्, त्रिपदा गायत्री । ऋचि इति किम् ? द्विपात्, द्विपदी ॥ ७ ॥

## मन्-बहुव्रीह्यनः वा डित् । ८ ।

'मन्'अन्तात् बहुव्रीहेश्च 'अन्'अन्तात् स्त्रियां वर्तमानात् परः आप् प्रत्ययो भवति, स च डित् ।

दामे, दामाः, दामानौ, दामानम् । अतिमहिमे, अतिमहिमानौ । बहुव्रीहि'अन्'—प्रियश्वे, प्रियश्वानौ । बहुव्रीहिग्रहणं किम् ? अतिपर्वणी यष्टिः ॥८॥

## इतः अक्त्यर्थात् ङीः । ९ ।

इकारान्तात् स्त्रियां वर्तमानात् क्त्यर्थप्रत्ययान्तवर्जात् परः वा ङी प्रत्ययो भवति ।

धूलिः, धूली । शक्तिः, शक्ती । अक्त्यर्थात् इति किम् ? कृतिः । ग्लानि[1] ॥ ९ ॥

## स्वरात् उतः गुणात् अखरोः । १० ।

स्वरात् परः यः उकारः तदन्तात् गुणवाचिनः 'खरु'शब्दवर्जात् स्त्रियां वा ङी प्रत्ययो भवति ।

पटुः, पट्वी । स्वरात् इति किम् ? पाण्डुः भूमिः । वचनात् एकेन वर्णेन व्यवधानम् आश्रीयते । अखरोः इति किम् ? खरुः इयम् ।

"क्रियाश्रयो गुणः—अद्रव्यम्, क्रिया पूर्वाऽपरात्मिका ।
आकृतिग्रहणा जातिः लिङ्गाना च न सर्वभाक्" [ ] ॥ १० ॥

## बहु-आदेः । ११ ।

एभ्यः परः स्त्रियां वा ङी भवति ।

बहुः, बह्वी एवंनामा काचित् । गुणवचनात् तु पूर्वेणैव सिद्धम् । पद्धतिः, पद्धती । क्त्यन्तत्वात् पूर्वेण अप्राप्तिः । अपादाने घञि उपाध्याया, उपाध्यायी ।

बहु पद्धति चण्ड अराल उपाध्याय कमल कृपण विशाल विसंकट विकट कल्याण उदार पुराण शोण चन्द्रभाग नद्याम् इति बहु–आदिः ॥ ११ ॥

## क्तात् नाम्नि । १२ ।

क्तान्तात् स्त्रियां वा ङी भवति ।

---

१ अत्र 'तिक्' प्रत्ययः । २ "सत्त्वे निविशतेऽपैति पृथक् जातिषु दृश्यते । आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" ॥ इति काशिका ४।१।४४। अत्र इदमेव गुणलक्षणं समुचितम् ।

प्रवृद्धविलुनी, प्रवृद्धविलुना ॥ १२ ॥

**श्येत-एत-हरित-भरित-रोहितात् वर्णात् तः नश्च । १३ ।**

एभ्यः वर्णवाचिभ्यः स्त्रियां वा ङी भवति, तत्संनियोगे च तकारस्य नकारः ।

श्येनी, श्येता । एनी, एता । हरिणी, हरिता । भरिणी, भरिता । रोहिणी, रोहिता । वर्णात् अन्यत्र श्येता इत्यादि ॥ १३ ॥

**क्नः असित-पलितात् । १४ ।**

आभ्यां वर्णवाचिभ्यां परः स्त्रियां वा ङी भवति, तत्संनियोगे च तकारस्य 'क्न' आदेशः ।

असिक्नी, असिता । पलिक्नी, पलिता ॥ १४ ॥

**ऋतः अ'तिसृ'आदेः । १५ ।**

'तिसृ'आदिवर्जात् ऋकारान्तात् परः स्त्रियां ङी भवति ।

कर्त्री । प्रसवित्री । अ 'तिसृ'आदेः इति किम् ? तिस्रः । चतस्रः ।

स्वसा । दुहिता । ननान्दा । याता । माता । 'तिसृ-चतसृ' शब्दयोः इह पाठात् सन्निपातपरिभाषा नोपतिष्ठते तेन या, सा, अतिदध्या कन्यया इत्यादि सिद्धम् ॥ १५ ॥

**न्-अञ्चः । १६ ।**

नकारान्तात् 'अञ्चू' अन्ताच्च परः स्त्रियां ङी भवति ।

दण्डिनी । प्राची ॥ १६ ॥

**न मनः । १७ ।**

'मन्' अन्तात् स्त्रियां ङी न भवति ।

दामानौ । सुशर्माणौ स्त्रियौ ॥ १७ ॥

**अधातु-उत्-ऋदितः । १८ ।**

अधातोः 'उदित्' अन्तात् 'ऋदित्' अन्ताच्च परः स्त्रियां ङी भवति ।

भवती । पचन्ती । अधातुग्रहणं किम् ? सुकन् स्त्री ॥ १८ ॥

**ण-स्वर-अघोषात् वनः रश्च । १९ ।**

णकारान्तात् स्वरान्तात् अघोषान्ताच्च परो विहितः यः 'वन्'प्रत्ययः तदन्तात् स्त्रियां ङी भवति, तद्योगे च अन्तस्य रेफः ।

अवावरी । धीवरी । मेरुदृश्वरी । विहितविशेषणविज्ञानात् शर्वरी ॥ १९ ॥

**वा बहुव्रीहेः । २० ।**

ण-स्वर-अघोषपर'वन्'अन्तात् बहुव्रीहेः स्त्रियां वा ङी भवति, तद्योगे च अन्तस्य रः ।

प्रियावावरी, प्रियावावा ॥ २० ॥

**पादः । २१ ।**

बहुव्रीहेः तन्निमित्त'पात्'शब्दान्तात् स्त्रियां वा ङी भवति ।

द्विपदी, द्विपात् । तन्निमित्त'पात्'शब्दविज्ञानं किम् ? पादम् आचष्टे पाद त्रयः पादः अस्याः त्रिपात् ॥ २१ ॥

**स्वाङ्गात् पूर्वपदात् अकृत-मित-जात-प्रतिपन्नात् । २२ ।**

पूर्वपदात् स्वाङ्गात् परं 'कृत'आदिवर्जं यत् क्तान्तम् तदन्तात् बहुव्रीहेः स्त्रियां ङी भवति ।

शङ्खभिन्नी । उरुच्छिन्नी । स्वाङ्गात् इति किम् ? शाङ्करजग्धी, शाङ्करजग्धा । 'कृत'-आदिप्रतिषेधः किम् ? दन्तकृता । दन्तमिता । दन्तजाता । दन्तप्रतिपन्ना ॥ २२ ॥

**'पाणिगृहीती' इति पत्नी । २३ ।**

'पाणिगृहीती'इत्येवंप्रकारो ङ्यन्तो बहुव्रीहिः साधुर्वेदितव्यः, पत्नी चेत् वाच्या स्यात् ।

पाणिगृहीती । करगृहीती । पाण्यात्ती । करात्ती पत्नी । पत्नी इति किम् ? पाणि-गृहीता अन्या । पूर्वेणैव सिद्धे नियमार्थं वचनम् ॥ २३ ॥

**अनाच्छादजातेः वा । २४ ।**

अनाच्छादरूपजातिवाचिपूर्वपदात् 'कृत'आदिवर्ज'क्त'प्रत्ययान्तात् बहुव्रीहेः स्त्रियां वा ङी भवति ।

शाङ्करजग्धी, शाङ्करजग्धा । 'अनाच्छाद'–इति किम् ? वस्त्रच्छन्ना । जातेः इति किम् ? मासजाता । 'कृत'आदिप्रतिषेधः किम् ? कुण्डकृता । कुण्डमिता । कुण्डजाता । कुण्डप्रतिपन्ना ॥ २४ ॥

**श्नवतः नः । २५ ।**

श्नादेशभाक् यः अन् तदन्तात् बहुव्रीहेः स्त्रियां वा ङी भवति ।

बहुराज्यौ[1], बहुराजानौ । बहुव्रीहेः इति किम् ? निस्तक्ष्णी ॥ २५ ॥

## नाम्नि । २६ ।

श्नादेशवत् 'अन्'अन्तात् बहुव्रीहेः स्त्रियां ङी भवति ।

अधिराज्ञी, सुराज्ञी[2] नाम ग्रामः । नित्यार्थं वचनम् ॥ २६ ॥

## न अन्यतः । २७ ।

श्नवतः यः अन्यः अन् तदन्तात् बहुव्रीहेः स्त्रियां ङी न भवति ।

सुपर्वा । सुशर्मा ॥ २७ ॥

## अशिशोः ॥ २८ ॥

अशिशोः बहुव्रीहेः स्त्रियां ङी भवति ।

अशिश्वी । बहुव्रीहेः इति किम् ? न शिशुः ॥ २८ ॥

## ऊध्नः । २९ ।

'ऊधन्'अन्तात् बहुव्रीहेः स्त्रियां ङी भवति ।

कुण्डोध्नी । "श्नवतः नः" [नाम्नि पञ्चमः पा० सू० २५] इति विकल्पे प्राप्ते वचनम् ॥ २९ ॥

## संख्यादेर्दाम्नः । ३० ।

संख्यादेः 'दामन्'अन्तात् बहुव्रीहेः स्त्रियां ङी भवति ।

द्विदाम्नी । त्रिदाम्नी । संख्यादेः इति किम् ? उद्दामानम्, उद्दामाम्, उद्दाम्नीं वडवां पश्य ॥ ३० ॥

## हायनात् वयसि च । ३१ ।

प्राणिनां कालकृता अवस्था यौवनादिः वयः, तस्मिन् वर्तमानात् संख्यादेः 'हायन'अन्तात् बहुव्रीहेः स्त्रियां ङी भवति ।

द्विहायनी गौः । संख्यादेः इति किम् ? गतहायना । वयसि इति किम् ? द्विहायना शाला । चकारः 'बहुव्रीहेः' इत्यस्य अनुकर्षणार्थः तेन उत्तरत्र न अनुवर्तते ॥ ३१ ॥

## अनन्त्ये अतः । ३२ ।

अनन्त्ये वयसि वर्तमानात् अकारान्तात् स्त्रियां ङी भवति ।

कुमारी । किशोरी । वधूटी । अभिन्नरजस्का पुरुषेण असंयुक्ता स्त्री कुमारी । 'वृद्धकुमारी' इति उपमानात् । अनन्त्ये इति किम् ? वृद्धा । 'बाला' 'वत्सा' इत्यादिः

---

१ बहुराज्ञौ, बहु० पा० । २ सुराज्ञो । सुराज्ञी नाम ग्रामः पा० ।

अजादिः । 'उत्तानशया' 'लोहितपादिका' 'द्विवर्षा' नैताः वयःश्रुतयः, अर्थ-प्रकरणादिना तु वयःप्रतीतिः ॥ ३२ ॥

## द्विगोः । ३३ ।

अकारान्तात् द्विगोः स्त्रियां ङी भवति ।

पञ्चपूली ॥ ३३ ॥

## तद्धितलुचि परिमाणात् एव अविस्त-आचित-कम्बल्यात् । ३४ ।

विस्त-आचित-कम्बल्यवर्जं यत् [1]परिमाणवाचि तदन्तात् द्विगोः अकारान्तात् तद्धितप्रत्ययस्य लुचि सत्यां स्त्रियां वर्तमानात् परो ङी भवति ।

द्वाभ्यां कुडवाभ्यां क्रीता द्विकुडवी । परिमाणात् इति किम् ? पञ्चभिः अश्वैः क्रीता पञ्चाश्वा । एवकारः इष्टनियमार्थः तेन इह प्रतिषेधो न भवति— द्वयोः कुडवयोः समाहारः द्विकुडवी । तद्धितलुचि इति किम् ? द्विपण्या । 'विस्त'आदिप्रतिषेधः किम् ? द्विविस्ता । द्व्याचिता । द्विकम्बल्या ॥ ३४ ॥

## काण्डात् अक्षेत्रे । ३५ ।

'काण्ड'अन्तात् अक्षेत्रविषयात् द्विगोः तद्धितलुचि सत्यां स्त्रियां ङी भवति ।

द्वाभ्यां काण्डाभ्यां क्रीता [2]द्विकाण्डी । त्रिकाण्डी । अक्षेत्र इति किम् ? द्विकाण्डा क्षेत्रभक्तिः । 'काण्डं परिमाणं न' इति नियमेन प्रतिषेधे प्राप्ते वचनम् ॥ ३५ ॥

## पुरुषात् प्रमाणात् वा । ३६ ।

आयामः प्रमाणम्, प्रमाणवाचि'पुरुष'शब्दान्तात् द्विगोः तद्धितलुचि स्त्रियां वा ङी भवति ।

द्वौ पुरुषौ प्रमाणम् अस्याः द्विपुरुषी, द्विपुरुषा । प्रमाणात् इति किम् ? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा । समाहारे तु नित्यमेव ङी—द्विपुरुषी ॥ ३६ ॥

## जातेः अय-नित्यस्त्री-शूद्रात् । ३७ ।

[3]जातिवाचिनः अदन्तात् स्त्रियां ङी भवति, न तु यान्त—नित्यस्त्रीलिङ्ग—शूद्रात् ।

कुक्कुटी । नाडायनी । कठी । जातेः इति किम् ? देवदत्ता । अय-नित्यस्त्री-शूद्रात्

---

१ "ऊर्ध्वं मान किलोन्मानं परिमाण तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः" ॥-हैमे वचनम्-२।४।२३ । २ द्विकाण्डी । अक्षेत्र पा० । ३ 'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह" ॥ इति काशिका ४।१।६३। इत्येवं जातिलक्षणं बोध्यम् ।

इति किम् ? क्षत्रिया। मक्षिका। शूद्रा। 'मत्सी' इत्यादिः गौरादिः। 'य' इति वर्णमात्रग्रहणम् तेन स्थानिवद्भावाभावात् 'वतण्डी' इत्यत्र प्रतिषेधो न भवति। 'अतः' इत्यधिकारात् उपान्त्यस्य यकारान्तत्वोपचारः। 'महाशूद्री' इति समुदायात् ङी। जातिलक्षणस्य अयं प्रतिषेधः धवयोगलक्षणस्तु भवत्येव—शूद्रस्य भार्या शूद्री। अतः इति किम् ? आखुः ॥ ३७ ॥

## धवात् योगात् अज्येष्ठादिभ्यः। ३८।

धवः भर्ता तदभिधायिनः अकारान्तात् संबन्धात् स्त्रियां वर्तमानात् ङी प्रत्ययो भवति, न तु 'ज्येष्ठ'आदिभ्यः।

प्रष्ठस्य भार्या प्रष्ठी। गणकी। 'प्रष्ठ' आदयः 'सः अयम्' इत्यभिसंबन्धात् भार्यायां वर्तन्ते। 'तस्य इदम्' विवक्षायां तु 'प्राष्ठी' इत्यादि भवति। कुमार्यां भवः कौमारः तस्य भार्या कौमारी सा एव 'कुमारी' इति उच्यते। धवात् इति किम् ? प्रसूता। योगात् इति किम् ? देवदत्तो धवः, देवदत्ता भार्या स्वत एव, न तद्योगात्। अज्येष्ठादिभ्यः इति किम् ? ज्येष्ठा। कनिष्ठा। मध्यमा। गोपालिका। पशुपालिका। इति ज्येष्ठादिः। अत इति किम् ? सहिष्णोः भार्या सहिष्णुः ॥ ३८ ॥

## पूतक्रतु-अग्नि-वृषाकपि-कुसित-कुसीदात् ऐ च। ३९।

एभ्यः धववाचिभ्यः तद्योगात् स्त्रियां वर्तमानेभ्यः परः ङी प्रत्ययो भवति, तद्योगे च ऐकारः अन्तादेशः।

पूतक्रतोः भार्या पूतक्रतायी। अग्नायी। वृषाकपायी। कुसितायी। कुसीदायी॥ ३९ ॥

## मनोः औ च वा। ४०।

मनुशब्दात् धवाख्यात् तद्योगात् स्त्रियां वर्तमानात् ङी प्रत्ययो वा भवति, तद्योगे च औकारः ऐकारश्च अन्तादेशः।

मनोः भार्या मनावी, मनायी, मनुः ॥ ४० ॥

## मातुल-आचार्य-उपाध्यायात् आनङ् वा। ४१।

एभ्यः 'धव'आख्येभ्यः योगात् स्त्रियां वर्तमानेभ्यः ङी प्रत्ययो भवति, तद्योगे च 'आनङ्'अन्तादेशो वा।

मातुलानी, मातुली। आचार्यानी, आचार्यी। उपाध्यायानी, उपाध्यायी ॥ ४१ ॥

## वरुण-इन्द्र-मृड-भव-शर्व-रुद्रात्। ४२।

एभ्य 'धव'आख्येभ्यः योगात् स्त्रियां वर्तमानेभ्यः ङी प्रत्ययो भवति, तद्योगे च 'आनङ्' अन्तादेशः ।

वरुणानी । इन्द्राणी । मृडानी । भवानी । शर्वाणी । रुद्राणी । पृथग्योगः आनङः नित्यार्थः ॥ ४२ ॥

## सूर्यात् वा देवतायाम् । ४३ ।

'सूर्य'शब्दात् 'धव'आख्यात् योगात् देवतायां स्त्रियां वर्तमानात् ङी वा भवति, तद्योगे च 'आनङ्' अन्तादेशः ।

सूर्यस्य भार्या सूर्याणी, सूर्या । देवतायाम् इति किम् ? सूरी अन्या ॥ ४३ ॥

## अस्वाङ्गात् असह-नञ्-विद्यमानात् स्वाङ्गात् समासात् । ४४ ।

'सह'आदिवर्जात् अस्वाङ्गात् परं यत् स्वाङ्गवाचि तदन्तात् समासात् अदन्तात् स्त्रियां वा ङी भवति ।

पीनस्तनी, पीनस्तना । अतिकेशी, अतिकेशा । 'सह'आदिप्रतिषेधः किम् ? सहकेशा । अकेशा । विद्यमानकेशा । अस्वाङ्गात् इति [1]किम् ? पाणिपादा । स्वाङ्गात् इति किम् ? बहुशोफा ।

"अविकारोऽद्रवं मूर्तं[2] प्राणिस्थं स्वाङ्गमुच्यते ।

च्युतं च प्राणिनस्तत् तन्निभं च प्रतिमादिषु" ॥ [हैमसंग्रहश्लोके ४] ॥ ४४ ॥

## नासिका-उदर-ओष्ठ-जङ्घा-दन्त-कर्ण-शृङ्ग-अङ्ग-गात्र-कण्ठात् ।४५।

'नासिका'आदि-अन्तात् 'सह'आदिवर्जस्वाङ्गपूर्वपदात् समासात् स्त्रियां वा ङी भवति ।

दीर्घनासिकी, दीर्घनासिका । तलोदरी, तलोदरा । बिम्बोष्ठी, बिम्बोष्ठा । समजङ्घी, समजङ्घा । चारुदन्ती, चारुदन्ता । लम्बकर्णी, लम्बकर्णा । वक्रशृङ्गी, वक्रशृङ्गा । तन्वङ्गी, तन्वङ्गा । मृदुगात्री, मृदुगात्रा । कलकण्ठी, कलकण्ठा । पूर्वेण एव सिद्धे [3]नियमार्थं वचनम्–तेन बहुस्वर–संयोगोपान्तेभ्यः [4]अन्येभ्यो न भवति - सुललाटा । सुपार्श्वा । 'सह'-आदिप्रतिषेधः किम् ? सहनासिका । द्विगोस्तु नित्यमेव ङी–द्विपादी । त्रिपादी ॥ ४५ ॥

## पुच्छात् । ४६ ।

'सह'आदिवर्जस्वाङ्गपूर्वपदात् समासान्तात् स्त्रियां वा ङी भवति ।

---

१ किम् ? बहुशोफा पा० । २ "अद्रव मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं चेत् तेन चेत् तत् तथायुतम्" ॥ काशिका ४।१।५४ । ३ नियमार्थवचनम् पा० । ४ अन्येभ्योऽन्येभ्यो न पू० ।

कल्याणपुच्छी, कल्याणपुच्छा । असह–नञ्–विद्यमानात् इति किम् ? सहपुच्छा ॥ ४६ ॥

## कबर–मणि–विष–शरात् । ४७ ।

एभ्यः परः यः स्वाङ्गवाची 'पुच्छ'शब्दः तदन्तात् समासात् स्त्रियां ङीर्नित्यं भवति ।

कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ॥ ४७ ॥

## पक्षात् च उपमानात् । ४८ ।

उपमानवाचिपूर्वपदात् 'पक्ष-पुच्छ' अन्तात् समासात् स्त्रियां ङी भवति ।

उलूकपक्षी शाला । उलूकपुच्छी सेना ॥ ४८ ॥

## न नख-मुखात् नाम्नि । ४९ ।

'नख'-'मुख'अन्तात् समासात् स्त्रियां ङी न भवति, नाम्नि विषये ।

शूर्पणखा । गौरमुखा । नाम्नि इति किम् ? शूर्पनखी । गौरमुखी कन्या ॥ ४९ ॥

## क्रोडादिभ्यः । ५० ।

'क्रोड'आदि-अन्तात् समासात् स्त्रियां ङी न भवति ।

कल्याणक्रोडा । कल्याणखुरा । सुभगा । सुगला ॥ ५० ॥

## करणात् क्रीतात् । ५१ ।

करणवाचिनः पूर्वपदात् परं यत् 'क्रीत' इति, तदन्तात् समासात् स्त्रिया ङी भवति ।

वस्त्रक्रीती । वसनक्रीती । करणात् इति किम् ? सुक्रीता । दुष्क्रीता । समासात् इति किम् ? वस्त्रेण क्रीता ॥ ५१ ॥

## क्तात् अल्पे । ५२ ।

'करण'पूर्वपदात् 'क्त'प्रत्ययान्तात् समासात् स्त्रियां ङी भवति, पूर्वपदस्य अल्पत्वे गम्यमाने ।

अभ्रविलिप्ती द्यौः—अल्पाभ्रा इत्यर्थः । सूपविलिप्ती पात्री । अल्पे इति किम् ? चन्दनानुलिप्ता कन्या ॥ ५२ ॥

## 'गौर'आदीनाम् । ५३ ।

'गौर'आदीनां संबन्धिन्यां स्त्रियां वाच्यायां एभ्यः परो ङी प्रत्ययो भवति ।

गौरी। मत्सी। नदी। गौरादीनां संबन्धिन्यां स्त्रियाम् इति किम्? बहुगौरा नगरी।

गौर मत्स्य मनुष्य ऋष्य हय गवय मुकय शिङ्ग शृङ्ग पुट द्रुग द्रोण हरीकणी[1] पटर ओकण आमलक कुवल बदर विम्ब तर्कार शर्कार शर्कर शालन्द शष्कड सुसव षाण्डश आनन्द आढक सूपाट शष्कुल सूर्म सूच यूष सूष मालक शल्लक मालत धातक वेतस वृस अतस उमाभङ्ग मह मठ देह लवण सिव सौधर्म आयस्थूण भौलिङ्गि आलम्बि आलच्चि कालच्चि औद्ग्राहमानि मौरिकि भौलिकि आरट कटेटन मूलाट अधिकार सुन्दर मन्दर मण्डर पट पिण्ड ऊर्द सूर्द गूर्द पाण्ड लोहाण्ड कदर कदल तरुण तलुन अनडुही अनड्वाही[2] आग्रहायणी पृथिवी विकल विष्कल आश्मरथ्य काव्य शैव्य एहि पर्येहि अराल उद पड चण्ड नद भष प्लव चर गर तर चोर गाह सूद देव पिप्पल कोशातक शम करीर ।

जातिवाचिनः पाक-कर्ण-पर्ण-वालान्ताः ।

असत्-काण्ड-प्रान्त-शत-एक-अञ्चपूर्वाः पुष्पान्ताः ।

असम्-भस्त्रा-अजिन-एक-शण-पिण्डपूर्वाः फलान्ताः ।

अनञ्पूर्वः मूलान्तः ।

समान-आर्य-कृत-पाप-अवर-मामक-भागधेय-भेषज-सुमङ्गलाः संज्ञायाम् ।

कुश-कामुक-कट-कबर-कुण्ड-गोण-भाज-स्थल-नागाः यथासंख्यम् आयस-मैथु-नेच्छु-श्रोणि-केशपाश-अमत्र-आवपन-श्राण-अकृत्रिम-स्थूलेषु ।

काल-शबल-सारङ्ग-पिङ्गल-कल्माषाः वर्णे ।

नीलः प्राणि-ओषध्योः ।

रेवत-रोहिणौ नक्षत्रे । इति ।

गौरादि· आकृतिगणः । संप्रत्ययः पाठ. पुंभावनिवृत्त्यर्थः—अनडुहीभार्यः । "श्लुगभावार्थः" [ ] इति एके—पञ्चानडुहिः ॥ ५३ ॥

**अण्-अञ्-एय-इकण्-नञ्-स्नञ्-टितः । ५४ ।**

एतत्प्रत्ययान्तेभ्यः अदन्तेभ्यः स्त्रियां ङी भवति ।

औपगवी । औत्सी । सौपर्णेयी । आक्षिकी । स्त्रैणी । पौंस्नी ! कुरुचरी ॥५४॥

**नश्च पत्यन्तस्य वा । ५५ ।**

'पति'शब्द-अन्तात् स्त्रियां वर्तमानात् ङी वा भवति, तद्योगे च अन्तस्य 'नकार' आदेशः ।

---

१ "हरिण कण पटर उकण आमलक" इत्यादि काशिकापाठः ४।१।४१। अत्रापि 'हरीकणी' इत्येवम् ईदन्तापेक्षया 'हरिण' कण' इत्येवम् अदन्त शब्दद्वयं समुचितम् । २ 'अनडुही' इत्यादीनां चतुर्णां शब्दानां पाठः ।

दृढपत्नी, दृढपतिः । बहुपत्नी बहुपतिः ॥ ५५ ॥

**हिम-अरण्यात् उरौ आनङ् । ५६ ।**

आभ्यां महति अर्थे स्त्रियां वर्तमानाभ्यां परः ङी भवति, तद्योगे च आनङ् अन्तादेशः ।

उरु हिमम् हिमानी । उरु अरण्यम् अरण्यानी ॥ ५६ ॥

**यवन-यवात् लिपि-दुष्टे । ५७ ।**

'यवन-यव'शब्दाभ्यां लिपौ दुष्टे च अर्थे स्त्रियां ङी भवति, तद्योगे च आनङ् अन्तादेशः ।

यवनानी लिपिः । दुष्टः यवः यवानी ॥ ५७ ॥

**आर्य-क्षत्रियात् वा । ५८ ।**

आभ्यां स्त्रियां वा ङी भवति, तद्योगे च आनङ् अन्तादेशः ।

आर्याणी, आर्या । क्षत्रियाणी, क्षत्रिया । धवयोगे तु नित्यमेव ङी—आर्यी । क्षत्रियी ॥ ५८ ॥

**यञः वा यञ् [आयनङ्] । ५९ ।**

'यञ्'अन्तात् स्त्रियां ङी भवति, तद्योगे च आयनङ् अन्तादेशो वा ।

गार्गी, गार्ग्यायणी ॥ ५९ ॥

**'लोहित'आदि'सकल'अन्तात् । ६० ।**

'लोहित'आदेः 'सकल'अन्तात् स्त्रियां ङी भवति तद्योगे च आयनङ् अन्तादेशः ।

लौहित्यायनी । सांमित्यायनी । साकल्यायनी ॥ ६० ॥

**ष-अवटात् वा । ६१ ।**

'ष'अन्तात् 'अवट'शब्दाच्च स्त्रियां वा ङी भवति, तद्योगे च आयनङ् अन्तादेशः ।

पौतिमाष्यायणी, पौतिमाष्या । आवट्यायनी, आवट्या ॥ ६१ ॥

**कौरव्य-आसुरि-माण्डूकात् । ६२ ।**

एभ्यः स्त्रियां ङी भवति, तद्योगे च आयनङ् अन्तादेशः ।

कौरव्यायणी । आसुरायणी । माण्डूकायनी ॥ ६२ ॥

---

१ अत्र त्रुटितम् अतः [ ] एतच्चिह्नान्तर्गतम् समनुसंहितम् । 'अञो डायन् च वा'' । २।४।६७। इत्येवं हैमं सूत्रं समनुसंधेयम् । २ "शकल" इति हैमं सूत्रम् । २।४।६८। ३ सांसित्यायनी पा० ।

**इञः इतः । ६३ ।**

'इञ्'अन्तात् इकारान्तात् स्त्रियां ङी भवति ।

सुतंगमेन निर्वृत्ता सौतंगमी । इतः इति किम् ? औडुलोम्या । ६३ ॥

**नुः जातेः । ६४ ।**

'इकार'अन्तात् नृजातिवाचिनः स्त्रियां ङी भवति ।

अवन्ती । नुः इति किम् ? तित्तिरिः । जातेः इति किम् ? निष्कौशाम्बिः । इतः इति किम् ? दरत् ॥ ६४ ॥

**उतः अप्राणिनश्च अयु-रज्जुआदिभ्य ऊङ् । ६५ ।**

'उकार'अन्तात् नृजातिवाचिनः अप्राणिजातिवाचिनश्च परः स्त्रियाम् ऊङ् प्रत्ययो भवति, 'यु'शब्दान्त-रज्जुआदींश्च वर्जयित्वा ।

ब्रह्मबन्धूः । अलाबूः । उतः इति किम् ? वधूः । अप्राणिनश्च इति किम् ? आखुः । जातेः इति किम् ? पटुः । अयु-रज्जुआदिभ्य इति किम् ? अध्वर्युः इयं कन्या । रज्जुः । हनुः । 'रज्जु'आदयः प्रयोगगम्याः ॥ ६५ ॥

**उत्तरपदात् औपम्ये । ६६ ।**

उत्तरपदात् स्त्रियां वर्तमानात् औपम्ये गम्यमाने ऊङ् प्रत्ययो भवति ।

कदलीस्तम्भोरूः । औपम्ये इति किम् ? पीनोरुः ॥ ६६ ॥

**सह-शफ-सहित-संहित-लक्ष्मण-वामआदेः । ६७ ।**

'सह'आदि--आदेः उत्तरपदात् स्त्रियाम् ऊङ् प्रत्ययो भवति ।

सहोरूः । शफोरूः । सहितोरूः । संहितोरूः । लक्ष्मणोरूः[1] । वामोरूः ॥ ६७ ॥

**बाह्वन्त-कद्रु-कमण्डलोः नाम्नि । ६८ ।**

'बाहु'अन्तआदेः स्त्रियां नाम्नि विषये ऊङ् प्रत्ययो भवति ।

मद्रबाहूः । भद्रबाहूः । कद्रूः । कमण्डलूः । नाम्नि इति किम् ? वृत्तबाहुः । कद्रुः । कमण्डलुः ॥ ६८ ॥

**'पङ्गू'आदिः । ६९ ।**

'पङ्गू'आदय, 'ऊङ्'आदिप्रत्ययान्ताः स्त्रियां निपात्यन्ते ।

पङ्गूः ।

'श्वसुर' शब्दस्य धवयोगे जातौ वा श्वश्रूः ।

---

१ "लक्षण" इति २ "लक्षणोरूः" इति च पाणिनीये–४।१।७०।

नृ–नरयोः ङी 'नार' आदेशश्च–नारी ।

'सखि' शब्दस्य 'सख' शब्दस्य वा ङी–सखी ।

पत्युः ऊढायाम् नश्च अन्तादेशः–पत्नी ।

पतिः अस्याः अस्ति इति पतिवत्नी अविधवा ।

अन्तर्वत्नी गर्भिणी ।

भोज–सूतयोः अन्तस्य ष्यङ् यथासंख्यं क्षत्रिया–युवत्योः–भोज्या क्षत्रिया । सूत्या प्राप्तयौवना मानुषी । भोजा, सूता अन्या ॥ ६९ ॥

### यूनः तिः । ७० ।

'युवन्'शब्दात् स्त्रियां ति प्रत्ययो भवति ।

युवतिः ॥ ७० ॥

### क्रोष्टोः ऋः । ७१ ।

स्त्रियां वर्तमानस्य 'क्रोष्टु' शब्दस्य ऋकारः अन्तादेशो भवति ।

क्रोष्ट्री । पञ्चभिः क्रोष्ट्रीभिः क्रीतैः पञ्चक्रोष्ट्रभी रथैः ॥ ७१ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि पञ्चमः पादः समाप्तः ॥

*

## नाम्नि षष्ठः पादः

### क्रियाहेतुः कारकम् । १ ।

क्रियायाः हेतुः कर्तृआदि कारकं भवति । तत् च स्व-परसमवेतक्रियानिष्पादन-विषयं सामर्थ्यम्, 'करोति' इति 'कारकम्' इति अन्वर्थाश्रयणात् च अनाश्रितव्यापारस्य हेत्वादेः निमित्तमात्रस्य कारकत्वव्युदासः ॥ १ ॥

### अपाये अवधिः अपादानम् । २ ।

कायसंसर्गपूर्वकः बुद्धिसंसर्गपूर्वको वा विश्लेषः अपायः, तस्मिन् यद् अवधिभूतं तत् कारकम् अपादानसंज्ञं भवति ।

चौरेभ्यः त्रायते–तदुपघातप्रतीकारेण ततो निवर्तयति । शृङ्गात् शरो जायते–ततः आत्मानं प्रतिलभमानः निस्सरति । एवम् हिमवतः गङ्गा प्रभवति । उपाध्यायात् अन्तर्धत्ते–

ततः अदृश्यतया अपैति इत्यर्थः। अधर्मात् जुगुप्सते, अधर्मात् विरमति, धर्मात् प्रमाद्यति—जुगुप्सादिपूर्वकं ततो भावेन निवर्तते। भोजनात् पराजयते, अध्ययनात् पराजयते—भोजनम् अध्ययनं[1] वा असहमानः ततो निवर्तते इत्यर्थः। चैत्रात् मैत्रः पटुतरः—चैत्रः मैत्रेण पटुत्वेन संसृष्टः ततः अतिशयधर्मेण विभक्त इत्यर्थः। एवं माथुराः[2] पाटलिपुत्रकेभ्यः आढ्यतराः ॥ २ ॥

## कर्मणा यम् अभिप्रैति तत् संप्रदानम् । ३ ।

कर्मणा यम् अभिसंबध्नाति तत् कारकम् संप्रदानसंज्ञं भवति ।

राज्ञे कार्यम् आवेदयति । कुबेराय बलिः । 'अभि'ग्रहणात् इह न भवति—रजकः पृष्ठं ददाति। इह च भवति—छात्राय चपेटां प्रयच्छति ॥ ३ ॥

## शयादिभिः बहुलम् । ४ ।

शयादिक्रियाभिः यम् अभिप्रैति तत् कारकं संप्रदानसंज्ञं भवति बहुलम् ।

पत्ये शेते। चैत्राय कथयति। श्राद्धाय गेल्हते[3]। युद्धाय सन्नह्यति। चैत्राय क्रुध्यति। चैत्राय द्रुह्यति। छात्राय असूयति। क्वचिद् विकल्पः—प्रगम्य शास्त्रे, प्रगम्य शास्तारम्। पुष्पेभ्यः स्पृहयति, पुष्पाणि स्पृहयति ।

क्वचित् प्रवृत्तिः क्वचित् अप्रवृत्तिः ।
क्वचित् विभाषा क्वचित् अन्यत् एव ।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥

'पशुना रुद्रं यजति'[5] इति पूजायां यथालक्षणमेव कर्म-करणे। 'पशुं रुद्राय ददाति' इति विवक्षायां च अत एव बाहुलकात् सिद्धि[4] : ॥ ४ ॥

## क्रियाश्रयस्य आधारः अधिकरणम् । ५ ।

क्रियाश्रयस्य कर्तुः कर्मणः वा यः आधारः तत् कारकम् अधिकरणसंज्ञं भवति।

कटे आस्ते। [6]दिवि देवाः। तिलेषु तैलम्। गङ्गायां घोषः। युद्धे संनह्यति। अङ्गुल्यग्रे करिशतम् ॥ ५ ॥

## येन क्रियते तत् करणम् । ६ ।

१ °नं चाऽसह० पू० । २ माधुराः पा० । ३ गल्हते गर्हते-निन्दति-इत्यर्थः । ४ चतुर्थी विभक्तिः । ५ यजन्ति इति पा० । ६ दिवे देवाः पा० ।

येन कृत्वा क्रियते तत् कारकं करणसंज्ञं भवति ।

दात्रेण लुनाति । रथेन दीपिकया पथा याति ॥ ६ ॥

## कर्तुः व्याप्यं कर्म । ७ ।

कर्त्रा यत् क्रियया व्याप्यते तत् कारकं कर्मसंज्ञं भवति ।

कटं करोति । काष्ठं दहति । गां दोग्धि पयः । अजां नयति ग्रामम् । कर्तुः इति किम् ? माषेषु अश्वं बध्नाति—अश्वेन कर्मणा भक्षणक्रियया स्पर्शनक्रियया वा व्याप्यानां माषाणां कर्मसंज्ञा मा भूत् ॥ ७ ॥

## अकर्मणां वा काल-अध्व-भाव-देशम् आधारः अकर्म च । ८ ।

कालः मुहूर्तादिः । अध्वा गन्तव्यक्षेत्रं क्रोशादिः । भावः क्रियायोगः दोहादिः । देशः ग्राम-जनपद-नदी-पर्वतादिः । अकर्मणां धातूनां कालादिः आधारः कर्म वा भवति अकर्म च—कर्मसंज्ञापक्षेऽपि अकर्मसंज्ञा भवति इत्यर्थः ।

मासम् आस्ते, मासः आस्यते । क्रोशं स्वपिति । गोदोहम् आस्ते । कुरून् स्वपिति । सकर्मका अपि अविवक्षितकर्माणः अकर्मकाः—मासं पचति । क्रोशम् अधीते । पक्षे रात्रौ सुप्यते । रात्रौ अधीतम् । काल-अध्व-भाव-देशम् इति किम् ? गृहे आस्ते । अकर्म च इति किम् ? मासम् आस्यते । अकर्मणाम् इति किम् ? रात्रौ व्याकरणम् अधीतम् । कथं 'पचति ओदनं मासम्' 'पिबति पयः गोदोहम्' ? द्विकर्मकतया "कर्तुः व्याप्यं कर्म" [ नाम्नि षष्ठः पादः सूत्र ७ ] इत्येव भावात् ॥ ८ ॥

## अणिञ्कर्ता णौ । ९ ।

अकर्मकाणाम् अणिञवस्थायां यः कर्ता स णिञि सति कर्म वा भवति ।

पाचयति चैत्रम् चैत्रेण वा मैत्रः । 'गमयति चैत्रं मैत्रः' इत्यत्र तु परत्वाद् नित्य एव विधिः । उत्तरत्र 'नित्यअकर्म'ग्रहणात् इह अविवक्षितकर्मणां ग्रहणम् ॥ ९ ॥

## नित्यअकर्म-गति-बोध-अशनार्थ-शब्दकर्म-दृशः अखादि-अदि-क्रन्द-शब्दाय-ह्वः । १० ।

'वा' इति निवृत्तम् । 'नित्यअकर्म' ग्रहणात् नित्यअकर्मकाणाम् गत्यर्थानाम् बोधार्थानाम् [ अद्यर्थानाम्[1] ] शब्दक्रियाणाम् शब्दकर्मणाम्[2] दृशेश्च खादि-अदि-क्रन्द-शब्दाय-ह्ववर्जितानाम् अणिञवस्थायां यः कर्ता स णिञि सति कर्म भवति ।

१ भक्षणार्थानाम् इति भावः । २ शब्दकर्मकाणाम् पा० ।

आसयति चैत्रं मैत्रः । शाययति शिशुं माता । गमयति ग्रामं बटुं चैत्रः । बोधयति माणवकं धर्मं गुरुः । ज्ञापयति शिष्यं धर्मम् । भोजयति बटुम् ओदनं चैत्रः । आलापयति मैत्रं चैत्रः । आभाषयति चैत्रं गुरुं मैत्रः । श्रावयति मैत्रं शास्त्रं गुरुः । दर्शयति रूपतर्कं कार्षापणं चैत्रः । 'नित्यअकर्म'आदिग्रहणं किम् ? पाचयति ओदनं चैत्रेण । 'नित्य'ग्रहणम् अविवक्षितकर्मकव्युदासार्थम् । काल-अध्व-भाव-देशैः सर्वेऽपि धातवः सकर्मकाः इति अन्यकर्मापेक्षया नित्यअकर्मकाः । गतेः देशान्तरप्राप्तिरूपायाः ग्रहणम् इति इह न भवति—गमयति स्त्रियं मैत्रेण चैत्रः । नयतिश्च प्रापणाधीनप्राप्त्यर्थः इति न भवति-अजां नाययति ग्रामं चैत्रेण मैत्रः । बोधः ज्ञानमात्रम् न तद्विशेषः तथा च दृशिग्रहणम् । तेन इह न भवति—घ्रापयति चैत्रेण उत्पलं मैत्रः । स्पर्शयति बाला चैत्रेण स्तनयुगम् । अखादि-अदि-क्रन्द-शब्दाय-ह्वः इति किम् ? खादयति मोदकं चैत्रेण मैत्रः । शब्दाययति चैत्रो मैत्रेण शिशुम् । क्रन्दयति मैत्रं चैत्रेण । ह्वाययति मैत्रं चैत्रेण । खादि-अदोः अदर्थत्वात् ह्वा-शब्दाय-क्रन्दां च शब्दकर्मकत्वात् कर्मत्वे प्राप्ते प्रतिषेधः, ततः स्वव्यापाराश्रयं कर्तृत्वमेव । प्रयोजकव्यापारेण अणिक्कर्तुः व्याप्यत्वात् कर्मसंज्ञा सिद्धैव, नियमार्थं तु वचनम् ॥ १० ॥

## भक्षेः हिंसायाम् । ११ ।

भक्षयतेः स्वार्थिकण्यन्तस्य हिंसार्थस्य अणिगवस्थायां कर्ता णिगि सति कर्म भवति ।

भक्षयति बलीवर्दान् [3]शष्पं मैत्रः । वनस्पतीनां प्रसव-प्ररोह-वृद्ध्यादिमत्त्वेन चेतनत्वात् [4]तत्स्वामिनः वा तीव्रतरदुःखोत्पादात् भक्षेर्हिंसार्थता । हिंसायाम् इति किम् ? भक्षयति पिण्डीं शिशुना चैत्रः । भक्षयति पुत्रान् गार्ग्या । भक्षयतिः अत्र आक्रोशविषयः । अदर्थत्वात् पूर्वेणैव सिद्धौ नियमार्थं वचनम् ॥ ११ ॥

## वहेः प्रवेयः । १२ ।

प्राजिक्रियाव्याप्यः प्रवेयः । वहेः अणिगवस्थायां प्रवेयः कर्ता णिगि सति कर्म भवति ।

वाहयति बलीवर्दान् भारं कृषीवलः । प्रवेय इति किम् ? वाहयति भारं चैत्रेण । प्राप्त्यर्थे अकर्मकार्थं [च] वहौ नियमार्थम् प्रापणार्थे विध्यर्थं च वचनम् ॥ १२ ॥

---

१ प्रापणार्थः न प्राप्त्यर्थः पा० । २ °ह्वयः इति पा० पू० । ३ शस्य पू० । शष्पम्—सस्यम् सचेतनं तृणादिकम् । ४ यः वनस्पतीनां स्वामी तम् अपृष्ट्वा चौर्यपूर्वकत्वेन तृणादिकवनस्पतिभक्षणे तत्स्वामिनः दुःखोत्पादो भवत्येव इति आशयः । ५ "प्राप्त्यर्थे अकर्मके च वहौ नियमार्थम् प्रापणार्थे विध्यर्थं च वचनम्" १ । ३ । १२० । अमोघवृत्तौ ।

## हृ-क्रोः वा । १३ ।

अनयोः अणिञि वा कर्म भवति ।

विहारयति देशम् आचार्यम् आचार्येण शिष्यः । आहारयति ओदनं बालकं बालकेन माता । विकारयति सैन्धवान् सैन्धवैर्वा । विकारयति स्वरं क्रोष्टारं क्रोष्ट्रा वा चैत्रः । एतेषु यथासंख्यं गति-आहारार्थ-नित्याकर्म-शब्दकर्मकतया प्राप्ते विकल्पः अप्राप्ते— हारयति द्रव्यं मैत्रं मैत्रेग वा चैत्रः । कारयति कटं चैत्रं चैत्रेण वा मैत्रः ॥ १३ ॥

## दृशि-अभिवदोः आत्मने । १४ ।

दृशेः अभिपूर्वस्य वदेश्च अणिञि कर्ता णिञि सति वा कर्म भवति ।

दर्शयते राजा भृत्यान् भृत्यैर्वा । अभिवादयते गुरुः शिष्यं शिष्येण वा । आत्मने इति किम्? दर्शयति रूपतर्कं कार्षापणं चैत्रः । अभिवादयति गुरुः शिष्येण ॥ १४ ॥

## नाथः । १५ ।

'अणिक्कर्ता णौ' इति निवृत्तम् पृथग्योगात् । आत्मनेपदविषयस्य नाथतेर्व्याप्यं कर्म वा भवति । आत्मनेपदविषयता च अस्य आशिषि एव इति तत्रैव अयं विधिः ।

सर्पिर्नाथते, सर्पिषो नाथते—'सर्पिर्मे भूयात्' इति आशास्ते इत्यर्थः । आत्मने इति किम्? माणवकम् उपनाथति—अङ्ग ! पुत्रक ! अधीष्व—याचते इत्यर्थः ॥ १५ ॥

## जास-नाट-क्राथ-पिषः हिंसायाम् । १६ ।

एषां हिंसायां वर्तमानानां व्याप्यं कर्म वा भवति । प्राप्ते विभाषा ।

चौरस्य उज्जासयति, चौरम् उज्जासयति । चौरस्य उन्नाटयति, चौरम् उन्नाटयति । चौरस्य उत्क्राथयति, चौरम् उत्क्रथयति । चौरस्य पिनष्टि, चौरं पिनष्टि । हिंसायाम् इति किम्? 'जस् मोक्षणे'-चौरं बन्धनात् जासयति—मोक्षयति इत्यर्थः । 'नट नृत्तौ' नटं नाटयति नर्तकी । जास-नाट-क्राथानाम् उपान्त्यआकारनिर्देशः यत्र आकारश्रुतिः तत्रैव यथा स्यात्, तेन इह न भवति-दस्युम् उदजीजसत् । चौरम् अनीनटत् । दस्युम् उदचिक्रथत् । अत एव क्राथेः कर्मसंज्ञाप्रतिषेधपक्षे ह्रस्वत्वाभावः ॥ १६ ॥

## नि-प्रेभ्यः हनः । १७ ।

'नि'-'प्र'पूर्वस्य हन्तेर्व्याप्यं कर्म वा भवति ।

चौरस्य निहन्ति, चौरं निहन्ति । चौरस्य प्रहन्ति, चौरं प्रहन्ति । चौरस्य प्रणिहन्ति,

चौरं प्रणिहन्ति । चौरस्य निप्रहन्ति, चौरं निप्रहन्ति । बहुवचनं सर्वभङ्गपरिग्रहार्थम् ॥ १७॥

## 'रुजा'अर्थस्य अज्वरि-संतापेः कर्तरि भावे । १८ ।

'रुजा'अर्थस्य धातोः ज्वरि-संतापिवर्जितस्य तत् व्याप्यं कर्म वा भवति ।

[ कर्तरि भावे–भावश्चेद् रुजः कर्ता भवति ]

चौरस्य रुजति रोगः, चौरं रुजति रोगः । अपथ्याशिनम् आमयति । 'रुजा'-अर्थस्य इति किम्? "एति जीवन्तम् आनन्दः" [ वि० पु० ] । अज्वरि-संतापेः इति किम्? औदरिकं ज्वरयति । अत्याशिनं संतापयति रोगः । कर्तरि इति किम्? चौरं रुजति अत्यशने वातः । भाव इति किम्? चौरं रुजति श्लेष्मा ॥ १८ ॥

## कृञः प्रतियत्ने । १९ ।

सतः गुणाधानाय अपायपरिहाराय वा यत्नः तस्मिन् वर्तमानस्य करोतेर्व्याप्यं कर्म वा भवति ।

एधोदकस्य उपस्कुरुते, एधोदकम् उपस्कुरुते । प्रतियत्न इति किम्? कुम्भं करोति ॥ १९ ॥

## स्मृत्यर्थ–दय–ईशः । २० ।

'स्मरण'अर्थानाम् दयतेः ईशश्च व्याप्यं कर्म वा भवति ।

मातुः स्मरति, मातरं स्मरति । मातुः अध्येति, मातरम् अध्येति । सर्पिषः दयते, सर्पिर्दयते । लोकानाम् ईष्टे, लोकान् ईष्टे । कर्मअविवक्षायाम् 'माषाणाम् अश्नीयात्' इत्यादिवत् शेषषष्ठी पक्षे सिद्धैव, नियमार्थस्तु प्रपञ्चः तेन एषां 'नाथ'प्रभृतीनां धातूनां कारकान्तरं शेषरूपेण न विवक्ष्यते सर्पिषा बलस्य नाथते । मात्रा स्मृतम् । "अयत्नजे" [ नाम्नि अष्टमः पादः सू० २४ ] इति समासाभावार्थश्च ॥ २० ॥

## पण–व्यवहोः विनिमेय–द्यूतपणम् । २१ ।

विनिमेयम् क्रेय–विक्रेयम् । द्यूतपणः द्यूतजेयम् । पणतेः 'वि'–'अव'पूर्वस्य च हरतेः व्याप्यौ विनिमेय–द्यूतपणौ वा कर्मसंज्ञौ भवतः ।

---

१ 'समस्त-व्यस्त-विपर्यस्त' इति सर्वे भङ्गाः । 'निप्रहन्ति' इत्यादि समस्तम् । 'निहन्ति'इत्यादि व्यस्तम् । 'प्रणिहन्ति' इत्यादि विपर्यस्तम् । २ ११३।११३। अमोघवृत्तौ । ३ "एति जीवन्तमानन्दो नरं वर्षशतादपि । कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे" ॥१॥ विष्णुपुराणे" इति श्रीसिद्ध-हेमबृहद्वृत्तिन्याससारसमुद्धारकाराः श्रीकनकप्रभसूरयः ।२।२।१३। अस्य सूत्रस्य न्याससारसमुद्धारे। काशिकायाम् "रुजार्थानाम्" इत्यादिसूत्रे एतत् पद्यं भिन्नरूपेण विद्यते–"एति जीवन्तमानन्दः नरं वर्षशतादपि । जीव पुत्रक ! मा मैव तपः साहसमाचर"–२।३।५४। ४ २।२।१२। इत्यस्य सूत्रस्य वृत्तौ "पुनर्यत्नः प्रतियत्नः" । श्रीहेमचन्द्रसूरयः । ५ "शेषे षष्ठी अयत्नजे" इति संपूर्णं सूत्रम् ।

शतस्य पणायति, शतं पणायति—क्रय-विक्रये द्यूतपणत्वे वा[1] विनियुङ्क्ते इत्यर्थः। दशानां व्यवहरति, दश व्यवहरति। विनिमेय-द्यूतपणम् इति किम्? देवं पणायति—स्तौति—इत्यर्थः। शलाकां व्यवहरति—विगणयन् गोपायति—इत्यर्थः। वचनभेदात्[2] यथा-संख्याऽभावः ॥ २१ ॥

## उपसर्गाद् दिवः । २२ ।

उपसर्गात् परस्य दीव्यतेः विनिमेय—द्यूतपणौ वा कर्मसंज्ञौ भवतः।

शतस्य प्रदीव्यति, शतं प्रदीव्यति। उपसर्गाद् इति किम्? शतस्य दीव्यति। विनिमेय—द्यूतपणम् इति किम्? शलाकां प्रदीव्यति—विगणयन् अपहरति—इत्यर्थः ॥२२॥

## न । २३ ।

दीव्यतेः विनिमेय-द्यूतपणौ कर्मसंज्ञौ न भवतः उपसर्गपूर्वस्य विकल्पविधानात् अनुपसर्गस्य अयं निषेधः।

शतस्य दीव्यति। विनिमेय-द्यूतपणम् इति किम्? देवं दीव्यति—स्तौति—इत्यर्थः ॥ २३ ॥

## करणं करणं च । २४ ।

दीव्यतेः करणम् कर्म च करणं च भवति—कर्म-करणसंज्ञे युगपद् भजति—इत्यर्थः।

अक्षान् दीव्यति। अक्षाणां देवनम्। अत्र कर्मत्वे द्वितीया-षष्ठ्यौ। अक्षैर्दीव्यति। अक्षदेवनाः। अत्र करणत्वात् तृतीया-अनटौ। 'वा' इति सिद्धे 'करणं च' इति वचनं युगपत् संज्ञाद्वयसमावेशार्थम्। अक्षैर्देवयते मैत्रः चैत्रेण। अत्र करणत्वात् तृतीया, कर्मत्वाच्च नित्याऽकर्मलक्षणं अणिङ्कर्तुः कर्मत्वम् देवयतेश्च "प्राणिनि अणिगः नाप्यात् णिगः" [आख्या० द्वितीयः पादः सू० ७५] इति अकर्मलक्षणं परस्मैपदं च न भवति ॥ २४ ॥

## स्वतन्त्रः कर्ता । २५ ।

क्रियासिद्धौ यः स्वतन्त्रः कर्ता स कर्तृसंज्ञः भवति।

चैत्रेण कृतम्। अमीषां कारकाणाम् एकत्र युगपत् अनेकप्राप्तौ परं परं भवति—ग्रामाय दत्त्वा तीर्थं गतः ॥ २५ ॥

---

१ वा नियु॰ पा॰। २ सूत्रे पण—व्यवहोः इति द्विवचनम् विनिमेय—द्यूतपणम् इति एकवचनम् इत्येवं वचनभेदः। ३ नाम्नः षष्ठपादस्थितदशमसूत्रेण।

**फल्गुनी-प्रोष्ठपदस्य नक्षत्रे बहुवद् वा । २६ ।**

'फल्गुनी'शब्दस्य 'प्रोष्ठपद'शब्दस्य च द्वौ नक्षत्ररूपौ अर्थौ वा बहुवद् भवतः ।

कदा पूर्वे फाल्गुन्यौ, कदा पूर्वाः फाल्गुन्यः । कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः । नक्षत्रे इति किम् ? फल्गुनीषु जाते फाल्गुन्यौ माणविके । द्विवचननिर्देशः किम् ? एकस्मिन् ज्योतिषि मा भूत् । 'संपन्नो यवः संपन्ना यवाः' इति जाति-व्यक्ति-विवक्षया सिद्धम् ॥ २६ ॥

**तद्धितलुचि अगोणी-सूच्योः ष्यङादेः श्लुक् । २७ ।**

तद्धितस्य लुचि परतः ष्यङादेः श्लुक् भवति, गोणी-सूचीशब्दौ वर्जयित्वा ।

पञ्च इन्द्राण्यः देवताः अस्य पञ्चेन्द्रः । कुवल्या विकारः कुवलम् । 'हरीतकी फलम्' इत्यत्र लुगर्थस्य स्त्रीत्वात् पुनः ङी । अगोणी-सूच्योः इति किम् ? पञ्चभिः गोणीभिः क्रीतम् पञ्चगोणिः । दशसूचिः ॥ २७ ॥

**गोण्याः ह्रस्वः मेये । २८ ।**

'गोणी'शब्दस्य उपचारात् मेये वर्तमानस्य ह्रस्वः भवति ।

गोणिः । मेय इति किम् ? गोणी ॥ २८ ॥

**स्वरस्य क्लीबे । २९ ।**

क्लीबे वर्तमानस्य स्वरान्तस्य ह्रस्वः भवति ।

कीलालपम् । ग्रामणि कुलम् । 'काण्डीभूतं कुलम्' इत्यादौ अलिङ्गत्वात् न भवति ॥ २९ ॥

**समासस्य अन्ते नीचः अनंशिसमास-ईयोबहुव्रीहेः ङ्यादेः । ३० ।**

समासस्य अन्ते वर्तमानस्य उपसर्जनभूतस्य अंशिसमासान्तवर्जितस्य 'ईयस्'-अन्तबहुव्रीह्यन्तवर्जितस्य च ङ्यादेः ह्रस्वो भवति ।

निष्कौशाम्बिः । अतिखट्वः । समासस्य इति किम् ? कुमारीयतेः क्विप्-कुमारी पुमान् । अन्त इति किम् ? कुमारीप्रियः । नीचः इति किम् ? राजकुमारी । अनंशि-समास-ईयोबहुव्रीहेः इति किम् ? अर्धपिप्पली । बहुश्रेयसी । बहुव्रीहिग्रहणं किम् ? निःश्रेयसिः ॥ ३० ॥

**गोः । ३१ ।**

---

१ °शची° पू० पा० । २ वर्जयित्वा पू० । ३ °पिप्पली पू० ।

समासस्य अन्ते वर्तमानस्य नीचः 'गो'शब्दस्य ह्रस्वः भवति ।

चित्रगुः । नीचः इति किम् ? सुगौः ॥ ३१ ॥

## अण्-ङ्यः के प्रत्यये । ३२ ।

अणः ङीप्रत्ययस्य च के प्रत्यये परे ह्रस्वः भवति ।

सोमपकः । सोमपिका । लक्ष्मिका । यवागुका । पट्विका । 'ङी'ग्रहणं पुंभाव-बाधनार्थम् । प्रत्यये इति किम् ? पाकः ॥ ३२ ॥

## न कचि । ३३ ।

अणः ङीप्रत्ययस्य च कचि परे ह्रस्वो न भवति ।

बहुकीलालपाकः । बहुकुमारीकः । स्वारीकः । काकलीकः ॥ ३३ ॥

## वा आपः । ३४ ।

आपः कचि परे ह्रस्वो वा भवति ।

प्रियखट्वकः, प्रियखट्वाकः ॥ ३४ ॥

## इत् च अपुंसः अनितः कि अस्यादेः आ । ३५ ।

असभविपुंलिङ्गार्थात् शब्दात् विहितस्य आपः स्थाने अनकारानुबन्धस्य प्रत्ययस्य अवयवे ककारे आप्परे इकारः ह्रस्वश्च आदेशो भवति वा, न चेत् ककारात् परः आप् स्यादेः परो भवति ।

खट्विका, खट्वका, खट्वाका । प्रियखट्विका, प्रियखट्वका, प्रियखट्वाका । अपुंसः इति किम् ? न विद्यते खट्वा अस्याः अखट्वा, अल्पा अखट्वा अखट्विका । अनितः इति किम् ? अनुकम्पिता आर्द्रा दत्ता आर्द्रका । आपि इति किम् ? प्रियखट्वाकः चैत्रः । अस्यादेः इति किम् ? प्रियखट्वाकम् अतिक्रान्ता अतिप्रियखट्वाका ॥ ३५ ॥

## स्व-ज्ञ-अज-भस्त्र-अधातु-त्यय-कात् । ३६ ।

'स्व'आदिभ्यः धातु-त्यवर्जयकार-ककाराभ्यां च परस्य आपः स्थाने अनितः प्रत्ययस्य अवयवे ककारे आप्परे इकार आदेशो वा भवति, न तु स्यादेः परे आपि ।

कुत्सिता स्वा ज्ञातिः स्विका, स्वका । अस्विका । अस्वका । ज्ञिका, ज्ञका । अजिका, अजका । निर्भस्त्रिका, निर्भस्त्रका । आर्यिका, आर्यका । चटकिका, चटकका । 'भस्त्र'ग्रहणं न्यगर्थम् अनीचो हि पूर्वेणैव विकल्पः सिद्धः । धातु-त्यप्रतिषेधः

---

१ १।३।८७। शाकटायनीये सूत्रम् ।

किम्? सुनयिका । अशोकिका । दाक्षिणात्यिका । आपः इति किम्? कुत्सिता स्वा आत्मा आत्मीया वा स्विका । प्रियहयिका । अस्यादेः इति किम्? अतिभस्त्राका ॥३६॥

## द्वि-एष-सूत-पुत्र-वृन्दारस्य । ३७ ।

एषाम् अन्तस्य अनित्प्रत्ययावयवे ककारे आप्परे इकार आदेशो वा भवति, न तु स्यादेः परे आपि ।

द्विके, द्वके । एषिका, एषका । सूतिका, सूतका । पुत्रिका, पुत्रका । वृन्दारिका, वृन्दारका । 'एष' इति सविकारनिर्देशात् इह न भवति—ऐतिकाश्चरन्ति[1] ॥ ३७ ॥

## वौ वर्तिका । ३८ ।

वौ वाच्ये 'वर्तिका' इति वा निपात्यते ।

वर्तिका, वर्तका शकुनिः । वौ इति किम्? वर्तिका अन्या ॥ ३८ ॥

## अक्षिपकादेः अतः । ३९ ।

'क्षिपक'आदिवर्जितस्य शब्दरूपस्य संबन्धिनः अकारस्य अनित्प्रत्ययावयवे ककारे आप्परे नित्यम् इकार आदेशो भवति, न तु स्यादेः परे आपि ।

कारिका । हारिका । क्षिपकादिप्रतिषेधः किम्? क्षिपका । ध्रुवका । यका । सका । चटका[2] । इष्टका । तारका ज्योतिषि । वर्णका तान्तवे प्रावरणविशेषे । अष्टका पितृदैवत्ये । अतः इति किम्? नौका । अनितः इति किम्? जीवका । नन्दका । प्रत्ययस्य अवयवे ककारे इति किम्? शक्नोति इति शका । अस्यादेः इति किम्? बहुपरिव्राजिका मथुरा ॥ ३९ ॥

## नरिका मामिका । ४० ।

एते अकारस्य इत्वेन निपात्येते ।

नरान् कायति इति नरिका । मम इयम् मामिका ॥ ४० ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि षष्ठः पादः समाप्तः ॥

*

---

१ 'एत'शब्दः कर्बुरवर्णवाचकः अतः एतिकाः चित्रविचित्रवर्णयुक्ताः । २ वटका । पा० ।

# नाम्नि सप्तमः पादः

## संबन्धे । १ ।

अधिकारः अयम् आ शास्त्रपरिसमाप्तेः । इतः ऊर्ध्वम् वक्ष्यमाणं संबन्धे सति वेदितव्यम् ।

वक्ष्यति—'निकषा-समया-हा-धिक्-अति-अन्तरा-अन्तरेणैश्च' [ नाम्नि सप्तमः पादः सू० ५ ] चैत्रं मैत्रं चान्तरा पुस्तकम् । इह न भवति—'चैत्र-मैत्रयोः अन्तरा पुस्तकम्' अत्र चैत्र-मैत्रयोः पुस्तकेन संबन्धः न 'अन्तरा' इत्यनेन । 'कर्मणः अण्' [ कृत् द्वितीयपादे सू० १५ ] कुम्भं करोति कुम्भकारः । इह न भवति—पश्य कुम्भम्, करोति कटं चैत्रः । 'अयदि स्मृत्यर्थे भविष्यन्ती' [ कृत् तृतीयपादे सू० २४ ] स्मरसि मित्र ! लाटदेशे वत्स्यामः । इह न भवति—स्मरति चैत्रः मातरम्, अवसाम लाटदेशे । 'ङसः अपत्ये' [ ] उपगोः—अपत्यम् औपगवः । इह न भवति—गृहम् उपगोः, अपत्यं चैत्रस्य ॥ १ ॥

## नाम्नः प्रथमा एक-द्वि-बहौ । २ ।

एक-द्वि-बहुषु वर्तमानात् नाम्नः परा यथासंख्यं सि-औ-जस् लक्षणा प्रथमा विभक्तिर्भवति । 'कर्म'आदिषु 'द्वितीया'आदिविभक्तिविधानात् इह अर्थमात्रे प्रथमा । तच्च अर्थमात्रम्—स्वार्थ-द्रव्य-लिङ्ग-संख्या-शक्तिलक्षणम् । तत्र शब्दस्य अर्थे प्रवृत्तिनिमित्तम् 'तल्'आदिप्रत्ययवाच्यम् स्वरूप-जाति-गुण-क्रिया-द्रव्य-संबन्धआदिरूपं स्वार्थः । स च भावः विशेषणम् गुणः इति च आख्यायते ।

डित्थः । गौः । शुक्लः । कारकः । दण्डी । राजपुरुषः । औपगवः । यत् पुनः 'इदम्'-'त्यत्'इत्यादिना वस्तूपलक्षणेन सर्वनाम्ना व्यपदेश्यम् स्वार्थस्य व्यवच्छेद्यम् लिङ्ग-संख्या-शक्तिआदिआश्रयः सत्त्वभूतं तत् द्रव्यम् तच्च 'विशेष्यम्' इति च आख्यायते । 'ङी'-'आप्'आदिप्रत्ययहेतुः स्त्री-पुं-नपुंसकं लिङ्गम् । भेदप्रतिपत्तिहेतुः एकत्वादिका संख्या । स्व-पराश्रितक्रियानिष्पत्तिहेतुः कारकरूपा तत्पूर्वकसंबन्धरूपा च शक्तिः । सा द्विधा—'तिव्'आदिभिः अभिहिता अनभिहिता च । तत्र अभिहिता अर्थमात्रम्—क्रियते कटः । पचति चैत्रः । स्नानीयं चूर्णम् । अनभिहितायां 'द्वितीया'आद्या विभक्तयः ॥२॥

## आमन्त्र्ये । ३ ।

---

१ इति या आ पा० ।

प्रसिद्धतत्संबन्धस्य किमपि आख्यातुम् अभिमुखीकरणम् आमन्त्रणम्, तद्विषयः आमन्त्र्यः तस्मिन् वर्तमानात् नाम्नः एक-द्वि-बहौ यथासंख्यं प्रथमा भवति ।

हे देवदत्त ! । हे देवदत्तौ ! । हे देवदत्ताः ! । आमन्त्र्यस्य क्रियाविशेषकत्वात् विशेषणविशेष्यभावे षष्ठीप्राप्तौ वचनम् ॥ ३ ॥

### द्विः अधः-अधि-उपरिभिः अप्रधानात् द्वितीया । ४ ।

द्विरुक्तैः अधः-अधि-उपरिभिर्युक्तात् अप्रधानात् नाम्नः एक-द्वि-बहौ यथासंख्यं अम्–औ–शस् लक्षणा द्वितीया विभक्तिर्भवति ।

अधोऽधो ग्रामं ग्रामाः । अध्यधि ग्रामं क्षेत्राणि । उपर्युपरि ग्रामं ग्रामाः । द्विः इति किम् ? अधः प्रासादस्य । षष्ठ्यपवादो योगः ॥ ४ ॥

### निकषा-समया-हा-धिक्-अन्तरा-अन्तरेणैश्च । ५ ।

एभिर्युक्तात् अप्रधानात् नाम्नः एक-द्वि-बहौ यथासंख्यं द्वितीया विभक्तिर्भवति ।

निकषा पर्वतं कुण्डम् । समया पर्वतं नदी । हा ! देवदत्तं अयशः प्रवृद्धम् । धिक् चैत्रं वर्धते व्याधिः । अतिवृद्धं कुरून् महद् बलम्–कुर्वतिक्रमेण वृद्धम्–इत्यर्थः । अन्तरा निषधं नीलं च विदेहाः । अन्तरेण गन्धमादनं माल्यवन्तं च उत्तराः कुरवः । 'हा-धिक्'–आदिसाहचर्यात् 'अन्तरा'-'अन्तरेण'शब्दयोः अव्यययोः ग्रहणात् इह न भवति–राजधान्या अन्तरायां पुरि वसति । किं ते केशव-अर्जुनयोः अन्तरेण गतेन ? । 'हा तात !' 'धिक् मातः !' इत्यादौ 'तात'आदेः आमन्त्र्यतया विवक्षा, न 'हा'आदियुक्तत्वेन इति न भवति । 'हा कृतं चैत्रस्य' 'धिक् कृतं मैत्रस्य' 'हा'-'धिक्'शब्दाभ्यां 'कृत'शब्दे न्यग्भूतत्वात् न चैत्रादेः साक्षात् योगः किन्तु तद्विशिष्टेन 'कृत'शब्देन । चकारः अनुक्तसमुच्चयार्थः तेन–'बुभुक्षितं न प्रतिभाति किञ्चित्' इत्यादौ अपि भवति ॥ ५ ॥

### सर्व-उभय-अभि-परिणा तसा । ६ ।

एभिः 'तस्'अन्तैर्युक्तात् अप्रधानात् नाम्नः द्वितीया भवति ।

सर्वतः ग्रामं वनानि । उभयतः ग्रामम् । अभितः ग्रामम् । परितः ग्रामम् ॥६॥

### 'टा'अर्थे अनुना । ७ ।

'टा'अर्थः 'हेतु'आदिः, तत्र वर्तमानात् 'अनु'शब्देन युक्तात् अप्रधानात् नाम्नः द्वितीया भवति ।

[1] नास्ति इदम् उदाहरणं पा० पुस्तके ।

जिनजन्ममहोत्सवम् अनु आगच्छन् सुराः—तेन हेतुना इत्यर्थः । पर्वतम् अनु आसिता सेना—तेन सह संबद्धा—तेन कर्त्रा करणेन वा कृतान्ता इत्यर्थः । तृतीयापवादो योगः ॥ ७ ॥

## वीप्स्य-लक्षण-इत्थंभूतेषु अभिना । ८ ।

अवयवशः समुदायस्य 'क्रिया'आदिना साकल्येन व्याप्तुम् इच्छा वीप्सा तत्कर्म वीप्स्यम् । येन लक्ष्यते तत् लक्षणम्—चिह्नम् । केनचित् विवक्षितेन प्रकारेण भावः इत्थंभावः तद्विषयः इत्थंभूतः । एषु अर्थेषु वर्तमानात् अभिना युक्तात् अप्रधानात् नाम्नः द्वितीया भवति ।

वृक्षम् वृक्षम् अभि सिच्यते । वृक्षम् अभि[1] विद्योतते विद्युत् । साधुः देवदत्तः मातरम् अभि । एतेषु इति किम् ? यत् अत्र मम अभि स्यात् तत् दीयताम्—अत्र अभिना भागसंबन्धः द्योत्यते—'यः अत्र मम भागः स्यात्' इति । बहुवचनम् 'एक-द्वि-बहौ' इत्यनेन सह यथासंख्याऽभावार्थम् ॥ ८ ॥

## भागिनि च प्रति-परि-अनुभिः । ९ ।

स्वीक्रियमाणः अंशः भागः तदीश्वरो भागी, तस्मिन् 'वीप्स्य'आदिषु च अर्थेषु वर्तमानात् 'प्रति'आदिभिर्युक्तात् अप्रधानात् नाम्नः द्वितीया भवति ।

यद् अत्र मां प्रति स्यात् , मां परि, माम् अनु तद् दीयताम्—यः अत्र मम भागः आभजति स दीयताम्—इत्यर्थः । वीप्स्ये—वृक्षं वृक्षं प्रति, वृक्षं वृक्षं परि, वृक्षं वृक्षम् अनु सेचनम् । लक्षणे—वृक्षं प्रति, वृक्षं परि, वृक्षम् अनु[2] विद्योतते विद्युत् । इत्थंभूते—साधुः देवदत्तः मातरम् प्रति, मातरं परि, मातरम् अनु । एतेषु इति किम् ? अनु वनस्य अशनिर्गता—समीपे इत्यर्थः । अत्रापि बहुवचनं यथासंख्याऽभावार्थम् ॥ ९ ॥

## उत्कृष्टे अनु-उपेन । १० ।

उत्कृष्टे अर्थे वर्तमानात् अनु-उपाभ्यां युक्तात् अप्रधानात् नाम्नः द्वितीया भवति।

अनु शाकटायनं वैयाकरणाः । उप कालिदासं कवयः—तस्मात् अन्ये हीनाः इत्यर्थः ॥ १० ॥

## कर्मणि । ११ ।

कर्मणि वर्तमानात् अप्रधानात् नाम्नः द्वितीया भवति ।

कटं करोति । 'क्रियते कटः' इत्यादौ उक्ते कर्मणि प्रथमा । अप्राधान्यं क्रिया-

---

१ अभि विद्यते विद्युत् पु० । २ अनु द्योतते पा० ।

पदापेक्षम् तेन 'अजां नयति ग्रामम्' इत्यादौ 'ग्राम'आद्यपेक्षया अजादेः प्रधानत्वेऽपि अप्रधानत्वं न विहन्यते ॥ ११ ॥

## क्रियाविशेषणात् । १२ ।

क्रियाविशेषणात् अप्रधानात् नाम्नः द्वितीया भवति ।

मृदु पचति । स्तोकं पचति । पूर्वेण एव सिद्धे विभक्त्यन्तरबाधनार्थं वचनम् तेन 'शोभनं पक्ता' इत्यादौ षष्ठी न भवति ॥ १२ ॥

## काल-अध्वनोः व्याप्तौ । १३ ।

व्याप्तिर्द्रव्यादिना कार्त्स्न्येन संबन्धः, तस्यां द्योत्यायां कालवाचिनः अध्ववाचिनश्च अप्रधानात् नाम्नः द्वितीया भवति ।

मासं गुडधानाः । क्रोशं कुटिला नदी । योजनम् अधीते । व्याप्तौ इति किम्? मासे मासस्य द्व्यहं गुडधानाः । षष्ठी-सप्तम्यपवादो योगः । भावाद् अपि इच्छन्ति अन्ये—गोदोहं बुद्बुदाः ॥ १३ ॥

## सिद्धौ तृतीया । १४ ।

सिद्धिः क्रियाफलनिष्पत्तिः, तस्यां द्योत्यायां काल-अध्ववाचिनः अप्रधानात् नाम्नः एक-द्वि-बहौ यथासंख्यं टा-भ्याम्-भिस् लक्षणा तृतीया भवति ।

मासेन मासाभ्याम् मासैर्वा व्याकरणम् अधीतम् । सिद्धौ इति किम्? मासम् अधीतं शब्दानुशासनम् अनेन, न च गृहीतम् । भावाद् अपि इच्छन्ति अन्ये—गोदोहेन कृतः कटः ॥ १४ ॥

## हेतु-कर्तृ-करण-इत्थंभूतलक्षणे । १५ ।

फलसाधनयोग्यः पदार्थः हेतुः, हेतुआदिषु अर्थेषु वर्तमानात् अप्रधानात् नाम्नः तृतीया भवति ।

धनेन कुलम् । चैत्रेण कृतम् । दात्रेण लुनाति । अपि भवान् कमण्डलुना छात्रम् अद्राक्षीत् । छात्रत्वादिकं प्रकारम् आपन्नस्य कमण्डलुआदि लक्षणम् । 'अपि भवान् कमण्डलुपाणिं छात्रम् अद्राक्षीत्' इत्यत्र लक्ष्यप्रधानो निर्देशः न लक्षणप्रधानः इति न भवति । 'समेन धावति'—समेन पथा धावति इत्यर्थः । 'अक्ष्णा काणः' इत्यादौ करणे एव तृतीया ॥ १५ ॥

---

१ कार्त्स्न्यसंबन्धः पा० । २ °त् छात्रादिकं प्र° पा० ।

## 'सह'अर्थेन । १६ ।

सहार्थः तुल्ययोगः विद्यमानता च । तेन युक्ते अर्थे वर्तमानात् अप्रधानात् नाम्नः तृतीया भवति ।

पुत्रेण सह आगतः । पुत्रेण सह स्थूलः । पुत्रेण साकम् । 'अर्थ'ग्रहणं पर्यायार्थम् ॥ १६ ॥

## समः ज्ञः व्याप्ये वा अस्मृतौ । १७ ।

'सम्'पूर्वस्य जानातेः अस्मृतौ वर्तमानस्य व्याप्ये वर्तमानात् अप्रधानात् नाम्नः तृतीया वा भवति ।

मात्रा संजानीते, मातरं संजानीते । सम इति किम्? मातरं जानाति । अस्मृतौ इति किम्? मातरं संजानाति—स्मरति इत्यर्थः । व्याप्ये इति किम्? मातरं स्वरेण संजानीते—करणे विकल्पो न भवति ॥ १७ ॥

## अधर्म्ये दाणा आत्मनेपदं च देये । १८ ।

अधर्म्ये अर्थे वर्तमानेन दाणा युक्तात् देये व्याप्ये वर्तमानात् अप्रधानात् नाम्नः तृतीया भवति, तस्माच्च दाणः आत्मनेपदम् ।

दास्या संप्रयच्छते—कामुकः सन् तस्यै ददाति इत्यर्थः । दाणा इति किम्? तस्यै संददाति । अधर्म्ये इति किम्? पत्न्यै संप्रयच्छति । देये इति किम्? द्रव्यं वृषल्या संप्रयच्छति । द्रव्यात् न भवति ॥ १८ ॥

## तुमर्थस्य स्थानिनः चतुर्थी । १९ ।

यस्य अर्थः प्रतीयते न च प्रयोगः स स्थानी । स्थानिनः तुमर्थस्य व्याप्ये वर्तमानात् अप्रधानात् नाम्नः एक-द्वि-बहौ यथासंख्यं ङे-भ्याम्-भ्यस् लक्षणा चतुर्थी भवति ।

उदकाय व्रजति—उदकम् आहर्तुं व्रजति इत्यर्थः । पाकाय व्रजति । भूतये व्रजति । तुमर्थस्य इति किम्? प्रविश पिण्डीम्, अत्र 'भक्षय' इति पञ्चम्यन्तं स्थानि । स्थानिनः इति किम्? पाकं कर्तुं व्रजति । व्याप्ये इति किम्? उदकाय घटेन व्रजति, घटात् न भवति ॥ १९ ॥

## मन्यस्य अ'काक'आदिषु वा यतः अवज्ञा । २० ।

यस्मात् मन्यस्य अवज्ञा तस्मात् 'काक'आदिवर्जितात् मन्यतेः व्याप्यात् अप्र-

१ पाणिनीयतन्त्रे लोट्लकारान्तम् इदं क्रियापदम् न तु तुमर्थकम् । अत्र लोट्लकारस्यैव पञ्चमी इति संज्ञा ।

धानात् नाम्नः चतुर्थी वा भवति ।

न त्वा तृणाय मन्ये, न त्वा तृणं मन्ये—तृणमपि न मन्ये किन्तु ततः अपि निकृष्टम् इति अवज्ञा । मन्यस्य इति किम्? न त्वा तृणं चिन्तयामि । 'श्य'निर्देशः किम्? न त्वां तृणं मन्वे । अ'काक'आदिषु इति किम्? न त्वा काकं मन्ये । न त्वा शृगालं मन्ये । 'काक'आदयः प्रयोगगम्याः । यतः इति किम्? न त्वा तृणाय मन्ये, युष्मदः न भवति । अवज्ञा इति किम्? न त्वा कनकं मन्ये—ततः अपि अधिकं मन्ये इति प्रशंसा ॥ २० ॥

**भद्र-आयुष्य-क्षेम-सुख-अर्थ-हितार्थ-हितैः आशिषि । २१ ।**

'भद्र'आदिअर्थैः 'हित'शब्देन च युक्तात् अप्रधानात् नाम्नः आशीर्विषये चतुर्थी वा भवति ।

भद्रमस्तु चैत्राय, भद्रमस्तु चैत्रस्य । भद्रमस्तु साधुभ्यः साधूनां वा । आयुष्यमस्तु चैत्राय चैत्रस्य वा । चिरंजीवितमस्तु चैत्राय चैत्रस्य वा । क्षेमं भूयात् छात्राय छात्रस्य वा । कुशलं भूयात् मैत्राय मैत्रस्य वा । सुखं भवतात् प्रजाभ्यः प्रजानां वा । अर्थो भूयात् मैत्राय मैत्रस्य वा । प्रयोजनं भूयात् चैत्राय चैत्रस्य वा । हितार्थ—पथ्यं भूयात् चैत्राय चैत्रस्य वा । हितं भूयात् मैत्राय मैत्रस्य वा । 'हित'शब्दग्रहणम्—आशिषि पक्षे षष्ठीप्रापणार्थम्, चतुर्थी तु उत्तरेणैव सिद्धा । 'हित'अर्थग्रहणं पर्यायार्थं स्यात् । आशिषि इति किम्? क्षेमं चैत्रस्य ॥ २१ ॥

**शक्तार्थ-वषड्-नमः-स्वस्ति-स्वाहा-स्वधा-हितैः । २२ ।**

'शक्त'अर्थैः 'वषड्'आदिभिश्च युक्तात् अप्रधानात् नाम्नः चतुर्थी भवति ।

शक्तः चैत्रो मैत्राय । प्रभवति चैत्रो मैत्राय । वषड् अग्नये । नमः देवाय । स्वस्ति प्रजाभ्यः । इन्द्राय स्वाहा । स्वधा पितृभ्यः । हितम् आतुराय । 'स्वस्ति'शब्दः क्षेमार्थः, तद्योगे आशिषि अपि परत्वात् अयमेव नित्यो विधिः—स्वस्ति सघाय भूयात् ॥ २२ ॥

**रुचि-कृप्यर्थ-धारिभिः प्रेय-विकार-उत्तमर्णेषु । २३ ।**

'रुचि'अर्थैः 'कृपि'अर्थैः धारिणा च युक्तात् यथाक्रमं 'प्रेय'आदिषु अर्थेषु वर्तमानात् नाम्नः चतुर्थी भवति ।

प्रेयः प्रीयमाणः—चैत्राय रोचते मोदकः । मैत्राय स्वदते धर्मः—तस्य अभिलाषं

---

१ 'त्वा' इति युष्मदो रूपस्य । २ इदं सूत्रं श्रीमलयगिरिपादैः श्रीनन्दिसूत्रस्य "भद्दं सव्वजगुज्जोयगस्स" इत्यादितृतीयगाथायाः स्वविरचितवृत्तौ निर्दिष्टम् । ३ 'क्लृप्यर्थ' पा० ।

करोति इत्यर्थः । मूत्राय कल्पते यवागूः । श्लेष्मणे जायते दधि—तद्विकारम् आपद्यते इत्यर्थः । मूत्रं संपद्यते यवाग्वाः इति अपायविवक्षा । चैत्राय शतं धारयति ॥ २३ ॥

## प्रति-आङः श्रुवा अभ्यर्थके । २४ ।

प्रति-आङ्पूर्वेण शृणोतिना युक्तात् अभ्यर्थके वर्तमानात् अप्रधानात् नाम्नः चतुर्थी भवति ।

चैत्राय प्रतिशृणोति । चैत्राय आशृणोति-अभ्युपगच्छति इत्यर्थः । प्रति-आङः इति किम्? चैत्रस्य शृणोति । अभ्यर्थके इति किम्? चैत्राय गां प्रतिशृणोति, 'गो'शब्दात् न भवति ॥ २४ ॥

## प्रति-अनोः गृणा आख्यातरि । २५ ।

'प्रति-अनु'पूर्वेण गृणातिना युक्तात् आख्यातरि वर्तमानात् नाम्नः चतुर्थी भवति ।

उपाध्यायाय प्रतिगृणाति, उपाध्यायाय अनुगृणाति-उपाध्यायेन उक्तं ब्रवीति, प्रशंसन्तं वा प्रोत्साहयति इत्यर्थः । प्रति-अनोः इति किम्? उपाध्यायं गृणाति । आख्यातरि इति किम्? उपाध्यायं मनसा प्रतिगृणाति, 'मनः'शब्दात् न भवति । 'वाताय कपिला विद्युत्'-वातार्थम् इत्यर्थः । 'चैत्राय राध्यति' 'चैत्राय ईक्षते'—चैत्रार्थं शुभाशुभ-सूचकं किञ्चित् निरूपयति इति । "यदर्थम् ततः" [नाम्नि सप्तमः पादः सूत्र २८] इत्येव चतुर्थी ॥ २५ ॥

## श्लाघ-ह्नु-स्था-शपा ज्ञीप्स्यमाने । २६ ।

'श्लाघ्'आदिभिर्युक्तात् ज्ञीप्स्यमाने अर्थे वर्तमानात् नाम्नः चतुर्थी भवति ।

छात्राय श्लाघते । छात्राय ह्नुते । छात्राय तिष्ठते । छात्राय शपते । ज्ञीप्स्यमाने इति किम्? चैत्राय आत्मानं श्लाघते । चैत्राय शतम् अपह्नुते । केचित् ज्ञाप्ये एव इच्छन्ति ॥ २६ ॥

## संप्रदाने । २७ ।

संप्रदाने वर्तमानात् अप्रधानात् नाम्नः चतुर्थी भवति ।

तपस्विने भिक्षां ददाति । पुष्पेभ्यः स्पृहयति ॥ २७ ॥

## यदर्थम् ततः । २८ ।

यस्मै इदं विवक्षितम् तद्वाचिनः अप्रधानात् नाम्नः चतुर्थी भवति ।

रथाय दारु । रन्धनाय स्थाली ॥ २८ ॥

### परिक्रये करणे वा । २९ ।

वेतनादिना कियन्तं कालं स्वीकारः परिक्रयः, तद्विषये करणे वर्तमानात् अप्रधानात् नाम्नः चतुर्थी भवति वा ।

शताय परिक्रीतः, शतेन परिक्रीतः । परिक्रये इति किम्? शतेन क्रीणाति ॥२९॥

### अपादाने पञ्चमी । ३० ।

अपादाने वर्तमानात् अप्रधानात् नाम्नः एक-द्वि-बहौ यथासंख्यं ङसि-भ्याम्-भ्यस् लक्षणा पञ्चमी भवति ।

ग्रामात् आगच्छति । दूरं ग्रामात् । 'दूरं ग्रामस्य' इति अपादानशेषविवक्षया[1] सिद्धम् ॥ ३० ॥

### आङा अवधौ । ३१ ।

अवधौ वर्तमानात् अप्रधानात् नाम्नः आङा योगे पञ्चमी भवति ।

आ पाटलिपुत्रात् वृष्टो देवः—पाटलिपुत्रम् अवधीकृत्य तन् व्याप्य अव्याप्य वा वृष्टः इत्यर्थः ॥ ३१ ॥

### वर्ज्ये अप-परिणा । ३२ ।

अप-परिभ्यां युक्तात् वर्ज्ये अर्थे वर्तमानात् अप्रधानात् नाम्नः पञ्चमी भवति ।

अप पाटलिपुत्रात् वृष्टो देवः, परि पाटलिपुत्रात् वृष्टो देवः—पाटलिपुत्रं वर्जित्वा[2] वृष्टः इत्यर्थः । वर्ज्ये इति किम्? अपशब्दः चैत्रस्य ॥ ३२ ॥

### प्रतिनिधि-प्रतिदाने प्रतिना । ३३ ।

प्रतिनिधौ प्रतिदाने च गम्यमाने प्रतिना युक्तात् अप्रधानात् नाम्नः पञ्चमी भवति, योगश्च 'प्रति'शब्देन, यतः प्रतिनिधिः यतश्च प्रतिदानम् तस्य भवति इति ततः विधिः ।

प्रद्युम्नः वासुदेवात् प्रति—वासुदेवस्य सदृशः इत्यर्थः । तिलेभ्यः प्रति माषान् प्रयच्छति—तिलान् गृहीत्वा माषान् ददाति इत्यर्थः ॥ ३३ ॥

### यपः स्थानिनः कर्म-आधारे । ३४ ।

यबन्तस्य स्थानिनः कर्मणि आधारे च वर्तमानात् अप्रधानात् नाम्नः पञ्चमी भवति ।

प्रासादात् प्रेक्षते । आसनात् प्रेक्षते । यपः इति किम्? प्रविश पिण्डीम् । स्थानिनः इति? प्रासादमारुह्य प्रेक्षते । आसने उपविश्य प्रेक्षते ॥ ३४ ॥

---

१ अपादानस्य शेषरूपेण विवक्षया । २ वर्जयित्वा पू० ।

## दिक्शब्द-अन्यार्थ-आरात्-बहिर्-इतरैः । ३५ ।

दिक्शब्दैः[1] अन्यार्थैः 'आरात्'आदिभिश्च युक्तात् अप्रधानात् नाम्नः पञ्चमी भवति ।

पूर्वः ग्रामात् । अपरः ग्रामात् । पूर्वः वसन्तात् । दिशि दृष्टाः शब्दा दिक्शब्दा इति देश-कालादिवृत्तौ अपि भवति, एतदर्थमेव च 'शब्द'शब्दोपादानम् । 'न्यग् देवदत्तस्य' इति दिक्शब्दत्वाभावात् न भवति । अन्यः चैत्रात् । अत्रान्तरं मैत्रात् । आरात् ग्रामात् । बहिर् ग्रामात् । इतरः देवदत्तात्—तस्य द्वितीय इत्यर्थः । द्वयोः उपलक्षितयोः अन्यतरवचनः 'इतर'शब्दः न अन्यार्थ इति तदुपादानम् । 'चैत्रात् अन्यः मैत्रस्य' 'छात्राणां पूर्वम् आमन्त्रयस्व' इत्यादौ मैत्रादेः अन्यत्वादिना योगाभावात् न भवति । षष्ठ्यपवादो योगः ॥ ३५ ॥

## सप्तमी अधिकरणे । ३६ ।

अधिकरणे वर्तमानात् अप्रधानात् नाम्नः एक-द्वि-बहौ यथासंख्यं ङि-ओस्-सुप् लक्षणा सप्तमी भवति ।

आसने आस्ते । गङ्गायां घोषः ॥ ३६ ॥

## क्तेनः कर्मणि । ३७ ।

'क्त'प्रत्ययान्तात् 'इन्' तदन्तस्य कर्मणि वर्तमानात् अप्रधानात् नाम्नः सप्तमी भवति ।

अधीती व्याकरणे । क्तेनः इति किम् ? कटं करोति । कृतपूर्वी कटम् । 'साधुः चैत्रः मातरि' इति विषयसप्तम्या सिद्धम् ॥ ३७ ॥

## स्व-ईशे अधिना । ३८ ।

'अधि'शब्देन युक्तात्[2] स्वे ईशितव्ये ईशे ईशितरि च वर्तमानात् अप्रधानात् नाम्नः सप्तमी भवति ।

अधि मगधेषु श्रेणिकः । अधि श्रेणिके मगधाः । षष्ठ्यपवादो योगः ॥ ३८ ॥

## उपेन अधिकिनि । ३९ ।

'उप'शब्देन युक्तात् अधिकिनि वर्तमानात् नाम्नः सप्तमी भवति ।

---

१ मूलसूत्रे 'दिक्शब्द' इत्यत्र 'शब्द'शब्दस्य ग्रहणम् । २ "योगे स्वे ईशितव्ये ईशे ईशितरि स्वामिनि च" १।३।१७४। इति अमोघवृत्तौ ।

उप खार्यां द्रोणः—द्रोणेन अधिका खारी इत्यर्थः । अधिकिनि इति किम् ? अधिकाय मा भूत् ॥ ३९ ॥

## हेतौ कर्मणा । ४० ।

कर्मणा युक्तात् हेतौ वर्तमानात् नाम्नः सप्तमी भवति ।

चर्मणि द्वीपिनं हन्ति । हेतौ इति किम् ? चैत्रस्य पटं करोति । कर्मणा इति किम् ? विद्यया वसति । तृतीयापवादो योगः ॥ ४० ॥

## यद्भावः भावलक्षणम् । ४१ ।

प्रसिद्धं लक्षणम् अप्रसिद्धं लक्ष्यम् । यस्य भावेन भावान्तरं लक्ष्यते तत्र वर्तमानात् अप्रधानात् नाम्नः सप्तमी भवति ।

गोषु दुह्यमानासु गतः । आम्रेषु कल्प्यमानेषु गतः 'जातेषु' इति गम्यते । गम्यमानम् अपि विभक्तेः निमित्तम् यथा 'प्रविश पिण्डीम्' इत्यादौ । 'यद्'ग्रहणम् प्रकृत्यर्थम् । भावग्रहणम् किम् ? जटाभिस्तस्य भोजनम् । भावलक्षणम् इति ? यस्य भोजनं स चैत्रः । तृतीयापवादो योगः ॥ ४१ ॥

## षष्ठी च अनादरे । ४२ ।

यद्भावः भावलक्षणम् तस्मात् अनादरे गम्यमाने षष्ठी सप्तमी च भवति ।

रुदति[2] लोके प्राव्राजीत्, रुदतः लोकस्य प्राव्राजीत्—रुदन्तम् अनादृत्य इत्यर्थः ॥४२॥

## यतः निर्धारणम् । ४३ ।

यतः समुदायात् एकदेशनिर्धारणं तद्वाचिनः नाम्नः षष्ठी सप्तमी च भवति ।

गवां कृष्णा संपन्नक्षीरा, गोषु कृष्णा संपन्नक्षीरा ॥ ४३ ॥

## स्वामि-ईश्वर-अधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैः । ४४ ।

एभिर्युक्तात् अप्रधानात् नाम्नः षष्ठी सप्तमी च भवति ।

गवां स्वामी, गोषु स्वामी । गवाम् ईश्वरः, गोषु ईश्वरः । गवाम् अधिपतिः, गोषु अधिपतिः । गवां दायादः, गोषु दायादः । गवां साक्षी, गोषु साक्षी । गवां प्रतिभूः, गोषु प्रतिभूः । गवां प्रसूतः, गोषु प्रसूतः । 'स्वामि'-'ईश्वर'-'अधिपति'शब्दपृथगुपादानात् पर्यायान्तरप्रयोगे न भवति—ग्रामस्य राजा । सप्तम्यर्थं वचनम् ॥ ४४ ॥

---

१ विभक्त्य( क्त्या ) नि° पा० । २ रुदते लो° पा० ।

## शेषे । ४५ ।

कारकेभ्यः अन्यः क्रियाकारकपूर्वकः संबन्धः शेषः, तस्मिन् वर्तमानात् अप्रधानात् नाम्नः एक-द्वि-बहौ अस्-ओस्-आम् लक्षणा षष्ठी भवति ।

राज्ञः पुरुषः । पशोः पादः । नटस्य शृणोति ॥ ४५ ॥

## रि-रिष्टात्-स्तात्-अस्-अतस्-आता । ४६ ।

एभिर्युक्तात् अप्रधानात् नाम्नः षष्ठी भवति ।

उपरि ग्रामस्य । उपरिष्टात् ग्रामस्य । परस्तात् ग्रामस्य । पुरः ग्रामस्य । दक्षिणतः ग्रामस्य । दक्षिणात् ग्रामस्य ॥ ४६ ॥

## अज्ञाने ज्ञः करणे । ४७ ।

अज्ञानार्थस्य जानातेः करणे वर्तमानात् अप्रधानात् नाम्नः षष्ठी भवति ।

सर्पिषो जानाति-सर्पिषि रक्तः द्विष्टो वा सर्वं तद्रूपेण जानाति इत्यर्थः । करणे इति किम् ? तैलं सर्पिषः जानाति, तैलात् न भवति । अज्ञाने इति किम् ? स्वरेण पुत्रं जानाति । तृतीयापवादो योगः ॥ ४७ ॥

## कृतः कर्म-कर्त्रोः । ४८ ।

कृत्प्रत्ययान्तस्य कर्मणि कर्तरि च वर्तमानात् अप्रधानात् नाम्नः षष्ठी भवति ।

अपां स्रष्टा । भवतः आसिका ॥ ४८ ॥

## कमेः एव उकणः । ४९ ।

'उकण्'प्रत्ययान्तस्य कमेः एव कर्मणि वर्तमानात् अप्रधानात् नाम्नः षष्ठी भवति ।

दास्याः कामुकः । कमेः एव इति किम् ? ग्रामम् आगामुकः ॥ ४९ ॥

## क्तस्य सत्-आधारे । ५० ।

सति आधारे च अर्थे यः क्तः तदन्तस्य कर्मणि कर्तरि च वर्तमानात् अप्रधानात् नाम्नः षष्ठी भवति ।

राज्ञां मतः । इदम् ओदनस्य भुक्तम् ॥ ५० ॥

## वा क्त-कृत्ययोः कर्तरि । ५१ ।

---

१ अत्र वृत्त्यनुसारेण सूत्रमिदं कल्पितम् । २ °क्तः दुष्टो वा पा० ।

'क्त'प्रत्ययान्तस्य 'कृत्य'प्रत्ययान्तस्य च कर्तरि वर्तमानात् अप्रधानात् नाम्नः षष्ठी भवति ।

छात्रस्य हसितम्, छात्रेण हसितम् । भवतः कार्यम्, भवता कार्यम् ॥ ५१ ॥

## उभयोः प्राप्तौ अन्-अ-अकस्य । ५२ ।

'अ'कार-'अक'प्रत्ययवर्जितकृत्प्रत्ययान्तस्य उभयोः कर्म-कर्त्रोः षष्ठीप्राप्तौ वा कर्तरि षष्ठी भवति ।

साधु इदं शब्दानाम् अनुशासनम् आचार्यस्य आचार्येण वा । अन्-अ-अकस्य इति किम्? चिकीर्षा कटस्य चैत्रस्य । भेदिका काष्ठानां चैत्रस्य । कर्तरि इति किम्? कर्मणि विकल्पो न भवति ॥ ५२ ॥

## कर्मणि अप्रधाने । ५३ ।

कृतः अप्रधाने कर्मणि वर्तमानात् नाम्नः षष्ठी भवति ।

नेता अश्वस्य स्रुघ्नम् स्रुघ्नस्य वा । कर्मणि इति किम्? भेदिका काष्ठानां चैत्रस्य मैत्रस्य । अप्रधाने इति किम्? कर्ता कटस्य । अप्रधानं च मुख्यकर्मापेक्षम् अतः द्विकर्मका इह उदाहरणम्—

"दुहि-याचि-रुधि-प्रच्छि-भिक्ष-जयो ब्रुवि-शासि-कृञः कृषि-दण्डि-नयः ।
वहि-चोदि-चिञः अपि अपरे बुधैर्द्विविधाऽऽप्यभृतः गदिताः कविभिः" ॥५३॥

## न कृत्यस्य । ५४ ।

कृत्यप्रत्ययान्तस्य अप्रधाने कर्मणि वर्तमानात् नाम्नः षष्ठी न भवति ।

नेतव्या ग्रामम् अजा । कर्मणि इति किम्? भेदयितव्यं काष्ठं देवदत्तस्य । अप्रधाने इति किम्? गेयः माणवकः गाथानाम् ॥ ५४ ॥

## खलर्थ-अव्यय-णक्यत्-क्रणेन्-वुणः । ५५ ।

पृथग्वचनात् सामान्येन अयं निषेधः । 'खल'र्थादिकृत्प्रत्ययान्तानां कर्मणि कर्तरि च वर्तमानात् अप्रधानात् नाम्नः षष्ठी न भवति ।

सुकरः कटो भवता । अव्यय—ओदनं भुक्त्वा । ग्रामं गमी । शतं दायी । एधान् आहारको व्रजति ॥ ५५ ॥

---

१ द्विविधाः आप्यभृतः कर्मभृतः—द्विकर्मका इत्यर्थः । "नी-हृ-वहि-कृषो ण्यन्ता दुहि-ब्रू-प्रच्छि-भिक्षि-चि-रुधि-शास्त्वर्थाः । पचि-याचि-दण्डि-कृ-ग्रह-मथि-जिप्रमुखा द्विकर्माणः" ॥ १३ ॥ सिद्धहेमशब्दानुशासनलघुवृत्तौ संग्रहश्लोकः ।

**क्त-क्तवतु-आरु-रु-शतृ-आनश्-इष्णु-शान-इ-क्नु-उ-ष्णुक्-आलु-तृनः।५६।**

एषां कर्मणि कर्तरि च वर्तमानात् अप्रधानात् नाम्नः षष्ठी न भवति ।

क्त—कृतः कटः चैत्रेण । क्तवतु—कटं कृतवान् । आरु[1]—गुरून् वन्दारुः । रु—धारुर्वत्सरो मातरम् । शतृ—कटं कुर्वन् । अधीयन् व्याकरणम् । आनश्—कटं कुर्वाणः । इष्णुः—कन्याम् अलंकरिष्णुः । शान—लोकं पवमानः । इ—दधिः चित्तम् । क्नु—मलं क्षिप्नुः । उ—ओदनं बुभुक्षुः । ष्णुक्—रिपून् जिष्णुः । आलुः—श्रद्धालुः तत्त्वम् । तृन्—वदिता जनापवादान् ॥ ५६ ॥

**चेष्टागत्याप्ये अनाक्रान्ते द्वितीया-चतुर्थ्यौ । ५७ ।**

चेष्टारूपगमनक्रियाकर्मणि अनाक्रान्ते वर्तमानात् नाम्नः द्वितीया-चतुर्थ्यौ भवतः ।

ग्रामं गच्छति, ग्रामाय गच्छति । विप्रनष्टः पन्थानं गच्छति, पथे गच्छति । चेष्टाग्रहणं किम् ? मनसा मेरुं गच्छति । गतिग्रहणं किम् ? ओदनं पचति । अनाक्रान्ते इति किम् ? पन्थानं गच्छति । 'चतुर्थी च' इति अनुक्त्वा द्वितीयाग्रहणं षष्ठीबाधनार्थम्—ग्रामं गन्ता, ग्रामाय गन्ता ॥ ५७ ॥

**तुल्यार्थैः तृतीया । ५८ ।**

तुल्यार्थैः युक्तात् नाम्नः तृतीया भवति ।

पित्रा समः । अर्थग्रहणं पर्यायार्थम् । उपमा नास्ति कृष्णस्य । तुला नास्ति चैत्रस्य । गोः इव गवयः । इति 'उपमा'आदयः न तुल्यार्थाः इति न भवति ॥ ५८ ॥

**षष्ठी । ५९ ।**

तुल्यार्थैः युक्तात् नाम्नः षष्ठी भवति ।

मातुः तुल्यः । पितुः समः । तृतीयाम् अविकल्प्य षष्ठीविधानं सप्तमीबाधनार्थम्—गवां तुल्यः स्वामी, गोभिः तुल्यः स्वामी । योगविभागः उत्तरार्थः ॥ ५९ ॥

**द्वितीया च एनेन । ६० ।**

'एन'प्रत्ययान्तेन युक्तात् नाम्नः द्वितीया भवति, चकारात् षष्ठी च ।

पूर्वेण ग्रामम्, पूर्वेण ग्रामस्य ॥ ६० ॥

**ऋते पञ्चमी च । ६१ ।**

'ऋते'शब्देन युक्तात् नाम्नः पञ्चमी द्वितीया च भवति ।

---

[1] अत्र वृत्तौ नैतद् उदाहरणद्वयम्, तच्च १।३।१६६ शाकटायनीयसूत्रस्य अमोघवृत्त्यनुसारेण उद्धृतम् ।

ऋते धर्मात् कुतः सुखम् ? । न हि अङ्गं विक्रियते रोगम् ऋते ॥ ६१ ॥

## पृथक्-नाना तृतीया च । ६२ ।

'पृथक्--नाना'शब्दाभ्यां युक्तात् नाम्नः तृतीया पञ्चमी च भवति ।

पृथक् चैत्रेण । पृथक् चैत्रात् । नाना चैत्रेण । नाना चैत्रात् ॥ ६२ ॥

## विना इमाः तिस्रः । ६३ ।

'विना'शब्दयुक्तात् अप्रधानात् नाम्नः इमाः तिस्रः तृतीया-पञ्चमी-द्वितीया विभक्तयो भवन्ति ।

विना वातेन । विना वातात् । विना वातम् । तिस्रः इति किम् ? षष्ठी मा भूत् ॥ ६३ ॥

## सप्तमी च असत्त्वाऽऽराद्‌र्थात् । ६४ ।

असत्त्वभूतदूर-अन्तिकवाचिनः नाम्नः सप्तमी पूर्वोक्ताश्च तिस्रो विभक्तयो भवन्ति ।

दूरे ग्रामस्य । दूरेण ग्रामस्य । दूरात् ग्रामस्य । दूरं ग्रामस्य । अन्तिके ग्रामस्य । अन्तिकेन ग्रामस्य । अन्तिकात् ग्रामस्य । अन्तिकं ग्रामस्य । असत्त्व-इति किम् ? दूराय पथे देहि । 'आरात्'अर्थग्रहणं किम् ? स्पष्टं जल्पति ॥ ६४ ॥

## हेतौ हेत्वर्थैः तृतीयाद्याः । ६५ ।

हेतुः निमित्तम् कारणम् इति पर्यायाः । हेत्वर्थैः शब्दैः युक्तात् हेतौ वर्तमानात् नाम्नः 'तृतीया'आदयो विभक्तयः भवन्ति ।

धनेन हेतुना वसति । धनाय हेतवे वसति । धनात् हेतोर्वसति । धनस्य हेतोर्वसति । धने हेतौ वसति । एवं धनेन निमित्तेन वसति । धनेन कारणेन । इत्यादि ॥ ६५ ॥

## सर्वादेः सर्वाः । ६६ ।

सर्वादिः हेत्वर्थैः युक्तात् सर्वा विभक्तयो भवन्ति ।

को हेतुः वसति । कं हेतुं वसति । केन हेतुना वसति । कस्मै हेतवे वसति । कस्मात् हेतोः वसति । कस्य हेतोः वसति । कस्मिन् हेतौ वसति । एवम् किं प्रयोजनम्, किं निमित्तम् वसति । इत्यादि ॥ ६६ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि सप्तमः पादः समाप्तः ॥

*

## नाम्नि अष्टमः पादः

### नाम नाम्ना ऐकार्थ्ये समासः बहुलम् । १ ।

ऐकार्थ्यं सामर्थ्यविशेषः, तस्मिन् सति नाम्ना सह समासो भवति बहुलम् ।

विस्पष्टं पटुः विस्पष्टपटुः । व्यक्तलवणः । नाम इति किम् ? चरन्ति गावः धनम् अस्य । नाम्ना इति किम् ? चैत्रः पचति । बहुलवचनात् कचित् अनाम अपि सह समस्यते- भात्यर्के नभः । अनुव्यचलत् । अधिकारः अयम् ''च'अर्थे द्वन्द्वः सहोक्तौ' [ नाम्नि नवमः पादः सूत्र १ ] इति यावत् ॥ १ ॥

### गति-कु-दुर्-सु-अति-आङ् तत्पुरुषः । २ ।

गतिसंज्ञम् कु-दुर्-सु-अति-आङश्च नाम्ना सह समस्यन्ते, स च समासः तत्पुरुषसञ्ज्ञः ।

पटपटाकृत्य । कु—पापः पुरुषः कुपुरुषः । निन्दितः पुरुषः दुष्पुरुषः । शोभनः पुरुषः सुपुरुषः । एवम् अतिपुरुषः । 'सु'साहचर्यात् 'अतिः'इह पूजायां सह समस्यते, इह न भवति—अतिसिक्त्वा, अत्र अतिक्रमे अति । "अत्र अपि समासः" [ ] इति एके । ईषत् पिङ्गलः आपिङ्गलः । दुः-सु-अति-आङ्ग्रहणम् अगत्यर्थम्, गतित्वे हि 'गति—' [ नाम्नि अष्टमः पादः सूत्र २ ] इत्येव सिद्धम् । निन्दिताः पुरुषा यस्य स 'दुष्पुरुषक.' इत्यादौ अन्यपदार्थादिविषये परत्वात् 'बहुव्रीहि'आदिसंज्ञा । 'तत्पुरुषः'इति अधिकारः 'मयूरव्यंसक'—इत्यादयः' [ नाम्नि अष्टमः पादः सूत्र ४९ ] इति यावत् ॥२॥

### 'गत'आदिषु 'प्र'आदयः । ३ ।

'प्र'आदयः 'गत'आदिषु अर्थेषु वर्तमानाः नाम्ना सह समस्यन्ते, स च समासः तत्पुरुषसंज्ञः[1] ।

प्रगतः आचार्यः प्राचार्यः । प्रकृष्टः वीरः प्रवीरः । संगतः अर्थः समर्थः । अतिक्रान्तः खट्वाम् अतिखट्वः । उद्गतः वेलाम् उद्वेलः । अवकुष्टः कोकिलया अवकोकिलः । अवहीनं तमसा, अवहीनं तमः वा अवतमसम् । संनद्धः वर्मणा[2] संवर्मा । परिग्लानः अध्ययनाय पर्यध्ययनः । उद्युक्तः संग्रामाय उत्संग्रामः । निर्गतः कौशाम्ब्याः निष्कौशाम्बिः । अपगतः शाखायाः अपशाखः । अन्तर्गतः अङ्गुलः अन्तरङ्गुलः नखः । प्रतिष्ठितम् उरसि प्रत्युरसम् । 'गत'आदिषु इति किम् ? अतिसिक्त्वा ॥ ३ ॥

---

१ तत्पुरुषः तत्पुरुषसंज्ञः पा० । २ वर्मणा संवर्मा पा० पू० ।

## स्वकृता पञ्चम्या उक्तम् । ४ ।

स्वाश्रयः कृत् स्वकृत्, तदन्तेन नाम्ना सह पञ्चम्या उक्तं नाम समस्यते ।

'कर्मणः अण्' [ कृत् द्वितीयपादे सू० १५ ]कुम्भकारः । स्वग्रहणं किम् ? कुम्भं कृत्वा । पञ्चम्या उक्तम् इति किम् ? खलु कृत्वा ॥ ४ ॥

## तृतीयया वा । ५ ।

तृतीयया उक्तं नाम स्वकृदन्तेन नाम्ना सह समस्यते ।

'तृतीयया उपदंशः' [ कृत् षष्ठः पादः सूत्र ३९ ] मूलकेन उपदंशम् मूलकोपदंशं भुङ्क्ते । 'वा'ग्रहणं वाक्यार्थम अत एव 'वा'ग्रहणात् प्राग् नित्यसमासः ॥ ५ ॥

## कालः द्विगौ च मेयैः । ६ ।

कालः मुहूर्तआदिः । तद्वाचिनः नाम केवलम् द्विगौ च विषये वर्तमानम् मेयवाचिनाम्ना सह समस्यते ।

मासः जातस्य मासजातः, मासजातौ । स्त्री मासजाता । द्वे अहनी जातस्य द्व्यह्नजातः । विग्रहे यद्यपि कालस्य विशेषणं जातादि तथापि स्वभावात् समासः जातादिप्रधानः तेन समासस्य लिङ्गम् संख्या च तदीया भवति । जातादेः मेयत्वम् जन्मादेः प्रभृति तत्संबन्धा[द्रा]दित्यगतिपरिच्छेदात् । द्विगुग्रहणं त्रिपदसमासार्थम अन्यथा 'नाम नाम्ना' [ नाम्नि अष्टमः पादः सूत्र १ ] इति अनुवृत्तेः द्वयोः एव स्यात् । षष्ठीसमासापवादो योगः । एवम् उत्तरे अपि ॥ ६ ॥

## द्वि-त्रि-चतुः पूरणम् अभिन्नेन अंशिना वा । ७ ।

द्वि-त्रि-चतुःशब्दाः पूरणप्रत्ययान्ताः अंशवाचिनः अंशिवाचिना नाम्ना सह समस्यन्ते वा, न चेत् सः अंशी भिन्नः ।

द्वितीयं भिक्षायाः द्वितीयभिक्षा, भिक्षाद्वितीयम् । तृतीयभिक्षा, भिक्षातृतीयम् । चतुर्थभिक्षा, भिक्षाचतुर्थम् । 'वा' अधिकारे तु वर्तमाने पुनर् इह 'वा'ग्रहणं पक्षे षष्ठीसमासपूरणार्थम् तेन 'पूरण–' [ नाम्नि अष्टमः पादः सू० २६ ] इति षष्ठीसमासप्रतिषेधो न भवति । पूरणम् इति किम् ? द्वौ भिक्षायाः । अंशिना इति किम् ? द्वितीयं भिक्षायाः भिक्षुकस्य, भिक्षुकेण न समासः । अभिन्नेन इति किम् ? द्वितीयं भिक्षाणाम् ॥ ७ ॥

## समे अंशे अर्धम् । ८ ।

---

१ 'जात'आदिशब्दसंबन्धिनी ।

समे अंशे वर्तमानम् 'अर्धम्' इति नाम अंशिवाचिना नाम्ना सह समस्यते, न चेत् सः अंशी भिन्नः ।

अर्धं पिप्पल्याः अर्धपिप्पली । अर्धखट्वा । समे अंशे इति किम्? ग्रामार्धः । अभिन्नेन इति किम्? अर्धं पिप्पलीनाम् । अर्धपिप्पल्यः इति एकशेषः, अर्धप्रचयो हि अयम्, पिप्पलीप्रचयोक्ते एकवचनं स्यात् ॥ ८ ॥

## पूर्व-अपर-अधर-उत्तरम् । ९ ।

एते अंशिवाचिना नाम्ना सह समस्यन्ते, न चेत् सः अंशी भिन्नः ।

पूर्वं कायस्य पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । अभिन्नेन इति किम्? पूर्वः छात्राणाम् । प्रसज्यप्रतिषेधात् इह न भवति–पूर्वं पाणिपादस्य, समाहारस्य एकत्वेऽपि पाणिः पादः इति हि भिन्नम् ॥ ९ ॥

## 'सायाह्न'आदयः । १० ।

एते अंशितत्पुरुषाः साधवः वेदितव्याः ।

सायम् अह्नः सायाह्नः । मध्याह्नः । मध्यंदिनम् । 'सायाह्न'आदयः प्रयोगगम्याः ॥ १० ॥

## नञ् । ११ ।

'नञ्' नाम नाम्ना सह समस्यते ।

अगौः । अनेकः । असूर्यंपश्या राजदाराः । निवर्त्यमानतद्भावः उत्तरार्थः पर्युदासनञ्-समासार्थः तत्र विशेषणसमासेन एव सिद्धम् । प्रसज्यप्रतिषेधे तु नञ् क्रियापदसंबन्धी उत्तरपदं वाक्यवत् स्वार्थं एव तत्र अयोगेऽपि वचनात् यथाभिधानं बाहुलकात् समासः ॥ ११ ॥

## स्वयं-सामी क्तेन । १२ ।

एतौ क्तान्तेन सह समस्येते ।

स्वयंधौतौ पादौ । सामिकृतम् । समासे समुदायात् तद्धितोत्पत्तिः–स्वायंधौतम् । क्तेन इति किम्? स्वयं कृत्वा ॥ १२ ॥

## 'खट्वा'द्वितीया क्षेपे । १३ ।

---

१ °पिप्प° पू० । २ "समे अर्धम्" २।१।२६ इति शाकटायनीयसूत्रानुसारि-अमोघवृत्तौ "अर्धपिप्पल्यः इति एकशेषे अर्धप्रचयोऽयम्, पिप्पलीप्रचये हि एकवचनं स्यात्"इति । ३ उत्तरपदार्थः । ४ °कृतम् । समुदायात् पा० ।

'खट्वा' इति द्वितीयान्तं क्तान्तेन सह समस्यते क्षेपे गम्यमाने । क्षेपः समासार्थः न वाक्येन गम्यते इति नित्यसमासः ।

खट्वाऽऽरूढो जाल्मः—उत्पथप्रस्थित एवम् उच्यते । क्षेपे इति किम् ? खट्वाम् आरूढः ॥ १३ ॥

### कालः । १४ ।

कालवाचि नाम द्वितीयान्तं क्तान्तेन सह समस्यते ।

अहरतिसृताः । रात्र्यारूढाः षण्मुहूर्ताः । अत्यन्ताप्रर्थं वचनम् ॥ १४ ॥

### व्याप्तौ । १५ ।

व्याप्तौ या द्वितीया तदन्तं कालवाचि नाम व्यापकवाचिना नाम्ना सह समस्यते ।

मुहूर्तसुखम् । दिनगुडः । काल इति किम ? क्रोशं कुटिला नदी ॥ १५ ॥

### 'श्रित'आदिभिः । १६ ।

द्वितीयान्तं 'श्रित'आदिभिः सह समस्यते ।

धर्मश्रितः । शिवगतः । श्रित गत अतीत पतित प्राप्त आपन्न गमिन् आगामिन् इत्यादि । आकृतिगणत्वात् 'तत्त्वबुभुत्सुः' इत्यादि सिद्धम् ॥ १६ ॥

### प्राप्त-आपन्नं तया अत् च । १७ ।

एतौ द्वितीयान्तेन समस्येते तद्योगे च अनयोः अकार अन्तादेशः ।

प्राप्ता जीविकाम् प्राप्तजीविका । आपन्नजीविका । प्राप्तजीविकः । श्रितादित्वात् अनयोः पूर्वेण परत्वे प्राप्ते पूर्वत्वार्थं वचनम् ॥ १७ ॥

### तृतीया । १८ ।

तृतीयान्तं नाम्ना सह समस्यते ।

गिरिणा काणः गिरिकाणः । आत्मकृतम् । मासपूर्वः । मासोनः । श्वलेह्यः कूपः । 'अन्नेन उषितः' 'दात्रेण लूनवान्' 'श्वभिः लेढव्यः' इत्यादौ अनभिधानात् न भवति ॥ १८ ॥

### चतुर्थी 'हित'आदिभिः । १९ ।

चतुर्थ्यन्तं हितादिभिः सह समस्यते ।

प्रजाहितम् । कुबेरबलिः । हित बलि सुख रक्षित इत्यादि ॥ १९ ॥

### तदर्थार्थेन । २० ।

चतुर्थ्यर्थेन अर्थशब्देन सह चतुर्थ्यन्तं समस्यते ।

पित्रे इदम् पित्रर्थं पयः । नित्यसमासः अयम्, वाक्ये हि चतुर्थ्या तदर्थस्य उक्तत्वात् अर्थशब्दस्य अप्रयोगः, समासस्तु वचनाद् भवति ॥ २० ॥

## प्रकृत्या । २१ ।

प्रकृतिः परिणामद्रव्यम् तद्वाचिना नाम्ना सह अर्थात् विकृतिवाचि नाम समस्यते ।

कुण्डलाय हिरण्यम् कुण्डलहिरण्यम् । यूपाय दारु यूपदारु । प्रकृत्या इति किम्? रन्धनाय स्थाली ॥ २१ ॥

## चतुर्थ्या अलम् । २२ ।

'अलम्' इति नाम चतुर्थ्यन्तेन नाम्ना सह समस्यते ।

अलं जीविकायै अलंजीविकः । चतुर्थ्या इति किम्? अलम् अतिप्रसङ्गेन ॥२२॥

## पञ्चमी । २३ ।

पञ्चम्यन्तं नाम्ना सह समस्यते ।

वृकाद् भयम् वृकभयम् । स्तोकात् मुक्तः, देशान्तरा [त् आ] गतः, प्रासादात् पतितः इत्यादौ अनभिधानात् न भवति ॥ २३ ॥

## शेषे षष्ठी अयत्नजे । २४ ।

शेषे या षष्ठी तदन्तम् नाम्ना सह समस्यते, न चेत् स शेषः यत्नात् जातः स्यात् ।

राज्ञः पुरुषः राजपुरुषः । भिक्षुपात्रम् । 'देवदत्तस्य गुरुकुलम्' इत्यादौ सापेक्षस्यापि गमकत्वात् समासः । शेष इति किम्? गवां कृष्णा संपन्नक्षीरा । 'पण्डितोक्तिः' 'गुरुपूजकः' इत्यादौ शेषषष्ठीवत् सिद्धम्, बहुलाधिकारात् वा कर्म-कर्त्रोरपि कृदन्तेन सह समस्यते । अभिधानवशाच्च कर्तरि षष्ठ्या वुअन्तेन 'याजक'आदिवर्जं कर्मणि तृच्-वुभ्यां च न समासः—भवतः आसिका । अपां स्रष्टा । मोदकस्य भोजकः । अत्र अपि शेषविवक्षायां समासः । अयत्नजे इति किम्? सर्पिषः नाथनम् ॥ २४ ॥

## न अस्वस्थगुणैः । २५ ।

ये गुणाः स्वात्मनि एव अवतिष्ठन्ते न द्रव्ये ते स्वस्थाः तत्प्रतिषेधेन अस्वस्थाः, तद्गुणवाचिभिः सह षष्ठ्यन्तं न समस्यते ।

पटस्य शुक्लः । गुडस्य मधुरः । काकस्य कार्ष्ण्यम् । बलाकायाः शौक्ल्यम् । अत्र कार्ष्ण्यादिर्गुणस्य कृष्णः काकः इत्यादौ अस्वास्थ्यम् उपलभ्यते । अस्वस्थगुणैः इति किम्?

---

१ चतुर्थ्यन्तम् ।

कन्यारूपम् । चन्दनगन्धः । स्तनस्पर्शः । गोविंशतिः । गोसहस्रम् ॥ २५ ॥

## 'तृप्त'अर्थ-अव्यय-बुद्धि-इच्छा-पूजा-आधारक्त-पूरण-शतृ-आनशा । २६ ।

एतैः सह षष्ठी न समस्यते ।

फलानां तृप्तः । फलानां सुहितः । सक्तूनां पूर्णः । अव्यय—राज्ञः साक्षात् । "अव्ययीभावस्य अपि अन्वर्थाश्रयणात् अव्ययत्वात् अयं प्रतिषेधः—देवदत्तस्य उपकुम्भम्" [ ] इति एके । बुद्धि-इच्छा-पूजा-आधारक्ताः—राज्ञां बुद्धः । राज्ञाम् इष्टः । राज्ञां पूजितः । इदम् एषां शयितम् । तीर्थकृतां षोडशः शान्तिः । ओदनस्य अपचन् । ओदनस्य पचमानः ॥ २६ ॥

## सप्तमी । २७ ।

सप्तम्यन्तं नाम नाम्ना सह समस्यते ।

अक्षेषु प्रसक्तः शौण्ड इव अक्षशौण्डः । वृत्तौ प्रसक्तिक्रियाया अन्तर्भावः । समरे सिंह इव समरसिंहः । ग्रामवासः । अरण्येतिलकाः ॥ २७ ॥

## कृत्येन आवश्यके । २८ ।

सप्तम्यन्तं कृत्यान्तेन सह समस्यते अवश्यंभावे गम्यमाने । अयमपि नित्यः[1] समासः वाक्येन अवश्यंभावस्य आगमनत्वात्[2] ।

मासदेयम् । पूर्वाह्णगेयम् । सवत्सरकर्तव्यम्[3] । आवश्यक इति किम् ? मासे देया भिक्षा ॥ २८ ॥

## तत्र-अहो-रात्रांशं क्तेन । २९ ।

'तत्र' इति एतत्, अहरवयववाचि रात्र्यवयववाचि च सप्तम्यन्तं क्तान्तेन सह समस्यते ।

तत्रकृतम् । पूर्वाह्णे कृतम् पूर्वाह्णकृतम् । अपराह्णे सेवितम् अपराह्णसेवितम् । पूर्वरात्रे कृतम् पूर्वरात्रकृतम् । अपररात्रे सेवितम् अपररात्रसेवितम् । तत्र-अहो-रात्रांशम्

---

१ "अयमपि नित्यसमासः यतो न समासे 'अवश्य'शब्दस्य प्रयोगः इति न्यासः" —न्याससारोद्धारे श्रीकनकप्रभसूरय –३।१।९५ सिद्ध० । २ 'आगमनत्वात्' इत्यस्य स्थाने 'गमनत्वात्' इति उचितम् । गमनत्वात्–ज्ञानत्वात् इत्यर्थः । ३ "संवत्सरकर्तव्यम् इति तु बहुलाधिकारात्"–३।१।९५। सिद्ध० । आचार्यहेमचन्द्रस्तु कृतः–कृदन्तस्य— य'प्रत्ययमेवात्र 'देय'इत्यादिषु प्रयुज्यमान मन्यते नान्यप्रत्ययम् ।

इति किम् ? घटे कृतम् । अह्नि कृतम् । अक्षेपार्थं वचनम् ॥ २९ ॥

## 'काक'आदिभिश्च क्षेपे । ३० ।

सप्तम्यन्तं काकप्रकारैः क्तान्तेन च सह समस्यते क्षेपे गम्यमाने ।

तीर्थकाकः । तीर्थकुक्कुटः—अनवस्थितः एवम् उच्यते । भस्मनि हुतम्—निष्फलं कृतम् इत्यर्थः । सर्वत्र उपमानेन क्षेपः । क्षेपे इति किम् ? तीर्थे काकः तिष्ठति ॥ ३० ॥

## 'पात्रेसमित' इत्यादयः । ३१ ।

एते सप्तमीतत्पुरुषाः निपात्यन्ते ।

पात्रेसमिताः । पात्रेबहुलाः । 'पात्रे समिता न अन्यत्रैव कार्ये' इति अवधारणात् क्षेपः । उदुम्बरमशकः । कूपकच्छपः । उदपानमण्डूकः । अत्र उपमायाः क्षेपः । मातरि-पुरुषः, अत्र प्रतिषिद्धसेवनेन । पिण्डीशूरः । गेहेनर्दी गेहेव्यालः गर्भेतृप्तः गोष्ठेपण्डितः कर्णेटिरिटिरि. इत्यादिनिपातनात् सप्तम्या अलुक् । 'इति'करणात् पदान्तरेण असमासः ॥ ३१ ॥

## विशेषणं व्यभिचारि विशेष्येण एकार्थं कर्मधारयश्च । ३२ ।

समानाधिकरणं व्यभिचारि विशेषणवाचि नाम विशेष्यवाचिनाम्ना सह समस्यते, स च समासः तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च ।

नीलं च तत् उत्पलं च नीलोत्पलम् । कृष्णतिलकाः । खञ्जकुण्टः । कुण्टखञ्जः । (श्रेणयः श्रेणयः कृताः ?[1]) 'नीलोत्पल'आदिषु 'उत्पल'आदिजातिशब्दः[2] विशेष्य-तयैव नियतः । 'खञ्जकुण्ट'आदौ अनियतः । व्यभिचारि इति किम् ? तक्षकः सर्पः । बहुलाधिकारात् क्वचिद् अव्यभिचारिऽपि भवति-पृथ्वीद्रव्यम् । आम्रवृक्षः । मेरुपर्वतः । संज्ञायां नित्यः—कृष्णसर्पः । लोहितशालिः । एकार्थम् इति किम् ? वृद्धस्य उक्षा वृद्धोक्षा । 'कर्मधारयश्च' इति अधिकारः 'द्विगुश्च अनाम्नि अयम्' [ नाम्नि अष्टमः पादः सूत्र ४८ ] इति यावत् ॥ ३२ ॥

## पूर्वकाल-एक-सर्व-जरत्-पुराण-नव-केवलम् । ३३ ।

पूर्वकालः यस्य तद्वाचि, एकादीनि च नामानि एकार्थानि नाम्ना सह समस्यन्ते, स च समासः तत्पुरुषसंज्ञः कर्मधारयश्च ।

पूर्वकालः अपरकालेन—पूर्वं स्नातः पश्चाद् अनुलिप्तः स्नातानुलिप्तः । एकशुक्लः ।

---

१ एतत् ( ) चिह्नान्तर्गतम् नात्र उपयोगि । २ नीलोत्पलादिषु उत्पलादिषु उत्पलादि-जाति० पा० ।

सर्वशुक्लः । जरद्गवः । पुराणवैयाकरणः । नवकम्बलः । केवलजरत् । एकार्थम् इति किम् ? स्नात्वा लिप्तः । पूर्वपदत्वव्यवस्थार्थं वचनम् ॥ ३३ ॥

## निन्द्यम् अ'पाप'आद्यैः कुत्सनैः । ३४ ।

निन्द्यवाचि नाम 'पाप'आदिवर्जितैः कुत्साहेतुभिः समस्यते ।

खसूची-निष्प्रभ--वैयाकरण. वैयाकरणखसूची । मीमांसकदुर्दुरूढ । निन्द्यम् इति किम् ? वैयाकरणश्चौरः, प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तनिन्दायाम् अयं समासः न च चौरत्वेन वैयाकरणत्वं निन्द्यते किन्तु तदाश्रयः द्रव्यम् वैयाकरणत्वं तु तदुपलक्षणमात्रम् । अ'पाप'आद्यैः इति किम् ? पापकुलालः । अणकनापितः । हतविधिः । विशेष्यपूर्वनिपातार्थं वचनम् ॥ ३४ ॥

## पूर्व-अपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीरम् । ३५ ।

एतानि एकार्थानि नाम्ना सह समस्यन्ते ।

पूर्वपुरुषः । अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः । मध्यपुरुषः । मध्यमपुरुषः । वीरपुरुषः । 'विशेषणम्' [नाम्नि अ३० पा० सूत्र ३२] इत्यनेनैव एकवीरः । पूर्वपदत्वव्यवस्थार्थं वचनम् । पूर्वजरन् । वीरपूर्वः ॥ ३५ ॥

## गौणः तद्गुणेन । ३६ ।

गुणात् विषयान्तरम् आगतः गौणः । तद्वाचि नाम येन विषयान्तरम् आगतः तद्गुणवाचिना नाम्ना सह समस्यते ।

शस्त्री इव श्यामा शस्त्रीश्यामा । सिंहशूरः । तद्गुणेन इति किम् ? अग्निर्माणवकः । गौणः तद्गुणेन एव इति नियमार्थं वचनम् ॥ ३६ ॥

## व्याघ्रादिभिः गौणैः तद्गुणानुक्तौ । ३७ ।

एकार्थं नाम 'व्याघ्र'आदिभिर्गौणैः सह समस्यते, येन गुणेन गौणत्वं तद्गुणानुक्तौ ।

पुरुषः व्याघ्र इव पुरुषव्याघ्रः । पुरुषसिंहः । गौणैः इति किम् ? वृषभः सिंह इव, 'वृषभ'शब्दस्य परनिपातो न भवति । तद्गुणानुक्तौ इति किम् ? पुरुषव्याघ्रः शूरः इति मा भूत् । व्याघ्र सिंह वृषभ वराह हस्तिन् कुञ्जर रुरु पुण्डरीक इत्यादि । आकृतिगणत्वात् वाग्वज्रः मुखपद्मम् इत्यादि सिद्धम् ॥ ३७ ॥

## सत्-महत्-परम-उत्तम-उत्कृष्टं पूजायाम् । ३८ ।

१ आचार्यहेमचन्द्रस्तु एनं प्रयोगं ३ । १ । १०३ । सूत्रे बहुलाधिकारात् साधयति ।

'सत्'आदीनि नामानि एकार्थानि पूजायां गम्यमानायां पूज्यवचनैः सह समस्यन्ते ।

सत्पुरुषः । महापुरुषः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः । पूजायाम् इति किम् ? सन् जीवः । पूजायां नियमार्थम् पूर्वनिपातव्यवस्थार्थं वचनम् ॥ ३८ ॥

## वृन्दारक-नाग-कुञ्जरैः । ३९ ।

एतैः सह नाम एकार्थं समस्यते पूजायां गम्यमानायाम् ।

गौः वृन्दारकः इव गोवृन्दारकः । गोनागः । गोकुञ्जरः । पूजायाम् इति किम् ? चैत्रो नागः इव मूर्खः । व्याघ्रादेः आकृतिगणत्वात् सिद्धौ पूजार्थम् तद्गुणोक्त्यर्थं वचनम्। गोनागो बलवान् ॥ ३९ ॥

## कृत्यतुल्याख्यम् अजात्या । ४० ।

कृत्यप्रत्ययान्तम् तुल्यपर्यायं च अजातिवाचिना नाम्ना सह समस्यते ।

भोज्योष्णम् । पानीयशीतम् । तुल्यार्थ- तुल्यश्वेतः । सदृशश्वेतः । अजात्या इति किम् ? भोज्यः ओदनः । 'शीतपानीयम्' इति 'पानीय'शब्दस्य जातिवाचिनः विशेषण-समासः । जात्या समासस्य अजातेः पूर्वत्वस्य च प्रतिषेधार्थं वचनम् । ४० ।

## किं क्षेपे । ४१ ।

'किम्'शब्दः नाम्ना सह समस्यते क्षेपे गम्यमाने ।

स किंराजा यो न रक्षति । अत्र तत्कार्याभावात् क्षेपः । क्षेपे इति किम् ? कः राजा पाटलिपुत्रे ? ॥ ४१ ॥

## पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहत्-बष्कयिणी-प्रवक्तृ-श्रोत्रिय-अध्यापक-धूर्त-प्रशंसारूढैः जातिः । ४२ ।

'पोटा'आदिभिः प्रशंसारूढैश्च जातिवाचि नाम एकार्थं समस्यते ।

इभ्यपोटा पुरुषवेषधारिणी स्त्री पोटा, गर्भे एव दास्यं गता वा । इभ्ययुवतिः । विषस्तोकम् । दधिकतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोबष्कयिणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः । प्रशंसारूढाः- गोमतल्लिका । गोप्रकाण्डम् । 'मतल्लिका'आदयः आविष्टलिङ्गाः । रूढग्रहणं किम् ? गौः रमणीया । जातिः इति किम् ? देवदत्ता पोटा । जातेर्विशेष्यस्य पूर्वनिपातनार्थं वचनम् ॥ ४२ ॥

## चतुष्पाद् गर्भिण्या । ४३ ।

'चतुष्पाद्'जातिवाचि नाम गर्भिणीशब्देन सह समस्यते ।

गोगर्भिणी । चतुष्पाद् इति किम् ? ब्राह्मणी गर्भिणी । जातेः इति किम् ? कालाक्षी गर्भिणी ॥ ४३ ॥

## कतर-कतमौ जातिप्रश्ने । ४४ ।

एतौ एकार्थौ नाम्ना सह समस्येते जातिप्रश्ने गम्यमाने ।

कतरः गार्ग्यः कतरगार्ग्यः । कतमगार्ग्यः । जातिप्रश्ने इति किम् ? कतरः शुक्लः । कतमः गन्ता । जातिप्रश्ने एव इति नियमार्थं वचनम् ॥ ४४ ॥

## जरत्-वलिन-खलति-पलितैः युवा । ४५ ।

'युवन्'शब्दः 'जरत्'आदिभिः सह समस्यते ।

युवजरन् । युववलिनः । युवखलतिः । युवपलितः । 'जरत्'आदीनां पूर्वत्वप्रतिषेधार्थं वचनम् ॥ ४५ ॥

## कुमारः 'श्रमणा'आदिना । ४६ ।

'कुमार'इति नाम एकार्थम् 'श्रमणा'आदिभिः सह समस्यते ।

कुमारी श्रमणा कुमारश्रमणा । कुमारतापसी । 'कुमार'शब्दस्य पूर्वत्वार्थं वचनम् । श्रमणा तापसी गर्भिणी बन्धकी दासी अध्यापक अभिरूपक मृदु पण्डित कुशल चपल निपुण इति 'श्रमणा'आदिः ॥ ४६ ॥

## दिक्-अधिकं संज्ञा-तद्धित-उत्तरपदे । ४७ ।

दिग्वाचि अधिकम् इति एतच्च नाम एकार्थम् नाम्ना सह समस्यते, संज्ञायाम् तद्धितप्रत्यये विषयभूते उत्तरपदे च परं ।

दक्षिणाः कोशलाः दक्षिणकोशलाः । दक्षिणपाञ्चालाः । तद्धिते–दक्षिणस्यां शालायां भवः दाक्षिणशालः । उत्तरपदे–दक्षिणशालाप्रियः । अधिकगवधनः । नित्यः अयं समासः । न हि त्रयाणाम् एकार्थीभावे सति द्वयोर्विग्रहवाक्यसंभवः । 'संज्ञा'आदिग्रहणं किम् ? उत्तराः वृक्षाः । 'विशेषणं व्यभिचारि' [ नाम्नि अष्टमः पादः सूत्र ३२ ] इत्येव सिद्धौ नियमार्थं वचनम् ॥ ४७ ॥

## संख्या समाहारे च द्विगुश्च अनाम्नि अयम् । ४८ ।

अनेकस्य कथंचित् एकत्वं समाहारः । संख्यावाचि नाम एकार्थम् नाम्ना सह समस्यते संज्ञायाम् तद्धिते उत्तरपदे समाहारे च वाच्ये, स च समासः तत्पुरुषसंज्ञः

कर्मधारयसंज्ञः अनाम्नि च द्विगुसंज्ञः ।

संज्ञायाम्—पञ्चाम्राः । दशार्हाः । तद्धिते—पञ्चकपालः ओदनः । उत्तरपदे—पञ्चगवधनः । समाहारे—पञ्चपूली । समाहारे च इति किम् ? अष्टौ प्रवचनमातरः । 'एकपूपी' इति 'एकस्य' अपि अनेकपर्यायोपनिपातात् अनेकत्वसंभवे समाहारोपपत्तिः । चकारः कर्मधारय-तत्पुरुषसंज्ञासमुच्चयार्थः । अनाम्नि इति किम् ? सप्तर्षीणाम् इदं सातर्षम् अत्र द्विगुत्वाभावात् 'द्विगोः अलुचः अनपत्ये' [तद्धिते पा० ९ सूत्र १३८] श्लुग् न भवति । 'अयम्' इति ग्रहणम् 'द्विगुश्च'इत्यस्य उत्तरत्र अनुवृत्त्यर्थम् ॥ ४८ ॥

## 'मयूरव्यंसक'आदयः । ४९ ।

एते तत्पुरुषसमासा निपात्यन्ते ।

लूनौ अंसौ अस्य इति व्यंसः तत्तुल्यः व्यंसकः, व्यंसयति छलयति वा व्यंसकः, व्यंसकः मयूरः मयूरव्यंसकः । छात्रव्यंसकः । कम्बोजमुण्डः । अत्र विशेष्यं पूर्वम् । उदक् च अवाक् च उच्चावचम् । उच्चैश्च नीचैश्च उच्चनीचम् । न किंचन अकिंचनम् । आख्यातम् आख्यातेन सातत्ये—अश्नीत पिबत इति यस्यां वर्तते सा अश्नीतपिबता । क्तं 'नञ्'आदिभिन्नैः—कृताकृतम् । विन्नाविन्नम् । सेट् न अनिटा—क्लिशितमक्लिष्टम् । 'गतप्रत्यागत'आदयः—गतं च प्रत्यागतं च गतप्रत्यागतम् । महान् क्रयः अल्पा क्रयिका—क्रयाक्रयिका । पुटापुटिका । फलाफलिका । 'शाकपार्थिव'आदयः—शाकभोजी पार्थिवः शाकपार्थिवः । कुतपवासाः सौश्रुतः कुतपसौश्रुतः इत्यादि । आकृतिगणत्वात् पादाभ्यां ह्रियते पादहारकः इत्यादि सिद्धम् ॥ ४९ ॥

## 'शब्दप्रथा'आदौ अव्ययम् पूर्वपदार्थे नित्यम् अव्ययीभावः । ५० ।

'शब्दप्रथा' आदौ अर्थे वर्तमानम् अव्ययम् नाम्ना सह पूर्वपदार्थे वाच्ये नित्यं समस्यते, स च समासः अव्ययीभावसंज्ञः ।

शब्दस्य प्रथा प्रकर्षेण ख्यातिः—इतिशाकटायनम् 'शाकटायन'शब्दः लोकेषु सुष्ठु प्रथते इत्यर्थः । ऋद्धेः आधिक्ये—मद्राणां समृद्धिः सुमद्रम् । ऋद्धेः विगमे—दुर्यवनम् । अर्थाभावे-मक्षिकाणाम् अभावः निर्मक्षिकम् । बहुलाधिकारात् धर्माभावे न भवति—अब्राह्मणः । अतीतत्वे—शीतस्य अत्ययः अतिशीतम् । वर्तमाने काले उपभोगादेः प्रतिषेधे—अतिकम्बलम् । समीपे—उपकुम्भम् । अन्यूनत्वे—वृत्तस्य अन्यूनत्वम् सुवृत्तम् । यथार्थे—

---

१ अपूपवत् पूपशब्दोऽपि बोध्यः "अथ पिष्टकः पूपः अपूपः" हैम-अभिधानचि० का० ३ श्लो० ६२ । २ उच्चावचम् पा० पू० ।

रथस्य पश्चात् अनुरथम् । क्रमे—अनुज्येष्ठम् । योग्यतायाम्—रूपस्य योग्यम् अनुरूपम् । वीप्सायाम्—अर्थम् अर्थम् प्रति प्रत्यर्थम् । अनतिवृत्तौ—यथासूत्रम् । विभक्त्यर्थे—स्त्रीषु अधिस्त्रि । युगपदर्थे—सचक्रं धेहि । सादृश्ये—सशीलम् अनयोः । साकल्ये—सतृणम् अभ्यवहरति । अवसाने—आख्यातम् अन्ते कृत्वा साख्यातम् अधीतम् ॥ ५० ॥

## बहिः-परि-अप-आङ्-अञ्च् पञ्चम्या वा । ५१ ।

'बहिर्'आदीनि नामानि पञ्चम्यन्तेन नाम्ना सह वा समस्यन्ते पूर्वपदार्थे वाच्ये, स च समासः अव्ययीभावसंज्ञः ।

बहिर् ग्रामात् बहिर्ग्रामम् । परित्रिगर्तम् । अपत्रिगर्तम् । आग्रामम् । प्रत्यग्ग्रामम् । प्रतिपदविहितपञ्चमीग्रहणात् इह न भवति—अपगतः शाखायाः अपशाखः । 'वा'ग्रहणं वाक्यार्थम् ॥ ५१ ॥

## 'तिष्ठद्गु'इत्यादयः । ५२ ।

एते अव्ययीभावसमासे निपात्यन्ते यथायोगं पूर्वपदार्थे वाच्ये ।

तिष्ठद्गु । वहद्गु । समभूमि । पूर्वपदार्थे इति किम् ? समा भूमिः समभूमिः । तिष्ठद्गु, आयतीगवम् एते काले वर्त्तन्ते । खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूनयवम् पूयमानयवम् संहृतयवम् संहृतबुसम् एते प्रथमान्ताः काले देशे वा । अल्पार्थे प्रतिना—सूपप्रति । शाकप्रति । परिणा अक्ष-शलाका-संख्यम् द्यूते अन्यथावृत्तौ—अक्षेण शलाकया वा तथावृत्तं यथा जयः—अक्षपरि शलाकापरि । एकपरि । द्विपरि । अभि-प्रती लक्षणेन आभिमुख्ये—दीपम् अभि अभिदीपम् प्रतिदीपम् शलाभाः पतन्ति । दैर्घ्ये अनुः—गङ्गाम् अनु अनुगङ्गं वाणारसी । समीपे च—वनस्य अनु अनुवनम् । यावत् अवधारणे—यावदमत्रं अतिथीन् भोजय । अत्र निर्ज्ञातपरिमाणैः अमत्रैः अतिथिपरिमाणम् अवधार्यते । अवधारणात् अन्यत्र न भवति—यावद् दत्तं तावद् भुक्तम् नावधारये किम् इयद् मया भुक्तम् इति । 'द्विदण्डि'-आदिः—प्रमृगम् । प्ररथम् । समं भूमिः समभूमि । समपदाति । अधोनाभम् । सुषमम् । विषमम् इत्यादि ॥ ५२ ॥

## पारे-मध्ये-अग्रे-अन्तः षष्ठ्या वा । ५३ ।

'पार'आदीनि नामानि षष्ठ्यन्तेन सह समस्यन्ते पूर्वपदार्थे वाच्ये, स च समासः अव्ययीभावः, तद्योगे निर्देशादेव 'पार'आदीनाम् एकारान्तत्वम् ।

पारेगङ्गम् । मध्येगङ्गम् । अग्रेवणम् । गिरेः अन्तः अन्तर्गिरि । पक्षे गङ्गापारम् ।

---

१ °ख्यातम् अभिधानम् पा० ।

गङ्गामध्यम् । वनाग्रम् । गिर्यन्तः ॥ ५३ ॥

**संख्या वंश्येन । ५४ ।**

वंशे भवः वंश्यः आद्यपुरुषः तद्वाचिना नाम्ना सह संख्या समस्यते पूर्वपदार्थे वाच्ये, स च समासः अव्ययीभावः ।

एकमुनि व्याकरणस्य । पूर्वपदार्थे इति किम्? त्रिमुनिकं व्याकरणम् ॥ ५४ ॥

**नदीभिः समाहारे । ५५ ।**

संख्यावाचि नदीवाचिभिः सह समस्यते समाहारे गम्यमाने, स च समासः अव्ययीभावः ।

द्वियमुनम् । सप्तगोदावरम् ॥ ५५ ॥

**द्वितीयादि-अन्यपदार्थे नाम्नि । ५६ ।**

नाम नदीवाचिना नाम्ना सह समस्यते द्वितीयाद्यन्तस्य अन्यस्य पदार्थे संज्ञायां विषये, स च समासः अव्ययीभावः ।

उन्मत्ता गङ्गा यस्मिन् स उन्मत्तगङ्गम् तूष्णींगङ्गं देशः । नाम्नि इति किम्? शीघ्रगङ्गं देशः । द्वितीयादि-अन्यपदार्थे इति किम्? कृष्णवेण्णा ॥ ५६ ॥

**मिथः ग्रहणे प्रहरणे च सरूपं युद्धे । ५७ ।**

गृह्णन्ति यस्मिन् तद् ग्रहणम् । प्रहरति येन तत् प्रहरणम् । मिथः ग्रहणे प्रहरणे च वर्तमानं सरूपम् तत्रैव वर्तमानेन नाम्ना सह द्वितीयाद्यन्यपदार्थे युद्धे वाच्ये समस्यते, स च समासः अव्ययीभावः ।

केशाश्च[1] केशाश्च मिथः ग्रहणम् अस्मिन् युद्धे केशाकेशि । कचाकचि । दण्डाश्च दण्डाश्च प्रहरणम् अस्मिन् युद्धे दण्डादण्डि । मिथः इति किम्? केशाः ग्रहणम् अस्मिन् युद्धे । ग्रहणे प्रहरणे च इति किम्? रथश्च रथश्च मिथः लङ्घनम् अस्मिन् युद्धे । अधिकरणाश्रयणं[2] किम्? कटस्य च कटस्य च ग्रहणम् अस्मिन् युद्धे । असमासकरणं[3] पृथक्-समासप्रतिपत्त्यर्थम् तेन इह न भवति-हस्तश्च[4] हस्तश्च मिथः ग्रहणम् प्रहरणं वा अस्मिन् युद्धे । सरूपम् इति किम्? केशाश्च कचाश्च मिथः ग्रहणम् अस्मिन् युद्धे । युद्धे इति किम्? हस्तश्च हस्तश्च मिथः ग्रहणम् अस्मिन् संख्ये[5] ॥ ५७ ॥

---

१ हेमचन्द्रसूरिस्तु 'केशेषु केशेषु च मिथः गृहीत्वा कृतं युद्धम्' तथा 'दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धम्' इति विग्रहं करोति । २ अधिकरणे श्रयणम् पू० । अधिकरणश्रयणम् पा० । ३ नावगम्यते स्पष्टतया । ४ हतश्च हतश्च मिथः पा० पू० । ५ सक्थ्ये पा० । सक्थ्यं युद्धम् इति ।

## एकार्थम् अनेकं च बहुव्रीहिः । ५८ ।

समानाधिकरणम् एकम् अनेकं च नाम्ना सह द्वितीयादि-अन्यपदार्थे समस्यते, स च समासः बहुव्रीहिसंज्ञः ।

ऊढरथः अनड्वान् । उद्धृतबलिर्यक्षः । उद्धृतौदना स्थाली । चित्रगुः । प्रपतित-पर्णः । मत्तबहुमातङ्गं वनम् । बहुलात् पञ्च भुक्तवन्तः अस्य इत्यत्र न भवति । क्वचिद् अन्यत्र अपि भवति—कण्ठे कृतं येन स कृतकण्ठः । उरसिलोमा ॥ ५८ ॥

## 'उष्ट्रमुख'आदयः । ५९ ।

एते बहुव्रीहिसमासा निपात्यन्ते ।

उष्ट्रमुखम् इव उष्ट्रस्य इव वा मुखम् अस्य उष्ट्रमुखः । वृषस्कन्धः । पितृस्थानः । 'उष्ट्रमुख'आदयः प्रयोगगम्याः ॥ ५९ ॥

## दिशः रूढ्या अन्तराले । ६० ।

रूढ्या दिग्वाचि नाम दिग्वाचिना नाम्ना सह समस्यते द्वितीयादिअन्यपदार्थे अन्तराले वाच्ये, स च समासः बहुव्रीहिः ।

दक्षिणस्याश्च पूर्वस्याश्च दिशोः यत् अन्तरालं सा दक्षिणपूर्वा दिक्-आग्नेयी । रूढ्या इति किम् ? ऐन्द्रयाश्च कौबेर्याश्च दिशोः यत् अन्तरालम् ॥ ६० ॥

## अव्ययम् । ६१ ।

अव्ययम् नाम्ना सह द्वितीयादिअन्यपदार्थे वाच्ये समस्यते, स च समासः बहुव्रीहिः ।

उच्चैर्मुखः । सभार्यः । प्रपनितानि पर्णानि यस्य स प्रपर्ण. । सह पुत्रः यस्य येन वा सपुत्रः । बहुलाधिकारात्–"सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" [ ] । अमा सत्रा साकम् पुत्रः अस्य इत्यत्र न भवति । असमानाधिकरणार्थं वचनम् ॥ ६१ ॥

## संख्यायाः संख्येये । ६२ ।

संख्यावाचिना नाम्ना सह द्वितीयादिअन्यपदार्थे संख्येये वाच्ये समस्यते, स च समासः बहुव्रीहिः ।

उपगताः दश येषां ते उपदशाः नव एकादश वा । एवम् उपविंशाः । प्रतिपद-विहितत्वात् 'प्रमाणी-संख्यात् डः' [ ] इत्यत्र एतत्संप्रत्ययार्थम् इदम् उत्तरं च वचनम् ॥ ६२ ॥

### 'अर्ध'आदिपूरण-आसन्न-अदूर-अधिक-अध्यर्धं च । ६३ ।

'अर्ध'पूर्वपदम् पूरणप्रत्ययान्तम् 'आसन्न'आदि च संख्यावाचिना नाम्ना सह द्वितीयादिअन्यपदार्थे संख्येये वाच्ये समस्यते, स च समासः बहुव्रीहिः ।

अर्धपञ्चमा विंशतयः येषां ते अर्धपञ्चमविंशाः—नवतिः इत्यर्थः । एवम् अर्धचतुर्थविंशाः । आसन्नदशाः नव एकादश वा । अदूरदशाः । अधिका दश येषां ते अधिकदशाः एकादश आदयः अधिकत्वं दशानाम् एकाद्यपेक्षया । एवम् अधिकविंशाः । अध्यर्धा विंशतिः येषां ते अध्यर्धविंशाः—त्रिंशत् । एवम् अध्यर्धत्रिंशाः । 'अर्ध'आदिपूरण-आसन्न-आदि इति किम्? संनिकृष्टाः दश येषां ते संनिकृष्टदशानः । अधिका षष्टिः वर्षाणाम् अस्य इत्यादौ बाहुलकात् न भवति । चकारः 'द्वितीयादिअन्यपदार्थे' इत्यस्य अनुकर्षणार्थः तेन उत्तरत्र न अनुवर्तते ।। ६३ ।।

### सुच्-वाअर्थे संख्या । ६४ ।

सुचः अर्थः वारः, वाअर्थः विकल्पः संशयो वा । तत्र संख्यावाचि संख्येये वर्तमानेन संख्यावाचिना नाम्ना सह समस्यते, स च समासः बहुव्रीहिः ।

द्विः दश द्विदशाः । त्रिदशाः । द्वौ वा त्रयो वा द्वित्राः । पञ्चषाः । संख्येये इति किम्? द्विः विंशतिः गवाम् ।। ६४ ।।

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि अष्टमः पादः समाप्तः ।।

*

## नाम्नि नवमः पादः

### 'च'अर्थे द्वन्द्वः सहोक्तौ । १ ।

नाम नाम्ना सह 'च'अर्थे विषये सहोक्तौ समस्यते, स च समासः द्वन्द्वः ।

वाक् च त्वक् च वाक्त्वचम् । धवखदिरपलाशाः । 'च'अर्थे इति किम्? वीप्सा-सहोक्तौ मा भूत्—ग्रामः ग्रामः रमणीयः । सहोक्तौ इति [१]किम्? प्लक्षश्च न्यग्रोधश्च दृश्यताम् ।। १ ।।

### समानाम् अर्थेन एकः शेषः । २ ।

---

१ किम्? वक्रश्च कुटिलश्च दृश्यतां द्वन्द्वाप° पू० । अत्र पू० आदर्शे सवृत्तिकं द्वितीयं सूत्रमेव नष्टम् ।

अर्थेन तुल्यानां सहोक्तिविषये एकः शेषो भवति अर्थात् अन्ये निवर्त्तन्ते ।

वक्रश्च कुटिलश्च वक्रौ कुटिलौ वा । अर्थेन समानाम् इति किम् ? प्लक्ष-न्यग्रोधौ । सहोक्तौ इति किम् ? वक्रश्च कुटिलश्च दृश्यताम् । द्वन्द्वापवादो योगः ॥ २ ॥

## स्यादौ असंख्येयः । ३ ।

स्यादौ तुल्यरूपाणाम् एकः शेषो भवति न तु संख्येयवाची ।

अक्षश्च शकटाक्षः अक्षश्च देवनाक्षः अक्षश्च बिभीतकः अक्षाः । एवम् पादाः । स्यादौ इति किम् ? माता च जननी माता च धान्यस्य मातृमातरौ, अत्र जनयित्रीवाचिनः मातरौ धान्यमातृवाचिनः मातारौ इति औकारे रूपभेदः । यस्मिन् स्यादौ एकरूपता तस्मिन् भवत्येव—मातृभ्याम् मातृभिः । असंख्येय इति किम् ? एकश्च एकश्च, अत्र द्वन्द्वोऽपि न भवति अनभिधानात् । विंशतिश्च विंशतिश्च विंशती इत्यत्र तु [1]संख्यान-वाचित्वात् भवति ॥ ३ ॥

## पिता मात्रा वा । ४ ।

'पितृ'शब्दः 'मातृ'शब्देन सह सहोक्तौ शेषो वा भवति ।

पिता च माता च पितरौ, मातापितरौ ॥ ४ ॥

## श्वशुरः श्वश्रूभ्यां वा । ५ ।

'श्वशुर'शब्दः 'श्वश्रू'शब्देन सह सहोक्तौ शेषः भवति वा ।

श्वशुरौ श्वश्रूश्वशुरौ । द्विवचनम् जातौ विकल्पार्थम् अन्यथा विकल्पः धवयोगे सावकाशः इति परत्वात् 'पुरुषः स्त्रिया' [ नाम्नि नवमः पादः सूत्र ८ ] इति नित्यविधेः नाऽऽबाध्यते ॥ ५ ॥

## भ्रातृ-पुत्रअर्थाः स्वसृ-दुहितृअर्थैः । ६ ।

भ्रातृअर्थः स्वसृअर्थेन, पुत्रअर्थः दुहितृअर्थेन सह सहोक्तौ शेषो भवति ।

भ्राता च स्वसा च भ्रातरौ । सोदर्यश्च स्वसा च सोदर्यौ । भ्राता च भगिनी च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ । सुतश्च दुहिता च सुतौ । पुत्रश्च सुता च पुत्रौ । बहु-वचनं विकल्पनिवृत्त्यर्थम् ॥ ६ ॥

## 'त्यद्'आदिः । ७ ।

'त्यद्'आदिः नाम्ना सह सहोक्तौ शेषः भवति ।

---

१ संख्यातवाचि॰ पा॰ ।

स च चैत्रश्च तौ। 'त्यद्'आदीनां मिथः सहोक्तौ यत् यत् परम् तत् तत् एव एकं शेषः—स च यश्च यौ। स्त्री-पुं-नपुंसकानां परम्—सा च चैत्रश्च तौ। सा च कुण्डं च ते। स च सा च कुण्डं च तानि। द्वन्द्वविशेषणे तल्लिङ्गम्—स च कुक्कुटः सा च मयूरी कुक्कुटमयूर्यौ ते ॥ ७ ॥

## पुरुषः स्त्रिया तन्मात्रभेदे। ८।

'पुरुष'शब्दः प्राणिनि पुंसि रूढः तद्वाची स्त्रीवाचिना सह सहोक्तौ शेषः भवति, तन्मात्रभेदे—स्त्री-पुरुषमात्रात् अन्यः यदि प्रकृतिभेदः अर्थभेदः वा न स्यात् इत्यर्थः।

ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। पुरुषः इति किम्? तीरं नद-नदीपतेः। तन्मात्र-भेदे इति किम्? पुं-स्त्रियौ अत्र प्रकृतिभेदः। इन्द्र-इन्द्राण्यौ अत्र धवयोगलक्षणः अन्योऽर्थः ॥ ८ ॥

## वृद्धः यूना ॥ ९ ॥

वृद्धप्रत्ययान्तः युवप्रत्ययान्तेन सह सहोक्तौ शेषः भवति।

गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वृद्धः इति किम्? गर्गगार्ग्यायणौ। यूना इति किम्? गर्ग-गार्ग्यौ। तन्मात्रभेदे इति किम्? गार्ग्य-वात्स्यायनौ ॥ ९ ॥

## स्त्री पुंवत् च। १०।

वृद्धप्रत्ययान्तः स्त्रीवाची युवप्रत्ययान्तेन सह सहोक्तौ शेषः भवति तन्मात्रभेदे पुंवत् च।

गार्गी च गार्ग्यायणौ च गर्गान् ॥ १० ॥

## ग्राम्यअशिशुद्विखुरसंघे स्त्री प्रायः। ११।

ग्राम्यअशिशुद्विखुरसंघविषये स्त्री-पुरुषाणां सहोक्तौ स्त्रीवाची एकः प्रायेण शेषः भवति तन्मात्रभेदे।

गावश्च स्त्रियः गावश्च पुरुषाः इमा गावः। ग्राम्यग्रहणं किम्? रुरवश्च इमाः इमे रुरवः। अशिशु-इति किम्? बर्कर्यश्च बर्कराश्च इमे बर्कराः। द्विखुर-इति किम्? गर्दभाश्च गर्दभ्यश्च गर्दभाः। संघे इति किम्? गौश्च अयम् गौश्च इयम् इमौ गावौ। प्रायः इति किम्? उष्ट्राश्च उष्ट्र्यश्च उष्ट्राः। छागाश्च छाग्यश्च छागाः। तन्मात्रभेदे इति किम्? गो-बलीवर्दाः ॥ ११ ॥

## 'पुष्य'अर्थात् भे पुनर्वसुः एकः। १२।

'पुष्य'अर्थात् नक्षत्रे वर्तमानात् परः नक्षत्र एव वर्तमानः 'पुनर्वसु'शब्दः द्व्यर्थः सन् सहोक्तौ एकार्थः भवति ।

पुष्य-पुनर्वसू । 'पुष्य'अर्थात् इति किम्? आर्द्रा-पुनर्वसवः । भे इति किम्? पुष्य-पुनर्वसवः माणवकाः ॥ १२ ॥

## प्राणि-तूर्याङ्गाणाम् द्वन्द्वः स्वैः । १३ ।

प्राणिअङ्गानाम् तूर्यअङ्गाणां च सजातीयैः यः द्वन्द्वः स एकार्थः भवति ।

कर्णनासिकम् । शिरोग्रीवम् । शङ्खपटहम् । मार्दङ्गिकपाणविकम् । स्वैः इति किम्? पाणिगृध्रौ । पाणिपटहौ ॥ १३ ॥

## चरणस्य स्था-इणः अद्यतन्याम् अनुवादे । १४ ।

चरणशब्दः वेदशाखानिमित्तः तदध्यायिषु वर्तते । प्रमाणान्तरप्रतिपन्नस्य अर्थस्य शब्देन संकीर्तनम् अनुवादः "अनुकरणम्" [ ] इति अन्ये । चरणवाचिनाम् अद्यतनीपरयोः स्था-इणोः कर्तृत्वेन संबन्धिनाम् स्वैः द्वन्द्वः अनुवादविषये एकार्थः भवति ।

प्रत्यष्ठात् कठकालापम् । उदगात् कठकौस्तुभम् । चरणस्य इति किम्? उदगु-र्वत्सवाजाः । स्था-इणः इति किम्? आनन्दिषुः कठकालापाः । अद्यतन्याम् इति किम्? प्रतितिष्ठन्ति कठ-कौस्तुभाः । अनुवादे इति किम्? उदगुः कठकालापाः अप्रसिद्धं कथयन्ति ॥ १४ ॥

## निकटपाठ-पात्र्यशूद्र-अनपुंसकअध्वर्युक्रतु-विलिङ्गनदी-देश-पुराम् ।१५।

एषां स्वैः द्वन्द्वः एकार्थः भवति ।

निकटपाठाः पाठेन आसन्नाः—पदम् अधीयानः पदकः, एवम् क्रमकः पदकक्रमकम् । येषां भुक्तं पात्रं संस्कारेण शुध्यति ते शूद्राः पात्रम् अर्हन्ति इति पात्र्याः—तक्षअयस्कारम् । रजकतन्तुवायम् । पात्रग्रहणम् किम्? जनङ्गमबुक्कसाः । अनपुंसकअध्वर्युक्रतु—अर्काश्व-मेधम् । अनपुंसकग्रहणम् किम्? गवाऽऽमयनआदित्याऽनामयने । अध्वर्युः यजुर्वेदः तद्-ग्रहणं किम्? इषुवज्रौ । क्रतूनाम् इति किम्? दर्श-पौर्णमासौ । विलिङ्गनदी-देश-पुराम्—गङ्गा च शोणश्च गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । मथुरापाटलिपुत्रम् । समानलिङ्गानां तु न भवति—गङ्गायमुने । मद्रकेकयाः । मथुरावाराणस्यौ ॥ १५ ॥

## अप्राणि-फलादेः जातौ । १६ ।

---

१ भुक्तं संस्कारेण पा० । २ अत्र आमयन-अनामयनशब्दौ बोध्यौ । आमयनं हि अनारोग्यम् । ३ मथुरा° पू० ।

प्राणिवर्जितानाम् वक्ष्यमाणफलादिवर्जितानां च जातौ वर्तमानानां स्वैः द्वन्द्वः एकार्थः भवति ।

आराशस्त्रि । धानाशष्कुलि । अप्राणि-फलादेः इति किम् ? ब्राह्मणक्षत्रियविट्शूद्राः, ब्राह्मणक्षत्रियविट्शूद्रम् । बदरामलके, बदरामलकम् । अश्वरथौ, अश्वरथम् । प्लक्ष-न्यग्रोधौ । जातौ इति किम् ? सह्यविन्ध्यौ । जातिपरचोदनायाम् अयम् एकवद्भावः इति इह न भवति—इमे आरा-शस्त्र्यौ तिष्ठतः ॥ १६ ॥

## फलानां बहुत्वे । १७ ।

फलवाचिनां बहुत्वे वर्तमानानां जात्यर्थानां स्वैः द्वन्द्वः एकार्थः भवति ।

बदराणि च आमलकानि च बदरामलकम् । बहुत्वे इति किम् ? बदरं च आमलकं च बदरामलके । जात्यर्थानाम् इति किम् ? द्रव्यपरचोदनायां मा भूत्—एतानि बदरामल-कानि तिष्ठन्ति ॥ १७ ॥

## सेनाङ्ग-क्षुद्रजन्तूनाम् । १८ ।

सेनाङ्गानाम् क्षुद्रजन्तूनां च बह्वर्थानां स्वैः द्वन्द्वः एकार्थः भवति ।

अश्वाश्च रथाश्च अश्वरथम् । क्षुद्रजन्तवः अल्पकायाः प्राणिनः आनकुलं स्मर्यन्ते—यूकामत्कुणम् । बहुत्वे इति किम् ? अश्वरथौ । स्वैः इति किम् ? हस्ति-मशकाः ॥१८॥

## तरु-तृण-धान्य-मृगपक्षिणां वा । १९ ।

एषां बह्वर्थानां स्वैः द्वन्द्वः एकार्थः वा भवति ।

प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः । कुशकाशम्, कुशकाशाः । तिलमाषम्, तिल-माषाः । हंसचक्रवाकम्, हंसचक्रवाकाः । बहुत्वे इति किम् ? प्लक्षन्यग्रोधौ । मृगाणां पशुत्वात् उत्तरेण एव सिद्धौ इह उपादानम् अमृगैः अबहुत्वे च एकत्वाभावार्थम् ॥१९॥

## पशु-व्यञ्जनानाम् । २० ।

'बहुत्वे' इति निवृत्तम् पृथग्योगात् । पशूनाम् व्यञ्जनानां च स्वैः द्वन्द्वः एकार्थः वा भवति ।

गोमहिषम्, गोमहिषौ । दधिघृतम् दधिघृते । परत्वात् पशुद्वन्द्वः सेनाङ्गत्वं बाधते—हस्त्यश्वम्, हस्त्यश्वाः ॥ २० ॥

## अश्ववडव-पूर्वापर-अधरोत्तराः । २१ ।

---

१ हस्तिमशकौ पा० ।

एते द्वन्द्वा एकार्था वा भवन्ति ।

अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरौ। अधरोत्तरम्, अधरोत्तरौ। 'अश्ववडव' इति अत एवं निर्देशात् आपः निवृत्तिः ॥ २१ ॥

## विरोधिनाम् अद्रव्याणाम् । २२ ।

द्रव्यम् गुणाद्याधारः, तद्व्यतिरिक्तानां विरोधिनां स्वैः द्वन्द्वः एकार्थः वा भवति ।

शीतोष्णम्, शीतोष्णे । लाभालाभम्, लाभालाभौ । विरोधिनाम् इति किम्? रूपरसगन्धस्पर्शाः । अद्रव्याणाम् इति किम्? शीतोष्णे उदके । स्वैः इति किम्? बुद्धि-सुखदुःखेच्छाः । समाहारविवक्षायाम् एकत्वम् इतरेतरयोगविवक्षायाम च अनेकत्वं सिद्धम् नियमार्थस्तु प्रपञ्चः ॥ २२ ॥

## नित्यं नित्यवैरिणाम् । २३ ।

शाश्वतवैरिणां द्वन्द्वः नित्यम् एकार्थः भवति ।

अहिनकुलम् । काकोलूकम् । नित्यवैरिणाम् इति किम्? गोपालि-शालङ्कायनाः अर्थान्तरकृतम् एषां वैरम् । परत्वात् पशुद्वन्द्वविकल्पं बाधते—अश्वमहिषम् ॥ २३ ॥

## 'गवाश्व'आदिः । २४ ।

'गवाश्व'आदिः द्वन्द्वः एकार्थः भवति ।

गवाश्वम् । गवैलकम् । गवाविकम् । अजैलकम् । अजाविकम् । कुब्जवामनम् । कुब्जकैरातकम् । पुत्रपौत्रम् । अश्वचण्डालम्[1] । स्त्रीकुमारम् । दासीमाणवकम् । उष्ट्रखरम् । उष्ट्रशशम् । मूत्रपुरीषम् । यकृन्मेदः । मांसशोणितम् । दर्भशरम् । अर्जुनपुरुषम् । तृणोपलम् । कुटीकुटम् । दासीदासम् । भागवतीभागवतम् । यथोच्चारितरूपग्रहणात् इह न भवति—गौऽश्वौ, गोअश्वौ[2] ॥ २४ ॥

## न 'दधिपयः'आदिः । २५ ।

'दधिपयः'आदिः द्वन्द्वः एकार्थः न भवति ।

दधिपयसी । मधुसर्पिषी । शिववैश्रवणौ । स्कन्दविशाखौ । शुक्लकृष्णे । दीक्षा-तपसी । आद्यवसाने इत्यादि ॥ २५ ॥

## संख्याने । २६ ।

संख्यानम् इयत्तापरिच्छेदः, तस्मिन् सति द्वन्द्वः एकार्थः न भवति ।

---

१ ३।१।१४४ सूत्रे "श्वचण्डालम्" इति श्रीहेमचन्द्रपादाः । २ गोऽश्वौ गोअश्वौ पू० ।

दश हस्त्यश्वाः । बहवः पाणिपादाः । तावन्तः गवाश्वाः ॥ २६ ॥

## वा अन्तिके । २७ ।

वृत्तिपदानां संख्यानस्य समीपे गम्यमाने द्वन्द्वः एकार्थः वा भवति ।

उपदश हस्त्यश्वम्, उपदशाः हस्त्यश्वाः । द्वन्द्वार्थस्य एकत्वात् अनुप्रयोगस्यापि बहुव्रीहेः एकत्वम् ॥ २७ ॥

## प्रथमोक्तं प्राक् । २८ ।

समासप्रकरणे प्रथमया उक्तं प्राक् निपतति ।

तृतीया—गिरिकाणः । आसन्नदशाः ॥ २८ ॥

## 'राजदन्त'आदिषु । २९ ।

एषु समासेषु अप्राप्तप्राग्निपातं प्राग् निपतति ।

दन्तानां राजा राजदन्तः । पूर्वं वासितम् पश्चात् लिप्तम् लिप्तवासितम् । नग्नमुषितम् । उदूखलमुसले । जम्पती । दम्पती । जायापती । निपातनात् 'जाया'शब्दस्य 'जम्'भाव-'दम्'भावौ वा । स्वसृपती । पुत्रपती इत्यादि ॥ २९ ॥

## विशेषणं सर्वादि-संख्यं बहुव्रीहौ । ३० ।

विशेषणम् सर्वादि संख्यावाचि च बहुव्रीहौ प्राग् निपतति ।

चित्रगुः । सर्वशुक्लः । द्विकृष्णः ॥ ३० ॥

## क्तः । ३१ ।

क्तान्तं बहुव्रीहौ प्राग् निपतति ।

कृतकटः । कृतविश्वः । कृतत्रिकः । कृतप्रियः । बहुवचनं प्रियार्थम् ॥३१ ॥

## काल-आकृतिजाति-सुखादिभ्यः वा । ३२ ।

कालवाचिनः आकृतिव्यङ्ग्यजातिवाचिनः 'सुख'आदिभ्यश्च क्तान्तं बहुव्रीहौ प्राग् निपतति वा ।

मासजाता, जातमासा । सोङ्गरजग्धी, जग्धसाङ्गरा । सुखजाता, जातसुखा । आहिताग्निः, अग्न्याहितः । ऊढभार्यः, भार्योढः । आकृतिव्यङ्ग्यजातिग्रहणं किम्? आहूतब्राह्मणः । 'सुख'आदयः प्रयोगगम्याः ॥ ३२ ॥

---

१ ३।१।१५२ सूत्रे शाङ्गर-इति हैमे ।

**सप्तमी च प्रहरणात् । ३३ ।**

प्रहरणवाचिनः बहुव्रीहौ सप्तम्यन्तम् क्तान्तं च प्राग् निपतति वा ।

दण्डः पाणौ यस्य दण्डपाणिः, पाणिदण्डः । पाणिवज्रः, वज्रपाणिः ॥ ३३ ॥

**'गडु'आदिभ्यः । ३४ ।**

एभ्यः सप्तम्यन्तं बहुव्रीहौ वा प्राग् निपतति ।

गडुः कण्ठे यस्य स कण्ठेगडुः, गडुकण्ठः । मध्येगुरुः, गुरुमध्यः । 'गडु'आदयः प्रयोगगम्याः ॥ ३४ ॥

**प्रियः । ३५ ।**

'प्रिय'शब्दः बहुव्रीहौ वा प्राग् निपतति ।

प्रियगुडः, गुडप्रियः । प्रियविश्वः, विश्वप्रियः ॥ ३५ ॥

**'कडार'आदयः कर्मधारये । ३६ ।**

'कडार'आदयः कर्मधारये प्राग् निपतन्ति ।

कडारजैमिनिः जैमिनिकडारः । कर्मधारये इति किम् ? ईषत्कडारः । 'कडार'-आदीनां गुणवचनत्वात् पक्षे परत्वार्थं वचनम् । कडार कडुल इत्यादि ॥ ३६ ॥

**धर्म-अर्थआदिषु द्वन्द्वे । ३७ ।**

द्वन्द्वे धर्म-अर्थआदिषु अप्राप्तप्राग्निपातं प्राग् निपतति वा ।

धर्मार्थौ, अर्थधर्मौ । कामार्थौ, अर्थकामौ । शब्दार्थौ, अर्थशब्दौ इत्यादि ॥ ३७ ॥

**लघुस्वर-घि-स्वराद्यदन्त-अल्पस्वर-अर्च्यम् एकम् । ३८ ।**

लघुस्वरम् घिसंज्ञम् स्वरादिअकारान्तम् अल्पस्वरम् अर्च्यवाचि च द्वन्द्वे समासे प्राग् एकं निपतति ।

कुशकाशम् । अग्निधूमम् । इन्द्रचन्द्रौ । धवखदिरौ । वासुदेवार्जुनौ । स्पर्धे परं परम् । लघुआदि—इति किम् ? कुक्कुटमयूरौ, मयूरकुक्कुटौ । एकम् इति किम् ? अनेकप्राप्तौ एकस्य नियमः शेषस्य अनियमः—गुरुरविभास्करतनयाः, रविभास्करतनयगुरवः । इदं तु न भवति—भास्करतनयरविगुरवः । अत एव एकग्रहणात् बहूनाम् अद्वन्द्वः ॥ ३८ ॥

**वर्ण-मास-भ्रातृ अनुपूर्वम् । ३९ ।**

१ ३।१।१५८ सूत्रे गडुल इति हैमे । गडुर्यस्य अस्ति स गडुलः ।

द्वन्द्वे समासे वर्णः मासः भ्राता च पूर्वः पूर्वः प्राग् निपतति ।

ब्राह्मणक्षत्रियौ । क्षत्रियवैश्यौ । वैश्यशूद्रौ । ब्राह्मणक्षत्रियविट्शूद्राः । फाल्गुन-चैत्रौ । भीमसेनार्जुनौ । 'अनु'ग्रहणात् 'एकम्'इति निवृत्तम् ॥ ३९ ॥

**भ-ऋतुतुल्यस्वरम् । ४० ।**

भवाचि ऋतुवाचि च तुल्यस्वरम् अनुपूर्वं द्वन्द्वे प्राग् निपतति ।

अश्विनीभरणीकृत्तिकाः । हेमन्तशिशिरवसन्ताः । तुल्यस्वरम् इति किम् ? आर्द्रा-मृगशिरसी । ग्रीष्मवसन्तौ ॥ ४० ॥

**संख्या समासे । ४१ ।**

संख्यावाचि समासे अनुपूर्वं प्राग् निपतति ।

द्वित्राः । अशीतिशतम् ॥ ४१ ॥

**प्रत्यये च स्यादेः श्लुक् । ४२ ।**

समासे प्रत्यये च परे स्यादेः श्लुग् भवति ।

खट्वारूढः । पुत्रीयति । अत एव श्लुग्वचनात् 'नाम नाम्ना' [ नाम्नि अष्टमपादः सूत्र १ ] इति उक्तौ अपि स्याद्यन्तानां समासः ॥ ४२ ॥

**मध्य-अन्तात् सप्तम्या न उत्तरे पदे गुरौ । ४३ ।**

मध्य-अन्तशब्दाभ्यां परस्याः सप्तम्याः गुरुशब्दे उत्तरपदे परे श्लुग् न भवति ।

मध्येगुरुः । अन्तेगुरुः ॥ ४३ ॥

**अत्-व्यञ्जनात् स्वाङ्गात् अमूर्ध-मस्तकात् अकामे । ४४ ।**

अदन्तात् व्यञ्जनान्तात् च स्वाङ्गवाचिनः मूर्ध-मस्तकवर्जितात् परस्याः सप्तम्याः कामशब्दवर्जिते उत्तरपदे परे श्लुग् न भवति ।

कण्ठेकालः । उरसिलोमा । अत्-व्यञ्जनात् इति किम् ? अङ्गुलिव्रणः । स्वाङ्गात् इति किम् ? मुखपुरुषा शाला । अमूर्ध-मस्तकात् इति किम् ? मूर्धशिखः । मस्तकशिखः । अकामे इति किम् ? मुखकामः ॥ ४४ ॥

**बन्धे घञि वा । ४५ ।**

अत्-व्यञ्जनात् परस्याः सप्तम्याः घञन्ते बन्धशब्दे उत्तरपदे परे श्लुग् वा न भवति ।

हस्तेबन्धः, हस्तबन्धः । अत्-व्यञ्जनात् इति किम् ? गुप्तिबन्धः ॥ ४५ ॥

## तत्पुरुषे कृति बहुलम् । ४६ ।

अत्-व्यञ्जनात् परस्याः सप्तम्याः कृदन्ते उत्तरपदे परे तत्पुरुषे समासे श्लुग् न भवति बहुलम् ।

स्तम्बेरमः । भस्मनिहुतम् । अप्सुचरः । शरदिजः । प्रावृषिजः । क्वचित् न स्यात्—मद्रचरः । काम्पिल्यसिद्धः । [1]स्थण्डिलशायी । क्वचित् विकल्प—वर्षेजः, वर्षजः । मनसिजः, मनोजः । अप्सुजम्, अब्जम् । अकालवाचिनः शय-वासि-वासेषु—ग्रामेशयः, ग्रामशयः । ग्रामेवासी, ग्रामवासी । ग्रामेवासः ग्रामवासः । अकालात् इति किम् ? पूर्वाह्णशयः । क्वचित् अकृदन्तेऽपि । कालवाचिनः तन-तर-तम-कालेषु—पूर्वाह्णेतनः, पूर्वाह्णतनः । पूर्वाह्णेतराम्, पूर्वाह्णतरे । पूर्वाह्णेतमाम्, पूर्वाह्णतमे । पूर्वाह्णेकालः, पूर्वाह्णकालः । अपः योनि-मति-ये नित्यम्—अप्सुयोनिः, अप्सुमतिः । अप्सु भवम् अप्सव्यम् । क्वचित् अन्यत् एव—हृदयं स्पृशति हृदिस्पृक् । द्वितीयार्थे सप्तमी । तत्पुरुषे इति किम् ? धन्वनि कारका यस्य स धन्वकारकः ॥ ४६ ॥

## प्राचां कारे व्यञ्जने । ४७ ।

रक्षार्थं प्रजानां राज्ञे देयम् कारः । अत्-व्यञ्जनात् परस्याः सप्तम्याः व्यञ्जनादौ उत्तरपदे प्राचां कारे विषये श्लुग् न भवति ।

दृषदि दृषदि दातव्यः माषकः दृषदिमाषकः । समिधिमाषकः । वृत्तौ वीप्सायाः दानस्य च अन्तर्भावः । प्राचाम् इति किम् ? यूथपशुः । कारे इति किम् ? [2]अभ्याहितपशुः कारात् अन्यद् देयम् । व्यञ्जने इति किम् ? अविकटोरणः । अत्-व्यञ्जनात् इति किम् ? जङ्घाकार्षापणः ॥ ४७ ॥

## नाम्नि । ४८ ।

अत्-व्यञ्जनात् परस्याः सप्तम्या उत्तरपदे परे श्लुग् न भवति नाम्नि विषये । त्वचिसारः । युधिष्ठिरः । अरण्येतिलकाः । अत्-व्यञ्जनात् इति किम् ? भूमिपाशः । नदीकुक्कुटिका । नाम्नि इति किम् ? अक्षशौण्डः ॥ ४८ ॥

## पर-आत्मभ्यां ङेः । ४९ ।

आभ्यां परस्य ङेः उत्तरपदे परे श्लुग् न भवति नाम्नि विषये ।

परस्मैपदम् । [3]परस्मैभाषः । आत्मनेपदम् । [4]आत्मनेभाषः । नाम्नि इति किम् ? परहितम् ॥ ४९ ॥

---

१ स्थण्डिलशालायाम् क्वचित् पा० । २ ३।२।१९ सूत्रे अभ्यर्हितपशुः इति हैमे । ३ "परस्मैभाषा । ४ आत्मनेभाषा' इति हैमे सूत्र ३ । २ । १७ ।

## मनसः टः । ५० ।

'मनः'शब्दात् परस्य टावचनस्य उत्तरपदे परे नाम्नि श्लुग् न भवति ।

मनसागुप्ता । मनसादेवी एवं नाम काचित् । नाम्नि इति किम्? मनोदत्ता कन्या ॥ ५० ॥

## आज्ञायिनि । ५१ ।

'मनः'शब्दात् परस्य टः आज्ञायिनि उत्तरपदे परे श्लुग् न भवति ।

मनसाज्ञायी ॥ ५१ ॥

## पूरणे च आत्मनः । ५२ ।

'आत्म'शब्दात् परस्य टः आज्ञायिनि पूरणे प्रत्ययान्ते च उत्तरपदे परे श्लुग् न भवति ।

आत्मनाज्ञायी । आत्मनापञ्चमः । आत्मनाषष्ठः । "जनार्दनस्त्वात्मचतुर्थ एव" [ ] इति बहुव्रीहिः ॥ ५२ ॥

## पुम्-जनुषः अनुज-अन्धे । ५३ ।

पुम्-जनुःशब्दाभ्यां परस्य टः यथासंख्यं अनुजे अन्धे च उत्तरपदे परे श्लुग् न भवति ।

मनसाअनुजः । जनुषा जन्मना अन्धः जनुषाअन्धः । टः इति किम्? पुमांसम् अनुजातः पुमनुजः ॥ ५३ ॥

## ओजस्-अञ्जस्-सहस्-अम्भस्-तमस्-तपसः । ५४ ।

एभ्यः परस्य टः उत्तरपदे परे श्लुग् न भवति ।

ओजसाकृतम् । अञ्जसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् । तपसाकृतम् ॥ ५४ ॥

## स्तोक-अल्प-कतिपय-कृच्छ्रात् असत्त्वे ङसेः । ५५ ।

असत्त्वे वर्तमानेभ्यः 'स्तोक'आदिभ्यः परस्य ङसेः उत्तरपदे परे श्लुग् न भवति।

स्तोकान्मुक्तः । अल्पान्मुक्तः । कतिपयान्मुक्तः । कृच्छ्रान्मुक्तः । असत्त्वे इति किम्? स्तोकभयम् । उत्तरपदे इति किम्? निःस्तोकः ॥ ५५ ॥

---

१ इदमेव पद्यरूपम् उदाहरणम् सूत्र ३ । २ । १४ । हैमे । अत्र "आत्मा चतुर्थः अस्य इति बहुव्रीहिः" इति तत्रैव वृत्तौ ।

### ब्राह्मणात् शंसी । ५६ ।

अत्र ङसेः श्लुगभावः निपात्यते ।

ब्राह्मणात् ग्रन्थात् गृहीत्वा शंसति ब्राह्मणाच्छंसी ऋत्विग्विशेषः । अन्यत्र श्लुग् भवत्येव—ब्राह्मणशंसिनी स्त्री ॥ ५६ ॥

### नामिनः स्वरात् खिति अमः । ५७ ।

नाम्यन्तात् एकस्वरात् परस्य अमः खिदन्ते उत्तरपदे परे श्लुग् न भवति ।

स्त्रियंमन्यः । नावंमन्यः । नामिन इति किम् ? वाग्मन्यः । एकस्वरात् इति किम् ? कालिंमन्यः ? खिति इति किम् ? स्त्रीमानी ॥ ५७ ॥

### षष्ठ्याः आक्रोशे । ५८ ।

आक्रोशे गम्यमाने षष्ठ्याः उत्तरपदे परे श्लुग् न भवति ।

चौरस्य कुलम् । दास्याः पतिः । आक्रोशे इति किम् ? चौरकुलम् । तत्त्वाख्याने न प्रतिक्षेपः ॥ ५८ ॥

### पुत्रे वा । ५९ ।

आक्रोशे गम्यमाने पुत्रशब्दे उत्तरपदे परे षष्ठ्याः श्लुग् वा भवति ।

दास्याः पुत्रः, दासीपुत्रः । आक्रोशे इति किम् ? ब्राह्मणपुत्रः । 'दासीपुत्रः' इति तु तत्त्वाख्याने ॥ ५९ ॥

### 'वाचोयुक्ति'आदयः । ६० ।

एते षष्ठ्याः श्लुगभावे निपात्यन्ते ।

वाचोयुक्तिः । पश्यतोहरः । दिशोदण्डः । देवानांप्रियः । शुनः शेप-पुच्छ-लाङ्गूलेषु नाम्नि—शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः । वाचस्पतिः । वास्तोष्पतिः । दिवस्पतिः । दिवोदासः । गोष्पदो देशः यत्र ग्रामसमीपादौ गावः संचरन्ति । गोष्पदपूरं वृष्टो देवः । अन्यत्र न भवति । गोपदम् ॥ ६० ॥

### ऋतां विद्या-योनिसंबन्धे । ६१ ।

विद्यायाम् योनिसंबन्धे च निमित्ते प्रवर्तमानानाम् ऋदन्तानां संबन्धिन्याः षष्ठ्याः विद्यायोनिसंबन्धे एव निमित्ते सति प्रवर्तमाने उत्तरपदे श्लुग् न भवति ।

होतुःपुत्रः । पितुःपुत्रः । होतुःअन्तेवासी । पितुःअन्तेवासी । ऋताम् इति

---

१ य. चौर्यं करोति स चौरः इति स्वरूपपरिचयवार्तायाम् न आक्रोशः ।

किम् ? आचार्यपुत्रः। बहुवचनम् विद्यासंबन्धस्य विद्यासंबन्धे योनिसंबन्धस्य च योनिसंबन्धे इति यथासंख्याऽभावार्थम् । अत एव 'योनिसंबन्धे' इति उभयोः विशेषणम् तेन इह न भवति—भर्तृगृहम् । भर्तृपुत्रः । पितृगृहम् ॥ ६१ ॥

## स्वसृ-पत्योः वा । ६२ ।

विद्या-योनिसंबन्धे वर्तमानानाम् ऋदन्तानां षष्ठ्याः विद्या-योनिसंबन्धनिमित्तयोः स्वसृ-पत्योः परयोः श्लुग् वा न भवति ।

होतुःस्वसा, होतृस्वसा । दुहितुःपतिः, दुहितृपतिः । विद्यायोनिसंबन्धे इति किम् ? भर्तृस्वसा । होतृपतिः ॥ ६२ ॥

## आ द्वन्द्वे । ६३ ।

विद्या-योनिसंबन्धनिमित्तानां ऋदन्तानां द्वन्द्वे समासे उत्तरपदे परे पूर्वपदस्य आकारः अन्तादेशो भवति ।

होता च पोता च होतापोतारौ । ऋदन्तानाम् इति किम् ? गुरुशिष्यौ । ऋतां द्वन्द्वविशेषणम् किम् ? पितृपितामहौ । विद्यायोनिसंबन्धे इति किम् ? कर्तृ-कारयितारौ ॥६३

## पुत्रे । ६४ ।

पुत्रशब्दे उत्तरपदे परे विद्या-योनिसंबन्धनिमित्तानाम् ऋदन्तानां द्वन्द्वे आकारः अन्तादेशो भवति ।

होतापुत्रौ । पितापुत्रौ ॥ ६४ ॥

## वेदसहश्रुत-अवायुदेवतानाम् । ६५ ।

वेदे सहश्रुतानाम् वायुवर्जानां देवतानां द्वन्द्वे पूर्वपदस्य उत्तरपदे परे आकारः अन्तादेशो भवति ।

इन्द्रासोमौ । इन्द्रावरुणौ । वेद° इति किम् ? ब्रह्मप्रजापती । सह° इति किम् ? विष्णुशक्रौ । श्रुत° इति किम् ? चन्द्रसूर्यौ । वायुवर्जनम् इति किम् ? वाय्वग्नी । देवतानाम् इति किम् ? यूपचषालौ ॥ ६५ ॥

## षोम-वरुणे अग्नेः ईः । ६६ ।

वेदसहश्रुत-अवायुदेवतानां द्वन्द्वे षोमे वरुणे च उत्तरपदे परे अग्नेः ईकारो भवति ।

अग्नीषोमौ । अग्नीवरुणौ । 'षोम' इति अत एव निर्देशात् अग्नेः ईकारे षकारः।

देवताद्वन्द्वे इति किम्? अग्निसोमौ माणवकौ ॥ ६६ ॥

### वृद्धिमति अविष्णौ इः। ६७।

वेदसहश्रुत-अवायुदेवतानां द्वन्द्वे विष्णुवर्जवृद्धिमति उत्तरपदे परे अग्नेः इकारो भवति।

आग्निवारुणीम् अनड्वाहीम् आलभेत। वृद्धिमति इति किम्? अग्नीवरुणौ। अविष्णौ इति किम्? अग्नावैष्णवं चरुं निर्वापयेत् ॥ ६७ ॥

### उषासा उषसः। ६८।

वेदसहश्रुत-अवायुदेवतानां द्वन्द्वे उत्तरपदे परे उषसः स्थाने उषासा इति आदेशो भवति।

उषाश्च सूर्यश्च उषासासूर्यम् ॥ ६८ ॥

### दिवः द्यावा। ६९।

वेदसहश्रुत-अवायुदेवतानां द्वन्द्वे उत्तरपदे परे दिवः स्थाने द्यावा इति आदेशो भवति।

द्यावाभूमी ॥ ६९ ॥

### दिवस्-दिवः पृथिव्याम् वा। ७०।

वेदसहश्रुत-अवायुदेवतानां द्वन्द्वे उत्तरपदे परे दिवः स्थाने दिवस् दिवः इति आदेशौ भवतः।

दिवस्पृथिव्यौ। दिवःपृथिव्यौ। द्यावापृथिव्यौ ॥ ७० ॥

### मातरपितरम्। ७१।

द्वन्द्वसमासे मातृपित्रोः पूर्वोत्तरपदयोः ऋतः अरो वा निपात्यते।

मातरपितरयोः, मातापित्रोः ॥ ७१ ॥

### दक् अर्थे अन्यस्य अषष्ठी-तृतीयस्य। ७२।

अषष्ठ्यन्तस्य अतृतीयान्तस्य च 'अन्य'शब्दस्य 'अर्थ'शब्दे उत्तरपदे परे दक् आगमः वा भवति।

अन्यस्मै इदम् अन्यदर्थम्, अन्यार्थम्। अन्यः अर्थः यस्य असौ अन्यदर्थः, अन्यार्थः। अषष्ठी-तृतीयस्य इति किम्? अन्यस्य अन्येन वा अर्थः अन्यार्थः ॥ ७२ ॥

### राग-उत्सुक-आस्थित-ऊति-आशा-आस्था-आशिषि। ७३।

‘ वा ’ इति निवृत्तम् । अषष्ठी-तृतीयान्तस्य अन्यशब्दस्य ‘ राग ’आदिषु उत्तर-पदेषु नित्यं दक् आगमो भवति ।

अन्यद्रागः । अन्यदुत्सुकः । अन्यदास्थितः । अन्यदूतिः । अन्यदाशा । अन्यदास्था । अन्यदाशीः । अषष्ठी-तृतीयस्य इति किम् ? अन्यस्य अन्येन वा रागः अन्यरागः ॥७३॥

## ईय-कारके । ७४ ।

योगविभागात् ‘ अषष्ठी-तृतीयस्य ’इति निवृत्तम् । अन्यशब्दस्य ईयप्रत्यये ‘ कारक ’शब्दे च परे दक् आगमो भवति ।

अन्यस्य इदम् अन्यदीयम् गहादिपाठात् ईयः । अन्यस्य कारकम् अन्यत्कारकम् ॥ ७४ ॥

## नञः अश् । ७५ ।

नञः उत्तरपदे परे ‘ अश् ’ आदेशो भवति ।

अहिंसा । अब्राह्मणः ॥ ७५ ॥

## तिवादौ क्षेपे । ७६ ।

तिवाद्यन्ते क्षेपे गम्यमाने नञः अश् भवति ।

अपचसि त्वं जाल्म ! । अकरोषि त्वं जाल्म ! । क्षेपे इति किम् ? न पचसि चैत्र ! । अनुत्तरपदार्थं वचनम् ॥ ७६ ॥

## अन् स्वरे । ७७ ।

स्वरादौ उत्तरपदे परे नञः अन् आदेशो भवति ।

अनजः । अनश्वः ॥ ७७ ॥

## ‘नख’आदयः । ७८ ।

एते यथादर्शनं निपात्यन्ते ।

नखः । नक्रः । नासत्यः । नमुचिः । नपुंसकम् । नाकः । नगः अप्राणिनि वा—नगः पर्वतः वृक्षः वा । पक्षे अगः । प्राणिनि तु नित्यमेव अश्—अगः वृषलः शीतेन । एकाद् अन—अदनौ विंशत्यादौ—एकेन न विंशतिः एकान्नविंशतिः, एकादनविंशतिः—एकाद् ऊना विंशतिः । ‘ नख ’आदयः प्रयोगगम्याः[1] ॥ ७८ ॥

---

[1] प्रयोगे गम्याः । पू० प० ।

## स्त्री-एकार्थे परतः स्त्री पुंवत् अनूङ् । ७९ ।

परतः विशेष्यवशात् स्त्रीलिङ्गः ऊङ्प्रत्ययान्तवर्जः स्त्रीलिङ्गे समानाधिकरणे उत्तरपदे परे पुंवद् भवति ।

दर्शनीयभार्यः । युवजानिः । स्त्री-एकार्थे इति किम् ? गृहिणीनेत्राः । परतः इति किम् ? द्रोणीभार्यः । अनूङ् इति किम् ? करभोरूभार्यः । कल्याणीपञ्चमा रात्रयः इत्यत्र अपि समासान्ते कृते 'पञ्चमी'शब्दस्य पुंभावे 'स्त्रीलिङ्गम् उत्तरपदं न' इति न पुंवद्भावः ॥ ७९ ॥

## क्यङ्-मानि-पित्तद्धिते । ८० ।

क्यङि प्रत्यये मानिउत्तरपदे पिति तद्धिते च परे परतः स्त्रीलिङ्गः अनूङ् पुंवद् भवति ।

श्येनी–श्येतायते । अयम् अस्या दर्शनीयमानी । अजायै हितम् अजथ्यम् ॥८०॥

## जातिश्च णि-तद्धितय-स्वरे । ८१ ।

परतः स्त्रीलिङ्गः अनूङ् जातिश्च णौ परे यादौ स्वरादौ च तद्धिते विषयभूते पुंवद् भवति ।

एनी–एतयति । पट्वी–पटयति । एन्यां साधुः एत्यः । हस्तिनीनां समूहः हास्तिकम् । जातिग्रहणम् जातिप्रतिषेधनिवृत्त्यर्थम् । तद्धितय-स्वरे इति किम् ? कठीरूप्यम् । कठीमयम् । पट्वीरूप्यम् । पट्वीमयम् । विषयसप्तमीविज्ञानं किम् ? पट्व्या भावः पाटवम् अत्र प्रत्ययोत्पत्तेः प्रागेव पुंभावे 'लघ्वादेः इकः' [ ] इति अण् भवति ॥ ८१ ॥

## एये अग्नायी । ८२ ।

'एय'प्रत्यये परे अग्नायी एव पुंवद् भवति ।

अग्नायी देवता अस्य आग्नेयः स्थालीपाकः । पूर्वेण एव सिद्धे एये नियमार्थं वचनम्, इह न भवति–श्येन्याः अपत्यम् श्यैनेयः ॥ ८२ ॥

## न तद्धितः स्वरवृद्धिहेतुः अरक्त-विकारे । ८३ ।

रक्त-विकाराभ्याम् अन्यस्मिन् अर्थे यः विहितः तद्धितः स्वरवृद्धिहेतुः तदन्तः परतः स्त्रीलिङ्गः पुंवत् न भवति ।

१ इति हेतोः ।

माधुरीभार्यः । माधुरीपाशा । तद्धितः इति किम् ? कुम्भकारभार्यः । स्वरग्रहणम् किम् ? वैयाकरणभार्यः । वृद्धिहेतुग्रहणम् किम् ? अर्धप्रस्थभार्यः । अरक्त-विकारे इति किम् ? काषायबृहतिकः । लौहेषः ॥ ८३ ॥

## वु-तद्धितकउपान्त्य-पूरण-आख्याः । ८४ ।

'वु'प्रत्ययस्य तद्धितस्य च यः ककारः तदुपान्त्यः पूरणप्रत्ययान्तः संज्ञाशब्दश्च परतः स्त्रीलिङ्गः पुंवत् न भवति ।

कारिकाभार्यः । मद्रिकाभार्यः । पञ्चमीभार्यः । दत्ताभार्यः । तद्धितग्रहणं किम् ? जल्पाकभार्यः ॥ ८४ ॥

## 'प्रिय'आदौ । ८५ ।

'प्रिय'आदौ उत्तरपदे परे परतः स्त्रीलिङ्गः पुंवत् न भवति ।

कल्याणीप्रियः । प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा सचिवा स्वा कान्ता समा चपला दुहिता वासना इति 'प्रिय'आदिः ॥ ८५ ॥

## स्वाङ्गात् ङीः जातिश्च अमानिनि । ८६ ।

स्वाङ्गात् परः यः ङीः तदन्तः जातिवाची च परतः स्त्रीलिङ्गः पुंवन्न भवति अमानिनि ।

दीर्घकेशीभार्यः । कटीपाशा । शूद्राभार्यः ।

"आकृतिग्रहणा जातिः अत्रिलिङ्गा च याऽन्विता ।
आजन्मनाशम् अर्थानाम्, सामान्यम् अपरे विदुः ॥" [ ]

इह पूर्वार्धलक्षणे कुमारीभार्यः । किशोरीभार्यः । उत्तरार्धलक्षणे[1] तु कुमारभार्यः । स्वाङ्गात् इति किम् ? पटुभार्यः । अमानिनि इति किम् ? दीर्घकेशमानिनी ॥ ८६ ॥

## पुंवत् कर्मधारये । ८७ ।

परतः स्त्रीलिङ्गः अनूङ् कर्मधारये स्त्र्येकार्थे उत्तरपदे परे पुंवत् भवति ।

माथुरवृन्दारिका । कल्याणप्रिया । अनूङ् इति ? ब्रह्मबन्धूवृन्दारिका ॥ ८७ ॥

## रिति । ८८ ।

परतः स्त्रीलिङ्गः अनूङ् रिति प्रत्यये परे पुंवत् भवति ।

पटुजातीया । कठदेशीया ॥ ८८ ॥

---

१ उत्तरार्धे लक्षणे पू० पा० ।

## गुणः त्व-तलोः । ८९ ।

परतः स्त्रीलिङ्गः गुणवचनः त्व-तलोः परयोः पुंवत् भवति ।

पट्व्याः भावः पटुत्वम्, पटुता । गुण इति किम्? कठीत्वम् । कठीता ॥८९॥

## सर्वादिः अस्यादौ । ९० ।

'सर्व'आदिः परतः स्त्रीलिङ्गः पुंवत् भवति न तु स्यादौ ।

सर्वस्त्रियः । सर्वप्रियः । भवत्पुत्रः । तस्यां वेलायां तदा । सर्वाः इच्छति सर्वकाम्यति । अस्यादौ इति किम्? सर्वस्यै ॥ ९० ॥

## ऋत्-उदितः तर-तम-रूप-कल्प-स्त्र्येकार्थब्रुव-गोत्र-मत-हत-चेलटि वा ह्रस्वः । ९१ ।

ऋदितः उदितश्च परतः स्त्रीलिङ्गस्य 'तर'आदिषु प्रत्ययेषु 'ब्रुव'आदिषु च स्त्र्येकार्थेषु उत्तरपदेषु ह्रस्वः पुंवद्भावश्च वा भवति ।

पचन्तितरा, पचत्तरा, पचन्तीतरा । पचन्तितमा, पचत्तमा, पचन्तीतमा । पचन्तिरूपा, पचद्रूपा, पचन्तीरूपा । पचन्तिकल्पा, पचत्कल्पा, पचन्तीकल्पा । पचन्तिब्रुवा, पचद्ब्रुवा, पचन्तीब्रुवा । पचन्तिगोत्रा, पचद्गोत्रा, पचन्तीगोत्रा । पचन्तिमता, पचन्मता, पचन्तीमता । पचन्तिहता, पचद्धता, पचन्तीहता । पचन्तिचेली, पचच्चेली । पचन्तीचेली । एवम्—श्रेयसितरा, श्रेयस्तरा, श्रेयसीतरा इत्यादि । 'चेलट्'इति टकारः ङ्यर्थः । 'ब्रुव'-इति अस्मादेव निपातनात् उव् ॥ ९१ ॥

## ङ्यः अनेकस्वरस्य । ९२ ।

अनेकस्वरस्य ङीप्रत्ययान्तस्य परतः स्त्रीलिङ्गस्य 'तर'आदिषु प्रत्ययेषु 'ब्रुव' आदिषु च उत्तरपदेषु स्त्र्येकार्थेषु परेषु नित्यं ह्रस्वादेशः भवति ।

गौरितरा । गौरितमा । गौरिरूपा । गौरिकल्पा । नर्तकिब्रुवा । ब्राह्मणिगोत्रा । गार्गिमता । गार्गिचेली । अनेकस्वरस्य इति किम्? ज्ञितरा, ज्ञीतरा ॥ ९२ ॥

## नित्यदितः वा । ९३ ।

नित्यदितः 'तर'आदिषु 'ब्रुव'आदिषु च उत्तरपदेषु स्त्र्येकार्थेषु ह्रस्वः वा भवति ।

स्त्रितरा, स्त्रीतरा । ह्रितमा, ह्रीतमा । लक्ष्मितमा, लक्ष्मीतमा । वामोरुचेली, वामोरूचेली । नित्यदितः इति किम्? कारिकारूपा । स्त्र्येकार्थे इति किम्? स्त्रिया हता

स्त्रीहता । व्यवस्थितविभाषाविज्ञानात् भोगवती-गौरीमतीशब्दयोः संज्ञारूपयोः नित्यम् भोगवतितरा । भोगवतिचेली । गौरिमतितमा । गौरिमतिचेली ॥ ९३ ॥

## 'आस्पद'आदयः 'प्रतिष्ठा'आदिषु । ९४ ।

'प्रतिष्ठा'आदिषु अर्थेषु 'आस्पद'आदयः शब्दाः साधवः वेदितव्याः ।

आस्पदं प्रतिष्ठा । आश्चर्यम् अद्भुतम् । अवस्करः वर्चस्कम्—अन्नमलम्, तत्संबन्धात् तद्देशः अवस्करः । अपस्करः रथाङ्गम् । अपरस्पराः क्रियासातत्ये । प्रतिष्कशः वार्तापुरुषः सहायः पुरोयायी प्रतिमन्ता वा । मा क्रियते प्रतिषिध्यते अनेन इति मस्करः वेणुदण्डः, मा करणशीलः मस्करी परिव्राजकः । किष्किन्धा पर्वतगुहा । हरिश्चन्द्रः राजा ॥ ९४ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ नाम्नि नवमः पादः समाप्तः ॥

*

## आख्याते प्रथमः पादः

जिनेश्वराय नमः ।

### क्रियार्थः धातुः । १ ।

कृतिः क्रिया पूर्वापरीभूतावयवा, तदर्थः शब्दः धातुसंज्ञः भवति । भू—भवति । एधि—एधते । गोपायति । पापच्यते । अन्वय-व्यतिरेकाभ्यां क्रियार्थत्वाऽऽगमः । धातु-प्रदेशाः 'धातुः' [ आख्याते तृतीयपादे सू० २७ ] इत्येवमादयः ॥ १ ॥

### प्रादिः न अप्रत्ययः । २ ।

प्रादिः स्वराद्यन्तर्गगः स प्रत्ययान्तवर्जितः धातोः न अवयवः—धातुसंज्ञः न भवति, तं व्युदस्य ततः पर एव धातुः इत्यर्थः ।

अभ्यमनायत । प्रासादीयत् । अप्रत्यय इति किम् ? औत्सुकायत । 'असंग्राम-यत शूरः' इति, न अयं 'सम्' प्रादेः किन्तु धात्ववयवः यथा 'विच्छ'आदिअवयवः विः ॥ २ ॥

### अमौ दा-धौ दा । ३ ।

दारूपः धारूपश्च धातुः अमकारानुबन्धः दासंज्ञः भवति ।

दाण्—प्रणिदाता । देङ्-प्रणिदयते । डुदाञ्—प्रणिददाति । दो-प्रणिद्यति । धेट्—प्रणिधयति । डुधाञ् प्रणिदधाति । दा-धारूपोपलक्षितस्य दासंज्ञाविधानात् दो-देङ्-धेटां शिति अपि दासंज्ञा सिद्धा । दीङः 'दा'रूपस्य बहिरङ्गत्वात् न भवति—उपादास्त । अमौ इति किम् ? दाम्—दातं बर्हिः । देम्—अव दातं मुखम् । 'दा'प्रदेशाः—'दा-स्थोः' [ आख्याते पाद ६ सू० ४४ ] इत्येवमादयः ॥ ३ ॥

### वर्तमाना । ४ ।

तिप् तस् अन्ति । सिप् थस् थ । मिप् वस् मस् । ते आते अन्ते । से आथे ध्वे । ए वहे महे । इमानि वचनानि वर्तमानसंज्ञानि भवन्ति ॥ ४ ॥

### सप्तमी । ५ ।

यात् याताम् युस् । यास् यातं यात । याम् याव याम । ईत ईयाताम् ईरन् । ईथास् ईयाथाम् ईध्वम् । ईय ईवहि ईमहि । इमानि वचनानि सप्तमीसंज्ञानि भवन्ति ॥५॥

---

१ आगमः—अवगम—ज्ञानम् । २ 'स्वर्' इति स्वर्गवाचकम् अव्ययम् तदादिः 'च'आदिके मुख्यगणे अन्तर्गणः ।

## पञ्चमी । ६ ।

तुप् ताम् अन्तु । हि तं त । आनिप् आवप् आमप् । ताम् आताम् अन्ताम् । स्व आथाम् ध्वम् । ऐप् आवहैप् आमहैप् । इमानि वचनानि पञ्चमीसंज्ञानि भवन्ति ॥६॥

## ह्यस्तनी । ७ ।

दिप् ताम् अन् । सिप् तम् त । अम् व म । त आताम् अन्त । थास् आथाम् ध्वम् । इ वहि महि । इमानि वचनानि ह्यस्तनीसंज्ञानि भवन्ति ॥ ७ ॥

## एताः शितः । ८ ।

एताः ' वर्तमाना 'आद्याः शितः वेदितव्याः ॥ ८ ॥

## अद्यतनी । ९ ।

दि ताम् अन् । सि तं त । अम् व म । त आताम् अन्त । थास् आथाम् ध्वम् । इ वहि महि । इमानि वचनानि अद्यतनीसंज्ञानि भवन्ति ॥ ९ ॥

## परोक्षा । १० ।

णप् अतुम् उम् । थप् अथुम् अ । णप् व म । ए आते इरे । से आथे ध्वे । ए वहे महे । इमानि वचनानि परोक्षासंज्ञानि भवन्ति ॥ १० ॥

## आशीः । ११ ।

यात् यास्ताम् यासुस् । यास् यास्तम् यास्त । यासम् यास्व यास्म । सीष्ट सीयास्ताम् सीरन् । सीष्टास् सीयास्थाम् सीध्वम् । सीय सीवहि सीमहि । इमानि वचनानि आशीःसंज्ञानि भवन्ति ॥ ११ ॥

## श्वस्तनी । १२ ।

ता तारौ तारस् । तासि तास्थस् तास्थ । तास्मि तास्वम् तास्मस् । ता तारौ तारस् । तासे तासाथे ताध्वे । ताहे तास्वहे तास्महे । इमानि वचनानि श्वस्तनीसंज्ञानि भवन्ति ॥ १२ ॥

## भविष्यन्ती । १३ ।

स्यति स्यतस् स्यन्ति । स्यसि स्यथस् स्यथ । स्यामि स्यावस् स्यामस् । स्यते स्येते स्यन्ते । स्यसे स्येथे स्यध्वे । स्ये स्यावहे स्यामहे । इमानि वचनानि भविष्यन्तीसंज्ञानि भवन्ति ॥ १३ ॥

## क्रियातिपत्तिः । १४ ।

स्यत् स्यताम् स्यन् । स्यम् स्यतम् स्यत । स्यम् स्याव स्याम । स्यत स्येताम् स्यन्त । स्यथास् स्येथाम् स्यध्वम् । स्ये स्यावहि स्यामहि । इमानि वचनानि क्रियातिपत्तिसंज्ञानि भवन्ति ॥ १४ ॥

## त्रीणि त्रीणि अन्य-युष्मद्-अस्मदि । १५ ।

'वर्तमाना'आदीनाम् 'तिप्'आदीनि त्रीणि त्रीणि वचनानि यथासंख्यम् अन्यस्मिन् युष्मदि अस्मदि च विषये भवन्ति ।

स पचति तौ पचतः ते पचन्ति । त्वं पचसि युवां पचथः यूयं पचथ । अहं पचामि आवां पचावः वयं पचामः । स पचते तौ पचेते ते पचन्ते । त्वं पचसे युवां पचेथे यूयं पचध्वे । अहं पचे आवां पचावहे वयं पचामहे । एवम् 'सप्तमी'आदीनाम् अपि । युगपत् अनेकप्रसङ्गे पराश्रयमेव वचनम्—स च त्वं च पचथः । त्वं च अहं च पचावः । 'एहि मन्ये रथेन यास्यति यातः ते पिता' इति प्रहासेऽपि यथाप्राप्तमेव वचनम् । 'रथेन यास्यसि' इति काक्वा अभिधानात् प्रहासगतिः ॥ १५ ॥

## एक-द्वि-बहुषु । १६ ।

'अन्य'आदिषु त्रीणि त्रीणि वचनानि यथासंख्यम् एक-द्वि-बहुषु अर्थेषु भवन्ति ।

स पचति तौ पचतः ते पचन्ति । इत्यादि ॥ १६ ॥

## नव नव आद्यानि शतृ-क्वसू च परस्मैपदम् । १७ ।

'वर्तमाना'आदीनाम आद्यानि नव नव वचनानि शतृ-क्वसू च परस्मैपदसंज्ञानि भवन्ति । परस्मैपदप्रदेशाः 'शेषात् परस्मै' [आख्याते द्वितीयपादे सू० ७०] इत्येवमादयः ॥ १७ ॥

## पराणि कान-आनशौ च आत्मनेपदम् । १८ ।

'वर्तमाना'आदीनाम् पराणि नव नव वचनानि कान-आनशौ च आत्मनेपदसंज्ञानि भवन्ति । आत्मनेपदप्रदेशाः 'आत्मने' [आख्याते द्वितीयपादे सू० २] इत्येवमादयः ॥ १८ ॥

## माङि शापे शतृ-आनशौ । १९ ।

माङि उपपदे धातोः परौ शतृ-आनशौ भवतः शापे गम्यमाने ।

मा पचन् । मा पचमानः ॥ १९ ॥

## सति वा अन्तितौ । २० ।

वर्तमाने अर्थे वर्तमानात् धातोः शतृ-आनशौ वा भवतः 'इति' शब्दप्रयोगाभावे।

पचन् । शयानः । पक्षे पचति । शेते । हे पचन् ! । हे पचमान ! । 'तिष्ठन् मूत्रयति' 'शयाना वर्धते दुर्वा' इत्यादौ 'तिप्'आदिना सह अन्वययोगात् धातोः परौ शतृ-आनशौ स्स्यौ वा भवतः इतिशब्दप्रयोगाभावे । यास्यन् । शयिष्यमाणः । पक्षे यास्यति । शयिष्यते । अन्तितौ इति किम् ? करिष्यति इति व्रजति ॥ २० ॥

## क्वसु-कानौ परोक्षावत् । २१ ।

धातोः परौ क्वसु-कानौ वा भवतः तौ च परोक्षावत् । कार्यार्थातिदेशः अयम् तेन द्वित्वादिकम् कालविशेषश्च सिद्धः ।

पेचिवान् । पेचानः । पक्षे पपाच । पेचे ॥ २१ ॥

## श्रु-सद्-वस्-इणः कर्तरि भूते । २२ ।

एभ्यः भूतमात्रे काले कर्तरि परोक्षावत् क्वसु-कानौ वा भवतः ।

शुश्रुवान् । उपसेदिवान् । ऊषिवान् । ईयिवान् । अत्र परत्वात् इटि कृते द्विर्वचनम्, परस्मैपदित्वात् एभ्यः न कानसंभवः । पक्षे अश्रौषीत् । उपासदत् । अवात्सीत् । अगात् ॥ २२ ॥

## अनूचान-अनाश्वत् । २३ ।

एतौ भूते काले कान-क्वसुअन्तौ कर्तरि वा निपात्येते ।

अनूचानः । अनाश्वान् । पक्षे अन्ववोचत् । नाऽऽशीत् ॥ २३ ॥

## गुरुनामिआदेः अनृच्छ-ऊर्णोः आम् परोक्षायाम् भू-कृञ्-अस्ति वा अनु तदन्तम् । २४ ।

ऋच्छ-ऊर्णुवर्जात् गुरुनामिआदेः धातोः परोक्षायां विषये आम् प्रत्ययो भवति तदनन्तरं च भू-कृञ्-अस्तयः परोक्षान्ताः प्रयुज्यन्ते ।

ईहांबभूव । ईहांचक्रे । ईहामास । उञ्छांबभूव । उञ्छांचकार । उञ्छामास । अनुग्रहणम् अव्यवधानार्थम् तेन 'ईहां चैत्रश्चक्रे' इत्यादि न भवति ॥ २४ ॥

## अनेकस्वरात् । २५ ।

अनेकस्वरात् धातोः परोक्षायां विषये आम् प्रत्ययः भवति, भू-कृञ्-अस्ति च अनु परोक्षान्ताः प्रयुज्यन्ते ।

---

१ भविष्यत्कालसूचक'स्य'सहितौ ।

चकासांबभूव । चकासांचकार । चकासामास । अनेकस्वरात् इति किम् ? पपाच ॥ २५ ॥

## दय-अय-आस्-कासः । २६ ।

एभ्यः परः परोक्षायां विषये आम् प्रत्ययः भवति, भू-कृञ्-अस्ति च अनु परोक्षान्ताः प्रयुज्यन्ते ।

दयांबभूव, दयांचक्रे, दयामास । पलायांबभूव, पलायांचक्रे, पलायामास । आसांबभूव, आसांचक्रे, आसामास । कासांबभूव, कासांचक्रे, कासामास ॥ २६ ॥

## समिन्ध-जागृ-उषः वा । २७ ।

एभ्यः परः परोक्षायां विषये आम् प्रत्ययो भवति, भू-कृञ्-अस्ति च अनु तदन्तम् ।

समिधांबभूव, समिधांचक्रे, समिधामास, समीधे । जागरांबभूव, जागरांचकार, जागरामास, जजागार । उषांबभूव, उषांचक्रे, उषामास, उवोष ॥ २७ ॥

## भी-ह्री-भृ-ह्वोः शिद्वत् । २८ ।

एभ्यः परः परोक्षायां विषये आम् प्रत्ययो भवति वा, स च शिद्वत्, भू-कृञ्-अस्ति च अनु परोक्षान्तं प्रयोज्यम् ।

बिभयांबभूव, बिभयांचकार, बिभयामास, बिभाय । जिह्रयांबभूव, जिह्रयांचकार, जिह्रयामास, जिह्राय । बिभरांबभूव, बिभराचकार, बिभरामास, बभार । जुहवांचकार, जुहवांबभूव, जुहवामास, जुहाव ॥ २८ ॥

## विदात् कित् । २९ ।

वेत्तेः परः परोक्षायां विषये आम् प्रत्ययो वा भवति, स च कित्, भू-कृञ्-अस्ति च अनु परोक्षान्तं प्रयुज्यते ।

विदांबभूव, विदांचकार, विदामास, विवेद ॥ २९ ॥

## पञ्चम्यां कृञ् पञ्चमी । ३० ।

वेत्तेः परः पञ्चमीविषये आम् प्रत्ययो वा भवति स च कित्, कृञ् च अनु पञ्चम्यन्तः प्रयुज्यते ।

विदांकरोतु, वेत्तु ॥ ३० ॥

## शतुः क्वसुः । ३१ ।

वेत्तेः परस्य शतुः क्वसुः आदेशो भवति ।

विद्वान्, विदन् तत्त्वम् ॥ ३१ ॥

## तिपाम् णपः परस्मै । ३२ ।

विदेः परेषां परस्मैपदानां 'तिप्'आदीनां स्थाने यथासंख्यं 'णप्'आदयः परस्मैपदानि भवन्ति ।

वेद विदतुः विदुः । वेत्थ विदथुः विद । वेद विद्व विद्म । पक्षे—वेत्ति वित्तः विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः ॥ ३२ ॥

## ब्रुवः पञ्चानाम् पञ्च आहश्च । ३३ ।

ब्रुवः परेषां 'तिप्'आदीनां पञ्चानां स्थाने यथासंख्यं 'णप्'आदयः पञ्च आदेशा वा भवन्ति, ब्रुवश्च 'आह्'आदेशः ।

आह आहतुः आहुः । आत्थ आहथुः । पक्षे—ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि ब्रूथः ॥ ३३ ॥

## आशिषि तु-ह्योः तातङ् । ३४ ।

आशिषि विहितयोः तु-ह्योः तातङ् आदेशो वा भवति ।

जीवतात्, जीवतु, जीव त्वम् ॥ ३४ ॥

## वेत्तेः आत्मने अन्तः रत् । ३५ ।

वेत्तेः परस्य आत्मनेपदस्य संबन्धिनः 'अन्त्' इति अवयवस्य 'रत्' इति आदेशो वा भवति ।

संविद्रते संविदते । आत्मने इति किम्? विदन्ति ॥ ३५ ॥

## शीङः । ३६ ।

'वा' इति निवृत्तम् पृथग्वचनात् । शीङः परस्य आत्मनेपदस्थस्य अन्तः 'रत्' इति आदेशो भवति ।

शेरते । अशेरत ॥ ३६ ॥

## अनतः अत् । ३७ ।

अनकारात् परस्य आत्मनेपदस्य संबन्धिनः अन्तः 'अत्'इति आदेशो भवति ।

चिन्वते । अचिन्वत । अनतः इति किम्? च्यवन्ते ॥ ३७ ॥

## आतः णपः औ । ३८ ।

आतः[1] परस्य णपः स्थाने औः आदेशो भवति ।

---

१ आकारात् ।

पपौ । आतः इति किम्? जगाम ॥ ३८ ॥

आत् इश् आताम्-आते-आथाम्-आथेः । ३९ ।

अकारात् परेषाम् एषाम् आतः इश् आदेशो भवति ।

पचेताम् पचेते । पचेथाम् पचेथे । आत् इति किम्? मिमाताम् । शकारः सर्वादेशार्थम्, उत्तरार्थः ॥ ३९ ॥

यः सप्तम्याः । ४० ।

अकारात् परस्य सप्तम्याः 'या 'शब्दस्य इश् आदेशो भवति ।

पचेत् पचेताम् । पचेः ॥ ४० ॥

याम्-युसोः इयम्-इयुसौ । ४१ ।

अकारात् परयोः याम्-युसोः यथासंख्यम् इयम् इयुम् इति आदेशौ भवतः ।

पचेयम् । पचेयुः ॥ ४१ ॥

अभुवः सिचः अनः पुस् । ४२ ।

सिचः प्रत्ययात् परस्य अनः स्थाने पुस् आदेशो भवति, न चेत् स सिच् भुवः परो भवति ।

अकार्षुः । अभुवः इति किम्? अभूवन् ॥ ४२ ॥

विदेः ह्यस्तन्याः । ४३ ।

विदेः परस्य ह्यस्तन्याः अनः पुस् आदेशो भवति ।

अविदुः ॥ ४३ ॥

द्व्युक्ति-जक्षपञ्चतः । ४४ ।

द्विरुक्तात् जक्षादिपञ्चकात् च परस्य ह्यस्तन्याः अनः पुस् आदेशो भवति ।

अबिभयुः । अजक्षुः । अचकासुः ॥ ४४ ॥

वा द्विष्-आतः । ४५ ।

द्विषः आदन्तात् च परस्या ह्यस्तन्याः अनः पुस् आदेशो वा भवति ।

अद्विषुः अद्विषन् । अयुः अयान् । 'अजानन्' इत्यत्र व्यवधानात् न भवति ॥४५॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते प्रथमः पादः समाप्तः ॥

*

## आख्याते द्वितीयः पादः

**साप्य-अनाप्यात् कर्म-भावे कृत्य-क्त-खलर्थाः । १ ।**

सकर्मकात् धातोः कर्मणि अकर्मकात् च भावे कृत्य-क्त-खलर्थाः प्रत्यया भवन्ति ।

कार्यः कटः । शयितव्यं भवता । कृत्यं भवता । कृतः कटः । शयितं चैत्रेण । सुकरः कटः । सुग्लानं दीनेन ॥ १ ॥

**आत्मने । २ ।**

सकर्मकात् कर्मणि अकर्मकात् च भावे धातोः आत्मनेपदं भवति ।

क्रियते कटः चैत्रेण । भूयते त्वया ॥ २ ॥

**इ-ङितः कर्तरि । ३ ।**

इदितः ङितश्च धातोः कर्तरि आत्मनेपदं भवति ।

एधि–एधते । शीङ्–शेते ॥ ३ ॥

**अगति-हिंसा-शब्दार्थ-हसः क्रियाव्यतिहारे हृ-वहश्च अनन्योन्यार्थे ।४।**

अन्यचिकीर्षितायाः क्रियायाः अन्येन तत्क्रियायाश्च तेन हरणं क्रियाव्यतिहारः । तदर्थात् गति-हिंसार्थ-शब्दार्थ-हसवर्जात् धातोः हृ-वहिभ्यां च कर्तरि आत्मनेपदं भवति, न तु अन्योन्यार्थशब्दप्रयोगे ।

व्यतिलुनते । व्यतिपुनते । व्यतिहरन्ते । व्यतिवहन्ते । अगति-हिंसा-शब्दार्थ-हसः इति किम्? व्यतिगच्छन्ति । व्यतियान्ति । व्यतिघ्नन्ति । व्यतिहिंसन्ति । व्यतिजल्पन्ति। व्यतिगदन्ति । व्यतिहसन्ति । क्रिया° इति किम्? द्रव्यव्यतिहारे मा भूत् । °व्यतिहारे इति किम्? लुनन्ति । अनन्योन्यार्थे इति किम्? अन्योन्यस्य व्यतिलुनन्ति । क्रियाव्यतिहारः व्यतिना एव द्योतितः इति 'अन्योन्य'आदिभिः तत्कर्म अभिसंबध्यते– अन्योन्यस्य केदारम् ॥ ४ ॥

**शीय-अपस्कृ-संक्ष्णु-निविशः । ५ ।**

एभ्यः कर्तरि आत्मनेपदं भवति ।

शीयते । अपस्किरते । संक्ष्णुते । निविशते ॥ ५ ॥

**नाथ-शिक्ष-शपि-भुजात् आशीर्-जिज्ञासा-उपलम्भन-अत्राणे । ६ ।**

एभ्यः यथासंख्यम् 'आशीर्'आदिषु अर्थेषु कर्तरि आत्मनेपदं भवति ।

सर्पिषः नाथते—सर्पिः मे भूयात् इति आशास्ते इत्यर्थः । आशिषः अन्यत्र न भवति—मधु नाथति—याचते इत्यर्थः । अस्य ङित्वम् 'अन'अर्थम् । 'शिक्ष' इति शकेः सन्नन्तस्य ग्रहणम्, 'शिक्षि विद्योपादाने' इत्यस्य तु ङित्वेनैव सिद्धम् । विद्याः शिक्षते—जिज्ञासितुम् आत्मनः शक्तुम् इच्छति इत्यर्थः । स्वाभिप्रायस्य परत्र आविष्करणम् उपलम्भनम्—शपथ इति यावत् । चैत्राय शपते—वाचा 'मातृ'आदिशरीरसंस्पर्शनेन चैत्रस्य स्वम् अभिप्रायम् आविष्करोति इत्यर्थः । उपलम्भनात् अन्यत्र न भवति—चैत्रं शपति—आक्रोशति इत्यर्थः । भुङ्क्ते । उपभुङ्क्ते । त्राणे तु न भवति—पृथ्वीं भुनक्ति । स[2]आकारपाठनिर्देशात् 'भुज् कौटिल्ये' इत्यस्य न भवति—पाणिं निर्भुजति ॥ ६ ॥

### वा उपसर्गात् अस्य-ऊहः । ७ ।

उपसर्गात् पराभ्याम् अस्यति-ऊहिभ्यां कर्तरि आत्मनेपदं वा भवति ।

विपर्यस्यति, विपर्यस्यते । समूहति, समूहते । उपसर्गात् इति किम्? अस्यति । ऊहते ॥ ७ ॥

### उत्-स्वरात् अयज्ञे तत्पात्रे युजः । ८ ।

उदः स्वरान्तात् च उपसर्गात् परात् युनक्तेः कर्तरि आत्मनेपदं भवति न चेत् युज्यर्थः यज्ञे तत्पात्रविषयः स्यात् ।

उद्युङ्क्ते । वियुङ्क्ते । उत्-स्वरात् इति किम्? संयुनक्ति । अयज्ञे तत्पात्रे इति किम्? द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । 'तत्पात्रे'ग्रहणम् किम्? [3]ऐन्धनपात्राणि यज्ञे प्रयुङ्क्ते ॥८॥

### परा-वेः जेः । ९ ।

परा-विभ्याम् उपसर्गाभ्यां परात् जयतेः कर्तरि आत्मनेपदं भवति ।

पराजयते । विजयते । [4]बहुवि जयति वनम् इत्यत्र अनुपसर्गत्वात् अप्रयोगाच्च न भवति ॥ ९ ॥

### कर्मणा उदः चरेः । १० ।

'उत्'पूर्वात् चरेः कर्मणा योगे सति कर्तरि आत्मनेपदं भवति ।

ग्रामम् उच्चरते—भक्षयति इत्यर्थः । कर्मणा इति किम्? धूप उच्चरति—उद्गच्छति इत्यर्थः । उदः इति किम्? चारिं चरति ॥ १० ॥

---

१ 'नाथृङ्' इति धातोः । २ आकारसहितपाठनिर्देशात् । ३ अत्र यज्ञीयमात्राभावेन भवत्येव आत्मनेपदम् । "यत्र तु यज्ञ एव न तु तत्पात्रम्, तत्पात्रमेव न तु यज्ञः तत्र भवत्येव" इति ३।३।२६। सूत्रे हैमं वचनम् । ४ विः पक्षी—बहुवि बहुपक्षिकम् इति भावः ।

## समः तृतीयया । ११ ।

'सम्'पूर्वात् चरेः तृतीयान्तेन युक्तात् कर्तरि आत्मनेपदं भवति ।

अश्वेन संचरते । तृतीयया इति किम्? "उभौ लोकौ संचरति इमं चामुं च देवेल !" [ ] ॥ ११ ॥

## क्रीडः अकूजे । १२ ।

कूजः अव्यक्तशब्दनम् ततः अन्यत्र वर्तमानात् 'सम्'पूर्वात् क्रीडतेः कर्तरि आत्मनेपदं भवति ।

संक्रीडते । अकूजे इति किम्? संक्रीडन्ति शकटानि । समः इति किम्? क्रीडन्ति ॥ १२ ॥

## परि-वि-अवात् क्रियः । १३ ।

एभ्यः परात् क्रीणातेः कर्तरि आत्मनेपदं भवति ।

परिक्रीणीते । विक्रीणीते । अवक्रीणीते । 'क्रियः' इति—अत एव निर्देशात् "प्रकृतिवत् अनुकरणं भवति" [ न्यायसंग्रहे न्याय ६ पृ० ८ ] इति विज्ञायते । तेन 'मुनी इत्याह' इत्यादि सिद्धम् । 'परा-वेः जेः' [ सू० ९ ] इत्यादौ वर्णमात्रस्य अनुकरणम् न साभिधेयस्य ॥ १३ ॥

## हृञः गतताच्छील्ये । १४ ।

गमनताच्छील्ये गम्यमाने हृञः कर्तरि आत्मनेपदं भवति ।

पैतृकम् अश्वा अनुहरन्ते—पितृवत् गमनम् एतेषां स्वभावतः इत्यर्थः ॥ १४ ॥

## क्यषः वा । १५ ।

'क्यष्'अन्तात् कर्तरि आत्मनेपदं वा भवति ।

---

१ इदं पद्यार्धम् सिद्धहेमबृहद्वृत्तौ ३।३।३२। सूत्रस्य उदाहरणे वर्तते, तत्र 'संचरसि' इति पाठः । यद्यपि अत्र 'विद्यया' 'तपसा' वा इति तृतीयान्तं गम्यते परं तु यत्र साक्षात् तृतीयान्तं तत्रैव इदं विधीयते अन्यथा कर्त्रा सह करणम् अवश्यमेव स्यात् ततः 'तृतीयया' इति व्यर्था व्यावृत्तिः । २ अत्र सूत्रे 'क्रियः' इति पदम् स्याद्यन्तम्, 'क्री'धातोः धातुत्वेन नामसंज्ञाया अभावे कथं स्यादिविभक्तिसंभवः? अत्र समाधानम्—प्रकृतिवत् अनुकरणम् । प्रकृति-सादृश्येन न धातुत्वम् किन्तु प्रकृत्यर्थसूचकत्वेन नामत्वम् तेन स्यादिविधानं सुसंगतम् । तेनैव न्यायेन अत्र 'मुनी' इति पदं द्विवचनान्त'मुनी'पदस्य अनुकरणम् ततश्च "प्रकृतिवत् अनुकरणम्" इति न्यायेन द्विवचनत्वेन संधेरभावः ।

निद्रायति, निद्रायते ॥ १५ ॥

## ‘वृत्’आदेः स्य-सनि । १६ ।

‘वृत्’आदेः स्यादौ प्रत्यये सनि च विषये कर्तरि आत्मनेपदं भवति वा ।

वर्त्स्यति, वर्तिष्यते । विवृत्सति, विवर्तिषते । वृत् वृध् स्यन्द् शृध् कृप् इति ‘वृत्’आदिः ॥ १६ ॥

## श्वस्तन्यां कृपः । १७ ।

कृपः कर्तरि श्वस्तन्याम् आत्मनेपदं वा भवति ।

कल्प्तासि कल्प्तासे ॥ १७ ॥

## ‘द्युत्’आदेः अद्यतन्याम् । १८ ।

‘द्युत्’आदेः कर्तरि अद्यतन्याम् आत्मनेपदं वा भवति ।

व्यद्युतत्, व्यद्योतिष्ट । अकृपत्, अकल्पिष्ट । भ्वाद्यन्तर्गणः द्युतादिः ॥ १८ ॥

## शित्-आशिषोश्च मृञः । १९ ।

मृञः परं कर्तरि शितः आशिषः अद्यतन्याश्च आत्मनेपदं भवति ।

म्रियते । म्रियेत । म्रियताम् । अम्रियत । मृषीष्ट । अमृत । शित्-आशिषोश्च इति किम् ? ममार ॥ १९ ॥

## ज्ञान-व्यय-विगणन-उत्सञ्जन-सम्मान-आचार्यक-भृतौ नियः । २० ।

ज्ञान-व्यय-विगणन-उत्सञ्जनेषु अर्थेषु सम्मान-आचार्यक-भृतिषु अर्थविशेषणेषु नियः कर्तरि आत्मनेपदं भवति ।

ज्ञानम् प्रमेयनिश्चयः—नयते विद्वान् स्याद्वादे—तत्र प्रमेयं निश्चिनोति इत्यर्थः । धर्मादिषु विनियोगः व्ययः—शतं विनयते—धर्मार्थं विनियुङ्क्ते इत्यर्थः । विगणनम् ऋणादेः निर्यातनम्—मद्राः कारं[1] विनयन्ते—निर्यातयन्ति इत्यर्थः । ऊर्ध्वं सञ्जनम् उत्सञ्जनम्—उत्क्षेपणम्—माणवकम् उदानयते[2]—उत्क्षिपति—उत्सञ्जति इत्यर्थः । सम्मानः पूजनम्—नयते विद्वान् स्याद्वादे—प्रमाणमार्गवेदी जीवा-ऽजीवादीन् पदार्थान् युक्तिभिः स्थिरीकृत्य सम्मानवति—शिष्यबुद्धिं प्रापयति इत्यर्थः । आचार्यकम् आचार्यकर्म—माणवकम् उपनयते—शिष्यं कृत्वा आत्मसमीपे करोति इत्यर्थः । भृतौ—कर्मकरान् उपनयते । ‘ज्ञान’आदिषु

---

१ कारं राजदेयभागम् । २ गुर्जरभाषायाम् उछाळे छे-उदानयते, हिन्दीभाषायाम् उछाता है । मूलधातु-उछाळ (गु०) उछाल (हि०)

इति किम्? अजां नयति ग्रामम् ॥ २० ॥

## कर्तृस्थ-अमूर्ताप्यात् । २१ ।

कर्तृस्थ-अमूर्तकर्मकात् नियः कर्तरि आत्मनेपदं भवति ।

धर्मं विनयते । कर्तृस्थ° इति किम्? चैत्रः मैत्रस्य मन्युं विनयति । °अमूर्त° इति किम्? गडुं विनयति । °आप्य° इति किम्? बुद्ध्या विनयति ॥ २१ ॥

## सम्-प्रतेः ज्ञः अस्मृतौ । २२ ।

सम्-प्रतिभ्यां परात् जानातेः कर्तरि आत्मनेपदं भवति ।

शतं संजानीते, प्रतिजानीते । अस्मृतौ इति किम्? मातरं संजानाति—स्मरति इत्यर्थः ॥ २२ ॥

## निह्नवे । २३ ।

निह्नवे वर्तमानात् जानातेः कर्तरि आत्मनेपदं भवति ।

शतम् अपजानीते—अपलपति इत्यर्थः ॥ २३ ॥

## सनः अननोः । २४ ।

अन्'अनु'पूर्वात् जानातेः सन्नन्तात् कर्तरि आत्मनेपदं भवति ।

धर्मं जिज्ञासते । अन्'अनोः' इति किम्? धर्मम् अनुजिज्ञासति ॥ २४ ॥

## श्रुवः अप्रति-आङः । २५ ।

शृणोतेः सन्नन्तात् कर्तरि आत्मनेपदं भवति, न तु प्रति-आङ्पूर्वात् ।

शुश्रूषते । अप्रति-आङः इति किम्? प्रतिशुश्रूषति । 'मित्रं प्रति शुश्रूषते' इत्यत्र योगाभावात् न भवति प्रतिषेधः[१] ॥ २५ ॥

## स्मृ-दृशः । २६ ।

आभ्यां सन्नन्ताभ्यां कर्तरि आत्मनेपदं भवति ।

सुस्मूर्षते । दिदृक्षते ॥ २६ ॥

## प्राग्वत् । २७ ।

सनः प्राग् यो धातुः तस्मात् इव सन्नन्तात् कर्तरि आत्मनेपदं भवति ।

एदिधिषते । समूहिहिषते ॥ २७ ॥

---

१ अत्र 'प्रति' इत्यस्य 'शुश्रूषते' इत्यनेन योगाभावः संबन्धाभावः ।

## आमः कृञः । २८ ।

आमः परात् अनुप्रयुक्तात् कृञः आम एव प्राग् यः धातुः तस्मादिव कर्तरि आत्मनेपदं भवति ।

ईहांचक्रे । समूहांचक्रे, समूहांचकार । कृञः इति किम् ? भू-अस्तिभ्यां न भवति–ईक्षांबभूव । ईक्षामास ॥ २८ ॥

## सेवा-साहस-गन्धन-अवक्षेप-प्रतियत्न-प्रकथा-व्यये । २९ ।

एषु अर्थेषु वर्तमानात् कृञः कर्तरि आत्मनेपदं भवति ।

महामात्रान् उपकुरुते–सेवते इत्यर्थः । साहसम् अविमृश्य प्रवृत्तिः–परदारान् उपकुरुते–सहसा तेषु प्रवर्तते इत्यर्थः । गन्धनम् द्रोहेण परदोषोद्घट्टनम् तत्र-परान् उपकुरुते । अवक्षेपः निर्भर्त्सनम् कुत्सनं वा–दुर्वृत्तान् अवकुरुते–निर्भर्त्सयति, कुत्सयते वा इत्यर्थः । सतः गुणाधानाय अपायपरिहाराय वा पुनर् यत्नः प्रतियत्नः–एधोदकस्य उपस्कुरुते । प्रकथा–जनापवादान् प्रकुरुते–प्रकर्षेण कथयति इत्यर्थः, कथयितुं वा प्रारभते इत्यर्थः । व्यये–शतं प्रकुरुते–धर्मार्थं विनियुङ्क्ते इत्यर्थः ॥ २९ ॥

## प्रसहने अधेः । ३० ।

अधेः परात् प्रसहनार्थात् कृञः कर्तरि आत्मनेपदं भवति । प्रसहनम्–पराभिभवः परेण अपराजयः वा—

तं हा अधिचक्रे–तम् अभिबभूव, तेन वा न पराजितः इत्यर्थः । प्रसहने इति किम् ? अधिकरोति ॥ ३० ॥

## वा अनुपसर्गात् क्रमः । ३१ ।

अनुपसर्गात् क्रमतेः कर्तरि आत्मनेपदं वा भवति ।

क्रमते, क्रामति । अनुपसर्गात् इति किम् ? संक्रामति ॥ ३१ ॥

## वृत्ति-सर्ग-तायने । ३२ ।

वृत्तिः आत्मयापनम् अप्रतिबन्धो वा । सर्गः तात्पर्यम् उत्साहो वा । तायनम् संतानः पालनम् स्फीतता वा । एतेषु अर्थेषु वर्तमानात् अनुपसर्गात् क्रमेः कर्तरि आत्मनेपदं भवति ।

शास्त्रे क्रमते बुद्धिः–आत्मानं यापयति, केन वा न प्रतिहन्यते इत्यर्थः । सूत्राय क्रमते–तदर्थं तत्परो भवति, उत्सहते वा इत्यर्थः । क्रमन्ते अस्मिन् योगाः–संतन्यन्ते स्फीता वा इत्यर्थः ॥ ३२ ॥

---

१ अत्र सप्तमसूत्रेण विकल्पेन आत्मनेपदम् ।

## परा-उपात् । ३३ ।

आभ्यां परात् 'वृत्ति'आदिअर्थात् क्रमेः कर्तरि आत्मनेपदं भवति ।

पराक्रमते । अन्ये तु इह वृत्त्यादिअनुवृत्तिं न मन्यन्ते पूर्वत्र च 'अनुपसर्गात्' इति ॥ ३३ ॥

## प्र-उपाभ्याम् आरम्भ-अङ्गीकारे । ३४ ।

आभ्यां परात् आरम्भे अङ्गीकारे च वर्तमानात् क्रमतेः कर्तरि आत्मनेपदं भवति ।

प्रक्रमते उपक्रमते भोक्तुम्–प्रारभते अङ्गीकरोति च इत्यर्थः । आरम्भ-अङ्गीकारे इति किम् ? प्रक्रामति–याति–इत्यर्थः ॥ ३४ ॥

## वेः स्वार्थे । ३५ ।

स्वार्थः पादविक्षेपः । तदर्थात् क्रमेः कर्तरि आत्मनेपदं भवति ।

साधु विक्रमते अश्वः । स्वार्थे इति किम् ? साधु विक्रामति राजा–उत्सहते वा इत्यर्थः ॥ ३५ ॥

## ज्योतिरुद्गतौ आङः । ३६ ।

आङः परात् ज्योतिरुद्गमे वर्तमानात् क्रमेः कर्तरि आत्मनेपदं भवति ।

आक्रमते चन्द्रः । उद्गतौ इति किम् ? "नभः समाक्रामति [1]कृष्णवर्त्मना स्थितैक-चक्रेण रथेन भास्करः" [ ] [2]प्राप्नोति इत्यर्थः ॥ ३६ ॥

## नु-दाञ्-प्रच्छः । ३७ ।

एभ्यः आङ्पूर्वेभ्यः कर्तरि आत्मनेपदं भवति ।

आनुते शृगालः । धनम् आदत्ते । आपृच्छते गुरून् । आङः इति किम् ? नौति । प्रणौति । ददाति । पृच्छति ॥ ३७ ॥

## गमेः प्रतीक्षायाम् । ३८ ।

गमेः ण्यन्तात् आङ्पूर्वात् प्रतीक्षायां गम्यमानायाम् कर्तरि आत्मनेपदं भवति ।

आगमयते गुरून्–[3]कंचित् कालं प्रतीक्षते इत्यर्थः । प्रतीक्षायाम् इति किम् ? आगमयति विद्याम् ॥ ३८ ॥

## ह्वः स्पर्धे । ३९ ।

---

१ "नष्टवर्त्मना" इति ३ । ३ । ५२ । सूत्रे हैमं पाठान्तरम् । २ समाक्रमति–प्राप्नोति इत्यर्थः । ३ किंचित् पा० ।

आङ्पूर्वात् स्पर्धे वर्तमानात् ह्वयतेः कर्तरि आत्मनेपदं भवति ।

मल्लो मल्लम् आह्वयते—स्पर्धमानः तस्य आह्वानं करोति—इत्यर्थः । अन्यत्र गाम् आह्वयति ॥ ३९ ॥

### सम्-नि-वेः । ४० ।

सम्-नि-विभ्यः परात् ह्वयतेः कर्तरि आत्मनेपदं भवति ।

संह्वयते । निह्वयते । विह्वयते ॥ ४० ॥

### उपात् । ४१ ।

उपपूर्वात् ह्वयतेः कर्तरि आत्मनेपदं भवति ।

उपह्वयते । योगविभागः उत्तरार्थः ॥ ४१ ॥

### स्वीकारे यमः । ४२ ।

स्वीकारे वर्तमानात् उपपूर्वात् यमेः कर्तरि आत्मनेपदं भवति ।

कन्याम् उपयच्छते । "उपायंस्त महास्त्राणि" [ ] 'स्वीकार' इति किम् ? शाटकान् उपयच्छति ॥ ४२ ॥

### स्थः पथि-मैत्री-देवार्चा-संगम-मन्त्रकरणे । ४३ ।

'पथि'आदिविषयात् तिष्ठतेः उपपूर्वात् कर्तरि आत्मनेपदं भवति । पथिस्थः अर्थः 'पथि' इत्युच्यते । मैत्री उपस्थानस्य हेतुः प्रयोजनं वा । शेषाः धातोः अर्थाः । मन्त्रः करणं यस्य स मन्त्रकरणः ।

अयं पन्थाः स्रुघ्नम् उपतिष्ठते । मैत्री—रथिकान् उपतिष्ठते । देवार्चा—जिनेन्द्रम् उपतिष्ठते । संगमे—गङ्गा यमुनाम् उपतिष्ठते । मन्त्रकरणे—गजत्या उपतिष्ठते । 'पथि' आदिषु इति किम् ? "एतद् एव अस्य कापेयम् यद् अर्कम् उपतिष्ठति" । [ ] 'मन्त्र'ग्रहणं किम् ? भर्तारम् उपतिष्ठति यौवनेन । °करणं किम् ? ऋचि विद्याम् उपतिष्ठति ॥ ४३ ॥

---

१ हैमेऽपि एतदेव पद्यम् ३ । ३ । ५९ सूत्रे । २ अत्र हैमे ३ । ३ । ६० सूत्रे इदम् अन्यदपि पद्यरूपम् उदाहरणम्-"बहूनामप्यचित्तानामेको भवति चित्तवान् । पश्य वानरसंघेऽस्मिन् यदर्कमुपतिष्ठते" ॥ ३ 'जगती' नाम छन्दसा इति आशयः । गजत्या पू० । 'गजत्या' इति पाठान्तरापेक्षया 'जगत्या' वा । अथवा अत्र 'गायत्र्या' इति पाठो भवेत् । ४ अत्र चापल्यं विवक्षितम् न देवपूजा अतो नात्मनेपदम् । "मेवं मस्थाः सचित्तोऽयम् एषोऽपि हि यथा वयम्" इत्येवं पूर्वार्धम् हैमे ३ । ३ । ६० सूत्रे ।

## वा लिप्सौ । ४४ ।

उपपूर्वात् तिष्ठतेः लिप्सौ कर्तरि आत्मनेपदं वा भवति ।

भिक्षुः दातारम् उपतिष्ठते, उपतिष्ठति वा ॥ ४४ ॥

## स्थेय-प्रकाशने । ४५ ।

स्थेयः विवादपदे निर्णेता—प्रमाणभूतः पुरुषः, तद्विषयात् प्रकाशनार्थाच्च तिष्ठतेः कर्तरि आत्मनेपदं भवति ।

त्वयि तिष्ठते विवादः—त्वयि प्रमाणभूते निर्णयाय तिष्ठति इत्यर्थः । छात्राय तिष्ठते कन्या—तत्समर्थाऽऽकरणेन[1] स्वाभिप्रायं प्रकाशयति इत्यर्थः ॥ ४५ ॥

## उदः अनूर्ध्वेहे । ४६ ।

अनूर्ध्वरूपायां चेष्टायां वर्तमानात् तिष्ठतेः उदः परात् कर्तरि आत्मनेपदं भवति ।

व्रते उत्तिष्ठते—तत्र उद्यमं करोति इत्यर्थः । 'अनूर्ध्व°' इति किम् ? आसनात् उत्तिष्ठति । "ईहे इति किम् ? ग्रामात् शतम् उत्तिष्ठति—उत्पद्यते इत्यर्थः ॥ ४६ ॥

## सम्-वि-प्र-अवात् । ४७ ।

एभ्यः परात् तिष्ठतेः कर्तरि आत्मनेपदं भवति ।

संतिष्ठते । वितिष्ठते । प्रतिष्ठते । अवतिष्ठते ॥ ४७ ॥

## प्रतिज्ञाने । ४८ ।

प्रतिज्ञाने अर्थे वर्तमानात् तिष्ठतेः कर्तरि आत्मनेपदं भवति ।

नित्यं शब्दम् आतिष्ठते ॥ ४८ ॥

## समः गिरात् । ४९ ।

'सम्'पूर्वात् प्रतिज्ञानार्थात् गिरतेः कर्तरि आत्मनेपदं भवति ।

स्याद्वादं संगिरते । 'गिरात्' इति 'श'निर्देशः 'गृणाति' निवृत्त्यर्थः ॥ ४९ ॥

## अवात् । ५० ।

'अव'पूर्वात् गिरतेः कर्तरि आत्मनेपदं भवति ।

अवगिरते ॥ ५० ॥

## उपात् असति कर्मणि । ५१ ।

---

१ "तत्समर्थाचरणेन" इति १।४।३७। सूत्रे शाकटायनीय वचः। २ अत्र सूत्रे अष्टचत्वारिंशत्तमसूत्रात् 'स्था' इति अनुवर्तनीयम् अथवा अत्रैव सूत्रे 'स्था' इति पदं स्यात्।

'उप'पूर्वात् तिष्ठतेः कर्मणि असति, कर्तरि आत्मनेपदं भवति ।

विद्यायाम् उपतिष्ठते । असति कर्मणि इति किम्? राजानम् उपतिष्ठति ॥५१॥

## ज्ञः । ५२ ।

जानातेः असति कर्मणि, कर्तरि आत्मनेपदं भवति ।

सर्पिषः जानीते । कर्मणि असति इति किम्? स्वरेण पुत्रं जानाति ॥ ५२ ॥

## समः गम्-ऋच्छि-प्रच्छि-श्रु-स्वरति-अर्ति-वेत्ति-दृशः । ५३ ।

एभ्यः 'सम्'पूर्वेभ्यः असति कर्मणि, कर्तरि आत्मनेपदं भवति ।

संगच्छते । समृच्छते । संपृच्छते । संशृणुते । संस्वरते । संविद्रते । संपश्यते । असति कर्मणि इति किम्? संगच्छति मित्रम् ॥ ५३ ॥

## शब्दे च अनाशे वेः कृञः । ५४ ।

'वि'पूर्वात् करोतेः अनाशार्थात् असति कर्मणि, शब्दे च कर्मणि कर्तरि आत्मनेपदं भवति ।

विकुर्वते सैन्धवाः–साधुदान्ता वल्गन्ति इत्यर्थः । क्रोष्टा विकुरुते स्वरान् । शब्दे च इति किम्? विकरोति मृदम् । अनाशे इति किम्? विकरोति अध्यायम्–विनाशयति इत्यर्थः ॥ ५४ ॥

## हनि-यमः स्वे अङ्गे च आङः । ५५ ।

आङः पराभ्याम् हनि-यमिभ्याम् कर्मणि असति, कर्तुः स्वे अङ्गे च कर्मणि कर्तरि आत्मनेपदं भवति ।

आहते । आयच्छते । आहते शिरः । आयच्छते पादम् । स्वे अङ्गे च इति किम्? आहन्ति वृषलम् । आयच्छति रज्जुम् ॥ ५५ ॥

## वि-उदः तपः । ५६ ।

'वि'-'उत्'परात् तपतेः असति कर्मणि, स्वे अङ्गे च कर्मणि कर्तरि आत्मनेपदं भवति ।

वितपते, उत्तपते पाणिम् । वि-उदः इति किम्? निष्टपति । स्वे अङ्गे च इति

---

१ "'स्वरति' 'अर्ति' इत्यत्र तिव्निर्देशः यङ्लुप्निवृत्त्यर्थः । अन्येषां तु यङ्लुपि अपि आत्मनेपदम्– संजंगते संपरीपृष्टे संशोश्रूते संवेविते संदरीदृष्टे । ऋच्छेस्तु यङ् न संभवत्येव"– इति हैमम् ३।३।८४ सूत्रम् ।

किम् ? निष्टपति । स्ये अङ्गे च इति किम् ? वितपति पृथ्वीं सविता । उत्तपति सुवर्णं सुवर्णकारः ॥ ५६ ॥

## व्यक्तवाचाम् अनोः वदः । ५७ ।

येषां वाचि व्यक्ता वर्णाः अर्थो वा उपलभ्यते ते व्यक्तवाचः, तेषां संबन्धिनि अर्थे वर्तमानात् 'अनु'पूर्वात् वदेः असति कर्मणि, कर्तरि आत्मनेपदं भवति ।

अनुवदते चैत्रः मैत्रस्य । असति कर्मणि इति किम् ? उक्तम् अनुवदति । व्यक्त-वाचाम् इति किम् ? अनुवदति वीणा ॥ ५७ ॥

## सहोक्तौ । ५८ ।

व्यक्तवाचां सहोक्तौ वर्तमानात् वदेः कर्तरि आत्मनेपदं भवति ।

संप्रवदन्ते ग्राम्याः । व्यक्तवाचाम् इति किम् ? संवदन्ति कुक्कुटाः । "शुक-सारिकादयः केषांचित् व्यक्तवाचः, अपरेषां न" इति । सहोक्तौ इति किम् ? चैत्रेण उक्ते मैत्रः वदति ॥ ५८ ॥

## विवादे वा । ५९ ।

विरुद्धः वादः विवादः, तद्विषयायाम् सहोक्तौ वदेः कर्तरि आत्मनेपदं भवति वा ।

विप्रवदन्ति विप्रवदन्ते वा मौहूर्ताः । विवादे इति किम् ? संप्रवदन्ते वैयाकरणाः । सहोक्तौ इति किम् ? मौहूर्ताः मौहूर्तेन सह क्रमेण विप्रवदन्ति ॥ ५९ ॥

## ज्ञान-दीप्ति-यत्न-विमति-उपसंभाष-उपमन्त्रणे । ६० ।

ज्ञान-दीप्ति-यत्न-विमतिषु अर्थविशेषणेषु उपसंभाषणे उपमन्त्रणे च अर्थे वर्तमानात् वदेः कर्तरि आत्मनेपदं भवति ।

वदते विद्वान् स्याद्वादे—ज्ञात्वा वदति—वदितुं जानाति—इत्यर्थः । वदते विद्वान् तत्त्वनिर्णये—दीप्यमानो वदति—वदन् वा दीप्यते इत्यर्थः । यत्ने—तपसि वदते—तद्विषयम् उत्साहं करोति इत्यर्थः । विमतौ—गेहे विवदन्ते—विमत्या किञ्चिद् भाषन्ते—इत्यर्थः । उपसंभाषः उपसान्त्वनम् उपलम्भनं वा—कर्मकरान् उपवदते—उपसान्त्वयति उपालभते वा—इत्यर्थः । उपमन्त्रणम् रहसि उपच्छन्दनम्—कुलभार्याम् उपवदते—उपच्छन्दयति—इत्यर्थः । "'दीप्ति'आदयः धातोः एव अर्थाः" इति अपरे । एतेषु इति किम् ? चैत्रो वदति ॥ ६० ॥

## कर्मणि अणिग्रः णिग्रः कर्तरि अस्मृतौ । ६१ ।

अणिगन्तस्य यत् कर्म तस्मिन् णिगन्तस्य कर्तरि तत एव णिगन्तात् अस्मृत्यर्थात् आत्मनेपदं भवति ।

आरोहयते हस्ती हस्तिपकान् । कर्मणि इति किम् ? दर्शयति प्रदीपः भृत्यान् । अणिगः इति किम् ? आरोहयति हस्तिपकान् महामात्रः, आरोहयन्ति महामात्रेण हस्तिपकाः । अकारः किम् ? गणयते गणो गोपालकम् । अस्मृतौ इति किम् ? स्मरयति वनगुल्मं कोकिलः ॥ ६१ ॥

## भी-स्मि-लीभ्यः ष-आकारे । ६२ ।

एभ्यः यथायोगम् षकारे आकारे च कृते कर्तरि आत्मनेपदं भवति ।

जटिलः भीषयते । जटिलः विस्मापयते । जटाभिः आलापयते । बहुवचनात् 'ली' इति लिनाति—लीयत्योः उभयोः अपि ग्रहणम् । ष—आकारे इति किम् ? कुञ्चिकया भापयति ॥ ६२ ॥

## गृधि—वञ्चेः विप्रलम्भे । ६३ ।

विप्रलम्भार्थाभ्याम् अणिगन्ताभ्यां कर्तरि आत्मनेपदं भवति ।

बटुं गर्धयते, वञ्चयते । विप्रलम्भ इति किम् ? श्वानं गर्धयति—काङ्क्षाम् अस्य उत्पादयति-इत्यर्थः ॥ ६३ ॥

## मिथ्याकृगः अभ्यासे । ६४ ।

अभ्यासः पुनः पुनः क्रियाऽऽवृत्तिः, तदर्थात् 'मिथ्या' शब्दयुक्तात् कृगः णिग-न्तात् आत्मनेपदं भवति ।

मिथ्यापदं कारयते—सोपचारं पुनः पुनः उच्चारयति—इत्यर्थः । 'मिथ्या' इति किम् ? पदं साधु कारयति । अभ्यासे इति किम् ? सकृत् पदं कारयति ॥ ६४ ॥

## परिमुह्-रुचि-धेट्-पा-अद्-दम्-आयम-आयस-वद्-वस-नृतः फलेशे पदान्तरगम्ये तु वा । ६५ ।

एभ्यः अणिगन्तेभ्यः प्रधानफलस्वामिनि कर्तरि विवक्षिते आत्मनेपदं भवति, पदान्तरात् तु गम्यमाने फले वा ।

परिमोहयते शत्रुम् । रोचयते चैत्रम् । धापयते शिशुम् । आदयते चैत्रेण । दमयते हस्तिनम् । आयामयते हस्तिनम् । आयामयते सर्पम् । आयासयते बटुम् । वादयते मैत्रम् । वासयते चैत्रम् । नर्तयते नटम् । पदान्तरगम्ये तु वा—स्वं रिपुं परेषु परिमोहयते परिमोहयति वा इत्यादि । 'धेट्' साहचर्यात् 'पा' इति पानार्थस्य ग्रहणम् न पातेः ।

'वस' इति वसतेः न वस्तेः । अदोविधानात्[1] उत्तरेण[2] सिद्धे निषेधे[3]सिद्ध्यर्थं[4] वचनम् ॥६५॥

## ई-गितः । ६६ ।

ईदितः गितश्च फलेशे कर्तरि आत्मनेपदं भवति, पदान्तरगम्ये तु वा ।

यजते । कुरुते । पदान्तरगम्ये– स्वम् ओदनं पचति, पचते । स्वं धनं दत्ते, ददाति वा । फलेशे इति किम् ? यजन्ति याजकाः । पचन्ति सूपकाराः । याजकादिलभ्यं दक्षिणादि न क्रियायाः साक्षात् फलम् पूर्व-साहचर्याभावात् तन्न तदीशः क्रियाफलेशः ॥६६॥

## वदः अपात् । ६७ ।

अपात् परात् वदेः फलेशे कर्तरि आत्मनेपदं भवति, पदान्तरगम्ये तु वा ।

एकान्तम् अपवदते । पदान्तरगम्ये–स्वं शत्रुम् अपवदति, अपवदते वा ॥६७॥

## ज्ञः अनुपसर्गात् । ६८ ।

अनुपसर्गात् जानातेः फलेशे कर्तरि आत्मनेपदं भवति, पदान्तरगम्ये तु वा ।

गां जानीते । स्वां गां जानीते, जानाति वा ॥ ६८ ॥

## यमः सम्-उत्-आङः अशास्त्रे । ६९ ।

एभ्यः परात् यमेः अशास्त्रविषये फलेशे कर्तरि आत्मनेपदं भवति, पदान्तरगम्ये तु वा ।

संयच्छते व्रीहीन् । उद्यच्छते भारम् । आयच्छते रज्जुम् । पदान्तरगम्ये–स्वान् व्रीहीन् संयच्छति, संयच्छते वा । सम्-उत्-आङः इति किम् ? नियच्छति । अशास्त्रे इति किम् ? चिकित्साम् उद्यच्छति–चिकित्साशास्त्रे उद्यमं करोति–इत्यर्थः ॥ ६९ ॥

## शेषात् परस्मै । ७० ।

उक्तस्वरूपात् अन्यस्मात् धातोः कर्तरि परस्मैपदं भवति ।

जयति । समूहति ॥ ७० ॥

## परि-आ-वेः रमः । ७१ ।

एभ्यः परात् रमतेः कर्तरि परस्मैपदं भवति ।

---

१ अस्मात् विधानात् इत्यर्थः । २ गित्वात् षट्षष्टितमसूत्रेण । ३ "चलि-आहारार्थ-" इत्यादिना अशीतितमसूत्रेण अदः आहारार्थत्वेन वृतश्च गत्यर्थत्वेन आत्मनेपदनिषेधः अतोऽत्र आत्मनेपदविधानम् इति आशयः । ४ निषेधे प्राप्ते सिद्ध्यर्थम् आत्मनेपदसिद्ध्यर्थम् इति अभिप्रायः । ५ फलेशे । ६ "क्रियायाः पूर्वं सह च (चा)भावात्" १।४।६६। शाकटायनीयअमोघवृत्तौ ।

परिरमति । आरमति । विरमति । परि-आ-वेः इति इति किम्? रमते । अभिरमते ॥ ७१ ॥

## उपात् । ७२ ।

'उप'पूर्वात् रमेः कर्तरि परस्मैपदं भवति ।

उपरमति । पृथग्योगः उत्तरार्थः ॥ ७२ ॥

## वा अकर्मकात् । ७३ ।

'उप'पूर्वात् अकर्मकात् रमतेः कर्तरि परस्मैपदं वा भवति ।

उपरमति, उपरमते वा सावद्यात् ॥ ७३ ॥

## वि-आदाञः अपराङ्गे । ७४ ।

'व्याङ्' पूर्वात् दाञः कर्तरि परस्मैपदं भवति, न चेत् स व्यादाञ् पराङ्गविषयो भवति ।

व्याददाति मुखम् । व्यात् इति किम्? दत्ते । आदत्ते । आविदत्ते । अपराङ्गे इति किम्? व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥ ७४ ॥

## परा-अनोः कृञः । ७५ ।

परा-अनुभ्यां परात् कृञः कर्तरि परस्मैपदं भवति ।

पराकरोति । अनुकरोति ॥ ७५ ॥

## प्रति-अभि-अतेः क्षिपः । ७६ ।

एभ्यः परात् क्षिपतेः कर्तरि परस्मैपदं भवति ।

प्रतिक्षिपति । ईदित्वात् आत्मनेपदप्राप्तौ वचनम् ॥ ७६ ॥

## प्रात् वहः । ७७ ।

'प्र'पूर्वात् वहेः परस्मैपदं भवति ।

प्रवहति ॥ ७७ ॥

## परेः मृषश्च । ७८ ।

'परि'पूर्वात् मृषेः वहेश्च कर्तरि परस्मैपदं भवति ।

परिमृष्यति । परिवहति ॥ ७८ ॥

## प्राणिनि अणिञः णिञन्तस्य । ७९ ।

प्राणिकर्तृविषयेऽर्थे वर्तमानात् अणिञन्तात् धातोः यः णिञ् तदन्तात् परस्य तस्य अणिञः णिञ्प्रकृतेः धातोः कर्मणि असति, कर्तरि परस्मैपदं भवति ।

आसयति चैत्रम् । प्राणिनि इति किम्? शोषयते व्रीहीन् आतपः । अणिञः इति किम्? स्वयम् आरोहयमाणं गजं प्रयुङ्क्ते आरोहयति । अकारः किम्? चेतयमानं प्रयोजयति चेतयति ॥ ७९ ॥

**चलि-आहारार्थ-इङ्-प्रु-द्रु-स्रु-बुध-युध-नश-जनः । ८० ।**

चलिअर्थात् आहारअर्थात् 'इङ्'आदिभ्यश्च णिञन्तेभ्यः कर्तरि परस्मैपदं भवति।

चलयति, कम्पयति शाखाम् । भोजयति, आशयति चैत्रम् अन्नम् । अध्यापयति सूत्रम्। प्रावयति राज्यम्। द्रावयति अयः। स्रावयति कुण्डिकाम्। बोधयति पद्मम् रविः। योधयति काष्ठानि । नाशयति पापम् । जनयति पुण्यम् ॥ ८० ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते द्वितीयः पादः समाप्तः ॥

*

# आख्याते तृतीयः पादः

## नाम्नः णिञ् बहुलं 'कृञ्'आदिषु । १ ।

नाम्नः परः 'कृञ्'आदीनां धातूनाम् अर्थे णिञ् बहुलं भवति ।

सूत्रयति व्याकरणम् । व्रतयति पयः—पय एव भुङ्क्ते इत्यर्थः । व्रतयति सावद्यान्नम्—न भुङ्क्ते इत्यर्थः । पटुम् आचष्टे पटयति । कृतम् गृह्णाति कृतयति । तूस्तानि विहन्ति वितूस्तयति-विजटीकरोति इत्यर्थः । रूपं पश्यति रूपयति । लोमानि अनुमार्ष्टि अनुलोमयति । तृणानि उत्लुत्य शातयति उत्तृणयति । वस्त्रेण समाच्छादयति संवस्त्रयति। वीणया उपगायति उपवीणयति । तूलैः अवकुष्णाति अवतूलयति । श्लोकैः उपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । वर्मणा संनह्यति संवर्मयति । चूर्णैः अवकिरति अवचूर्णयति । वास्या छिनत्ति वासयति । अश्वेन अतिक्रामति अत्यश्वयति । 'मुण्डम् धवलं बलीवर्दम् करोति' इति उभयधर्मविधाने, 'मुण्डम् शुक्लं करोति' इति अनुवादे, 'आख्यानम् आचष्टे' इत्यत्र च अनभिधानात् न भवति ॥ १ ॥

---

१ "आख्यानम् आचष्टे" इति अमोघ० ४ । १ । २८ । "आख्यानम्" इति हैमम् । आख्यातम् पा० ।

## इकः अकलि-हलेः एङ् । २ ।

'इक्'अन्तस्य नाम्नः कलि-हलिवर्जितस्य [1]णिचि परे एङ् भवति ।

पटयति । लघयति । अपीपटत् । अकलि-हलेः इति किम् ? अचकलत् । अजहलत् ॥ २ ॥

## सत्य-अर्थ-वेदस्य आः । ३ ।

एषां [1]णिचि परे आकारो भवति ।

सत्यापयति । अर्थापयति । वेदापयति ॥ ३ ॥

## श्वेताश्व-अश्वतर-गालोडित-आह्वरकस्य अश्व-तर-इत-कलुक् । ४ ।

'श्वेताश्व'आदीनाम् [1]णिचि परे यथासंख्यम् अश्व-तर-इत-कलुग् भवति ।

श्वेताश्वम् आचष्टे श्वेतयति । अश्वयति । गालोडयति । आह्वरयति ॥ ४ ॥

## कर्तुः गौणात् आचारे क्विप् । ५ ।

गुणात् विषयान्तरम् आगतः गौणः । गौणात् कर्तुः आचारे क्विप् भवति ।

अश्व इव आचरति अश्वति । कर्तुः इति किम् ? पुत्रीयति छात्रम् ॥ ५ ॥

## गल्भ-क्लीब-होडात् ङित् । ६ ।

एभ्यः गौणेभ्यः कर्तृभ्यः आचारे क्विप् भवति, स च ङित् ।

गल्भते । क्लीबते । होडते ॥ ६ ॥

## क्यङ् । ७ ।

कर्तुः गौणाचारे क्यङ् प्रत्ययो भवति ।

हंसायते ॥ ७ ॥

## सः वा लुक् च । ८ ।

सकारान्तात् गौणात् कर्तुः आचारे क्यङ् प्रत्ययो भवति, तद्योगे सकारस्य वा लुक् ।

पयायते, पयस्यते ॥ ८ ॥

## ओजः-अप्सरसः । ९ ।

आभ्यां कर्तृभ्यां गौणाभ्याम् आचारे क्यङ् प्रत्ययो भवति, तद्योगे सस्य नित्यं लुक् ।

---

[1] अत्र द्वितीय-तृतीय-चतुर्थसूत्रेषु 'णिचि'स्थाने 'णिजि' इति समुचितम् प्रथमसूत्रेण नाम्नः 'णिज्' विधानात् ।

ओजायते । अप्सरायते ॥ ९ ॥

## 'च्वि'अर्थे 'भृश'आदेः स्-तोः । १० ।

कर्तुः 'भृश'आदेः 'च्वि'अर्थे क्यङ् प्रत्ययो भवति तद्योगे च यथासंख्यम् स्-तोः लुक् ।

भृशायते । उन्मनायते । वेहायते । कर्तुः इति किम्? भृशं करोति । भृश शीघ्र चपल पण्डित उत्सुक उन्मनस् दुर्मनस् वर्चस् ओजस् वेहत् शश्वत् तृपत् नील फेन इति 'भृश'आदिः ॥ १० ॥

## 'निद्रा'आदिभ्यः धर्मिणि क्यष् । ११ ।

'निद्रा'आदिभ्यः धर्मिणि वर्तमानेभ्यः कर्तृभ्यः 'च्वि'अर्थे क्यष् प्रत्ययो भवति ।

निद्रायति, निद्रायते । धर्मिणि इति किम्? धर्ममात्रवृत्तेः मा भूत् । कर्तुः इति किम्? अनिद्रं निद्रावन्तं करोति । निद्रा । कृपा । करुणा । लोहित । चर्मन् । 'निद्रा'-आदयः प्रयोगगम्याः ॥ ११ ॥

## 'डाच्'अन्तात् । १२ ।

'डाच्'अन्तात् कर्तुः 'च्वि'अर्थे क्यष् प्रत्ययो भवति ।

पटपटायति, पटपटायते । कर्तुः इति किम्? पटपटा करोति ॥ १२ ॥

## आत्मनः इषौ आप्यात् काम्यः । १३ ।

कर्तुः आत्मनः इच्छायाम् आप्यात् नाम्नः परः 'काम्य'प्रत्ययो भवति ।

इदम् इच्छति इदंकाम्यति । स्वःकाम्यति । आत्मनः इति किम्? दुःखम् इच्छति परस्य । 'महान्तं पुत्रम् इच्छति' इत्यत्र सापेक्षत्वात् न भवति । 'क्यच्' 'काम्य'अन्तम् इषौ अकर्मकम् । धातूनां सकर्मकत्वे अकर्मकत्वे च प्रयोगः प्रमाणम् ॥ १३ ॥

## क्यच् च अम-अव्ययात् । १४ ।

'म'अन्त-अव्ययवर्जितात् नाम्नः आप्यात् आत्मन इच्छायाम् 'क्यच्'प्रत्ययो भवति काम्यश्च ।

पुत्रीयति । पुत्रकाम्यति । अम-अव्ययात् इति किम्? इदम् इच्छति । स्वर् इच्छति ॥ १४ ॥

## गौणात् आधारात् च आचारे । १५ ।

गौणात् अम-अव्ययात् नाम्नः आचरेः आप्यात् आधारात् च आचरौ अर्थे क्यच् प्रत्ययो भवति ।

पुत्रीयति छात्रम् । प्रासादीयति कुट्याम् ॥ १५ ॥

### वरिवस्-तपस्-नमसः कृतौ । १६ ।

एभ्यः कृतेः आप्येभ्यः कृतौ क्यच् प्रत्ययः भवति ।

वरिवस्यति गुरून् । तपस्यति । देवान् नमस्यति । 'नमः करोति'-'नमः'शब्दम् उच्चारयति इत्यादौ अनभिधानात् न भवति ॥ १६ ॥

### चित्रङः विस्मये । १७ ।

'विस्मय'अर्थात् 'चित्र'शब्दात् आप्यात् कृतौ अर्थे क्यच् प्रत्ययो भवति ।

चित्रीयते । विस्मये इति किम् ? चित्रं करोति ॥ १७ ॥

### रोमन्थात् उच्चर्वणे क्यङ् । १८ ।

अभ्यवहृतस्य उद्गीर्य चर्वणम् उच्चर्वणम्, तत्र वर्तमानात् 'रोमन्थ'शब्दात् आप्यात् कृतौ अर्थे क्यङ् प्रत्ययो भवति ।

रोमन्थनं रोमन्थः तं करोति रोमन्थायते गौः । उच्चर्वणे इति किम् ? कीटः रोमन्थं वर्तयति–उद्गीर्णम् अवगीर्णं वा द्रव्यं वर्तयति इत्यर्थः ॥ १८ ॥

### 'शब्द'आदेः वा । १९ ।

'शब्द'आदेः आप्यात् कृतौ क्यङ् प्रत्ययो भवति वा ।

शब्दायते, शब्दयति । शब्द वैर कलह अभ्र सुदिन दुर्दिन इति 'शब्द' आदिः ॥ १९ ॥

### 'सुख'आदेः भुजौ । २० ।

'सुख'आदेः आप्यात् भुजौ अर्थे क्यङ् प्रत्ययो भवति ।

सुखायते । दुःखायते । सुखं वेदयति प्रसाधकः चैत्रस्य, न इयम् आनुमानिकी वेदना भुज्यर्थः । सुख दुःख तृप्र कृच्छ्र अलीक कृपण सोढ प्रतीप इति 'सुख'आदिः ॥ २० ॥

---

१ "दुःखायते । 'भुजि'इति किम् ? सुखं वेदयते प्रसादको देवदत्तस्य । नेयमानुमानिकी वेदना भुज्यर्थः । यथा हि 'ओदनं भुङ्क्ते' इति भोजने रसाद्यनुभवः तथाविधः सुखाद्यनुभवोऽत्र भुज्यर्थः" इति अमोघ० ४।१।३७ एतदनुसारेण अत्र 'भुजौ इति किम् ?' इति पाठः पतितः । आनुमानिक्यां वेदनायां 'सुखं वेदयति'इति सुखयति न तु सुखायते इति ।

**कष्ट-कक्ष-कृच्छ्र-सत्र-गहनात् पापे चिकीर्षौ ॥ २१ ॥**

एभ्यः पापे वर्तमानेभ्यः चिकीर्षौ क्यङ् प्रत्ययो भवति ।

कष्टायते । कक्षायते । कृच्छ्रायते । सत्रायते । गहनायते । पापे इति किम् ? सत्रं चिकीर्षति ॥ २१ ॥

**बाष्प-ऊष्म-फेन-धूमात् उद्वमौ । २२ ।**

एभ्यः आख्येभ्यः उद्वमौ अर्थे क्यङ् प्रत्ययो भवति ।

बाष्पायते । ऊष्मायते । फेनायते । धूमायते ॥ २२ ॥

**अङ्गात् निरसने णिङ् । २३ ।**

अङ्गवाचिनः आख्यात् निरसने अर्थे णिङ् प्रत्ययो भवति ।

हस्तयते । पादयते । निरसने इति किम् ? हस्तम् आचष्टे हस्तयति । ङकारः आत्मनेपदार्थः ॥ २३ ॥

**पुच्छात् असौ । २४ ।**

पुच्छात् आख्यात् 'असि'अर्थे णिङ् प्रत्ययो भवति ।

पुच्छम् अस्यति पुच्छयते । परिपुच्छयते ॥ २४ ॥

**भाण्डात् समाचितौ । २५ ।**

'भाण्ड'वाचिनः आख्यात् समाचितौ अर्थे णिङ् प्रत्ययो भवति ।

संभाण्डयते । परिभाण्डयते ॥ २५ ॥

**चीवरात् परिधा-अर्जने । २६ ।**

'चीवर'शब्दात् आख्यात् परिधाने अर्जने च वर्तमानात् परः णिङ् प्रत्ययो भवति ।

चीवरं परिधत्ते अर्जयति वा संचीवरयते ॥ २६ ॥

**धातुः । २७ ।**

इतः ऊर्ध्वम् 'धातुः' इति अधिकृतं वेदितव्यम् ॥ २७ ॥

**द्विः परोक्षा-के प्राक् तु स्वरे स्वरविधेः । २८ ।**

परोक्षायाम् के च परे धातुः द्विः भवति, स्वरादौ तु द्वित्वनिमित्ते परे स्वरस्य कार्यात् प्राक् ।

पपाच । अचकमत । प्राक् इति किम् ? निनाय । स्वरविधेः इति किम् ? शुश्राव । 'प्राक् तु स्वरे स्वरविधेः' इति आद्विर्वचनम् अधिकारः ॥ २८ ॥

**आदिः एकस्वरः अंशः । २९ ।**

अनेकस्वरस्य धातोः आदिः एकस्वरः अवयवः परोक्षायाम् ङे च द्विः भवति ।

जजागार । अचकमत । पूर्वेण सर्वस्य प्राप्तौ वचनम् ॥ २९ ॥

**सन्-यङश्च । ३० ।**

सन्नन्तस्य यङन्तस्य च आदिः एकस्वरः अंशः द्विः भवति ।

पिपक्षति । पापच्यते । 'च'कारः 'परोक्षा—ङे च' इति उत्तरत्र समुच्चयार्थः ॥३०॥

**नाम्नः यथेष्टम् एकः । ३१ ।**

नामावयवधातोः सन्नन्तस्य यङन्तस्य च परोक्षा-ङे च परे यथेष्टम् एकस्वरः अंशः एकः द्विः भवति ।

पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति । पुत्रीयन्तं प्रायुङ्क्त अपुपुत्रीयत् इत्यादि ॥ ३१ ॥

**न आदिः स्वरः । ३२ ।**

नामावयवस्य धातोः आदिः स्वरो द्विः न भवति ।

अशिश्वीयिषति, अश्वीयियिषति, अश्वीयिषिषति ॥ ३२ ॥

**ततः द्वितीयः । ३३ ।**

'नाम्नः' इति निवृत्तम् 'न आदिः स्वरः' [आख्या० तृती० पादे सू० ३२] इति प्रतिषेधात् । अनेकस्वरस्य स्वरादेः धातोः सन्नन्तस्य यङन्तस्य च परोक्षा-ङे च परे आदिस्वरात् परः द्वितीयः एकस्वरः अंशः द्विः भवति ।

अटिटिषति । अशाश्यते । प्राक् तु स्वरे स्वरविधेः—प्रोर्णुनाव ॥ ३३ ॥

**न न-ब-द-राः व्यञ्जने अये । ३४ ।**

स्वरादेः धातोः सन्नन्तस्य यङन्तस्य च परोक्षा-ङे च परे आदिस्वरात् पराः न-ब-द-राः यकारवर्जिते व्यञ्जने परे द्विः न भवन्ति ।

उन्दिदिषति । उब्जिजिषति । अड्डिडिषति । अर्चिचिषति । न-ब-द-रा इति किम् ? ईचिक्षिषते । अये इति किम् ? अरिरियिषति । अरार्यते । पुनः द्वित्वे सति पुनर्द्वित्वं न भवति—लोलूयिषते । केषांचिद् भवति—सुसोषूयिषते ॥ ३४ ॥

## यकः तृतीयः । ३५ ।

'यक्'अन्तस्य धातोः सन्नन्तस्य यङन्तस्य च परोक्षायाम् ङे च परतः पूर्वस्य तृतीय एकस्वरः अंशः द्विः भवति ।

कण्डूयियिषति । असूयियिषति ॥ ३५ ॥

## ईर्ष्येः यिः सन् वा । ३६ ।

ईर्ष्येः सन्-यङन्तस्य परोक्षा-ङे च परतः यिः सन् वा द्विः भवति ।

ईर्ष्यियिषति, ईर्ष्यिषिषति ॥ ३६ ॥

## चरि-चलि-पति-वदः अचि । ३७ ।

एते अचि परे वा द्विः भवन्ति ।

चराचरः । चलाचलः । पतापतः । वदावदः । पक्षे—चरः । चलः । पतः । वदः ॥ ३७ ॥

## घनाघन-पाटूपटम् । ३८ ।

एतौ अचि वा निपात्येते ।

घनाघनः, हनः । पाटूपटः, पटः । [1]केषांचित् 'पटूपट'निपातनम् ॥ ३८ ॥

## जुहोत्यादिः शिति । ३९ ।

जुहोत्यादिः शिति परे द्विः भवति ।

जुहोति । जिह्रेति । अदादिअन्तर्गणः जुहोत्यादिः ॥ ३९ ॥

## चिक्लिद्-चक्नस-दास्वत्-साह्वत्-मीढ्वत् । ४० ।

एते 'क'आदिप्रत्ययान्ताः निपात्यन्ते ।

चिक्लिदः अत्र 'इग्'उपान्त्यलक्षणः कः । चक्नसः अत्र अच् । उभयत्र-घञर्थे वा कः । दासेः क्वस् दास्वान् । सहेः साह्वान् । महेः मीढ्वान् ॥ ४० ॥

## अकृतस्य अतः अन्तर् एकव्यञ्जनयोः एत् अपिति परोक्षायाम् सेटि थे च न द्विः । ४१ ।

असहायव्यञ्जनयोः मध्ये अतः अकृतस्य अपिति परोक्षायाम् सेटि थे च परे एकारो भवति, न च द्विः ।

पेचतुः । पेचिथ । नेमतुः । नेमिथ । अकृतस्य इति किम् ? विशशरतुः । एकव्यञ्जनयोः इति किम् ? ततक्षिथ । सेटि थे च इति किम् ? पपक्थ ॥ ४१ ॥

---

१ 'पटूपटम्' इति शाकटायने ४।१।५५।

## तॄ-त्रप-फल-भजाम् । ४२ ।

एषाम् अपिति परोक्षायाम् सेटि थे च अतः एकारो भवति, न च द्विः ।

तेरतुः, तेरिथ । त्रेपे । फेलतुः । फेलिथ । भेजतुः । भेजिथ ॥ ४२ ॥

## न व-आदेशादि-ददि-शसः । ४३ ।

वकारादेः आदेशादेः ददि-शसोश्च अपिति परोक्षायाम् सेटि थे च परे अतः एकारो न भवति ।

ववले । इयजिथ । दददे । विशशसुः । विशशसिथ ॥ ४३ ॥

## 'फण्'आदि-जॄ-त्रस-भ्रम-वमः वा स्वरस्य । ४४ ।

'फण्'आदेः 'जॄ'प्रभृतीनां च स्वरस्य अपिति परोक्षायाम् सेटि थे च परे एकारो वा भवति, न च द्विः ।

फेणतुः, पफणतुः । स्येमतुः, सस्यमतुः । जेरतुः, जजरतुः । त्रेसतुः, तत्रसतुः । भ्रेमतुः, बभ्रमतुः । वेमतुः, ववमतुः । फेणिथ, पफणिथ । फण स्यम स्वन राज भ्राज भास इति फण्आदिः ॥ ४४ ॥

## श्रन्थ-ग्रन्थः नलुक् च । ४५ ।

अनयोः स्वरस्य अपिति परोक्षायाम् सेटि थे च परे एकारो भवति वा, तद्योगे च नकारस्य लुक्, न च द्विः ।

श्रेथतुः, शश्रन्थतुः । श्रेथिथ, शश्रन्थिथ । ग्रेथतुः, जग्रन्थतुः । ग्रेथिथ, जग्रन्थिथ ॥ ४५ ॥

## दम्भः । ४६ ।

दम्भेः स्वरस्य अपिति परोक्षायाम् एकारो भवति, नकारस्य च लुक्, न च द्विः ।

देभतुः ॥ ४६ ॥

## थे वा । ४७ ।

दम्भेः स्वरस्य परोक्षायां थे परे एकारो वा भवति, तद्योगे च नकारस्य लुक्, न च द्विः ।

देभिथ, ददम्भिथ ॥ ४७ ॥

## राधेः वधे । ४८ ।

राधेः 'वध'अर्थस्य अपिति परोक्षायाम् सेटि थे च परे स्वरस्य एकारो भवति, न च द्विः ।

रेधतुः । रेधिथ । वधे इति किम् ? आरराधतुः गुरून् ॥ ४८ ॥

## इ सि सनि । ४९ ।

राधेः वधे वर्तमानस्य सकारादौ सनि परे स्वरस्य इकारो भवति, न च द्विः ।

प्रतिरित्सति । वधे इति किम् ? आरिरात्सति गुरुम् ॥ ४९ ॥

## रभ-लभ-शक-पत-पदाम् । ५० ।

एषां स्वरस्य सकारादौ सनि परे इकारादेशो भवति, न च द्विः ।

आरिप्सते । आलिप्सते । शिक्षति । पित्सति । पित्सते । सि इति किम् ? पिपतिषति ॥ ५० ॥

## मि-मी-मा-दाम् इत् । ५१ ।

एषां स्वरस्य 'सकार'आदौ सनि परे इत् आदेशो भवति, न च द्विः ।

मित्सति शतम् । मित्सति शत्रुम् । 'मा' इति मेङ्–माङो ग्रहणम् । प्रतिमित्सते । निमित्सते । न मातेः आदादिकत्वात् । "तस्यापि ग्रहणम्" [ ] इति अन्ये । दित्सति । धित्सति ॥ ५१ ॥

## ओत् मुचः वा अनाप्यस्य । ५२ ।

मुचेः अकर्मकस्य सकारादौ सनि परे स्वरस्य ओकारः वा भवति न च द्विः ।

मोक्षते, मुमुक्षते वत्सः स्वयमेव। अनाप्यस्य इति किम्? मुमुक्षति वत्सं चैत्रः ॥५२॥

## दम्भः धिप् धीप् । ५३ ।

दम्भेः सकारादौ सनि परे धिप् धीप् आदेशौ भवतः, न च द्विः ।

धिप्सति । धीप्सति । सकारादौ इति किम् ? दिदम्भिषति ॥ ५३ ॥

## ज्ञपि-आपः ज्ञीप्-ईप् । ५४ ।

ज्ञपेः आपेश्च सकारादौ सनि परे यथासंख्यम् ज्ञीप् ईप् आदेशौ भवतः, न च द्विः ।

ज्ञीप्सति । ईप्सति । 'सि' इति किम् ? जिज्ञपयिषति ॥ ५४ ॥

## ऋधः ईर्त् । ५५ ।

ऋधः सकारादौ सनि परे ईर्त् आदेशो भवति, न च द्विः ।

ईर्त्सति । 'सि' इति किम् ? अर्दिधिषति ॥ ५५ ॥

**दः हौ एत् । ५६ ।**

दासंज्ञकस्य हौ परे एकारः अन्तादेशो भवति, न च द्विः ।

देहि । धेहि । 'न च द्विः' इति वचनात् कृतस्यापि द्वित्वस्य निवृत्तिः तेन यङः श्लुचि अपि—देहि । हौ इति किम् ? दत्तात् ॥ ५६ ॥

**ङे पिबस्य पीप्य् । ५७ ।**

पिबतेः ङे परे पीप्य् आदेशो भवति, न च द्विः ।

अपीप्यत् । 'शप्' निर्देशः किम् ? पातेः न भवति—अपीपयत् ॥ ५७ ॥

**देः दिगि परोक्षायाम् । ५८ ।**

देङः परोक्षायाम् 'दिगि' इति आदेशो भवति, न च द्विः ।

दिग्ये, दिग्याते ॥ ५८ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते तृतीयः पादः समाप्तः ॥

*

# आख्याते चतुर्थः पादः

## द्वित्वे हि-हनोः अङे घः पूर्वात् । १ ।

हि-हनोः 'ङ'वर्जे प्रत्यये परे द्वित्वे सति पूर्वस्मात् परस्य 'घकार'आदेशो भवति।

प्रजिघाय । प्रजेघीयते । जघान । जिघांसति । अङे इति किम् ? प्राजीहयत् ॥१॥

## जेः गिः सन्-परोक्षयोः । २ ।

जयतेः सनि परोक्षायां च द्वित्वे सति पूर्वस्मात् परस्य 'गकार' आदेशो भवति ।

जिगाय जिगीषति ॥ २ ॥

## चेः किः वा । ३ ।

चिञः सनि परोक्षायां च द्वित्वे सति पूर्वस्मात् परस्य ककार आदेशो वा भवति ।

चिकाय । चिचाय । चिकीषति । चिचीषति ॥ ३ ॥

## सञ्जेः षिः षणि । ४ ।

सञ्जेः 'सञ्ज सगे'इत्यस्य ण्यन्तस्य षणि—षत्वभूते सनि सति द्विर्भावे पूर्वात् परस्य षिः वा भवति ।

सिसञ्जयिषति, षिषञ्जयिषति ॥ ४ ॥

## न स्विदि-स्वदि-सहि-अणि-स्तोः । ५ ।

स्विदि स्वदि सहि इत्येतेषां ण्यन्त-स्तौतिवर्जितानां षणि सति द्विर्भावे पूर्वात् परस्य षिः न भवति ।

स्विस्वेदयिषति । स्विस्वादयिषति । सिसाहयिषति ॥ ५ ॥

## पूर्वस्य अस्वे स्वरे 'वि'वर्णस्य उव्-इय् । ६ ।

द्वित्वे सति पूर्वस्य संबन्धिनः उवर्णस्य[1] इवर्णस्य च यथासंख्यम् उव् इय् आदेशौ[2] भवतः ।

उवोष । इयेष । अरियर्ति । अस्वे इति किम् ? ऊषतुः । ईषतुः । स्वरे इति किम् ? पिपक्षति ॥ ६ ॥

## श्रुतेः इः । ७ ।

श्रुतेः द्वित्वे सति पूर्वस्य ईकारः[3] अन्तादेशो भवति ।

---

१ उ+इ=वि इति विभागः । २ "उवर्णः" इति अमोघ० ४।१।७६। ३ इकारान्तादेशो पा० ।

व्यदिद्युतत् ॥ ७ ॥

## ह्रस्वः । ८ ।

धातोः द्वित्वे सति पूर्वस्य ह्रस्वो भवति ।

निनाय ॥ ८ ।

## ऋतः अत् । ९ ।

धातोः द्वित्वे सति पूर्वस्य संबन्धिनः ऋतः अत् आदेशो भवति ।

चकार ॥ ९ ॥

## द्वितीय-तुर्ययोः प्रथम-तृतीयौ । १० ।

धातोः द्वित्वे सति पूर्वस्य संबन्धिनोः द्वितीय-चतुर्थयोः स्थाने यथासंख्यं प्रथम-तृतीयौ भवतः ।

चखान । जुघुघुः ॥ १० ॥

## टिः वा ष्ठिवः । ११ ।

ष्ठिवः द्वित्वे सति पूर्वस्य टिः आदेशो भवति वा ।

टिष्ठेव, तिष्ठेव । ष्ठिवः इति किम् ? तष्ठचौ ॥ ११ ॥

## व्यञ्जनस्य अनादेः लुक् । १२ ।

धातोः द्वित्वे सति पूर्वस्य संबन्धिनः व्यञ्जनस्य अनादेः लुक् भवति ।

पपाच ॥ १२ ॥

## अघोषे शिटः ॥ १३ ॥

धातोः द्वित्वे सति पूर्वस्य संबन्धिनः शिटः अघोषे परे लुक् भवति ।

तिष्ठासति । अघोषे इति किम् ? सस्नौ ॥ १३ ॥

## अचि आक् । १४ ।

अचि परे धातोः द्वित्वे सति पूर्वः आक् आगमो भवति ।

चराचर । चलाचलः । 'आक्' विधानात् 'व्यञ्जनस्य अनादेः लुक्' [ आख्याते चतु० पा० सू० १२ ] न भवति, अन्यथा 'आ' इत्येव उच्यते ॥ १४ ॥

**हः जः । १५ ।**

धातोः द्वित्वे सति पूर्वस्य संबन्धिनः हकारस्य जकारो भवति ।

जहौ ॥ १५ ॥

**कवर्गस्य चवर्गः । १६ ।**

धातोः द्वित्वे सति पूर्वस्य कवर्गस्य चवर्गादेशो भवति ।

चकार । जुकुवे ॥ १६ ॥

**यङ्-अकवतेः । १७ ।**

'कवति' वर्जितस्य धातोः यङन्तस्य द्वित्वे सति पूर्वस्य कवर्गस्य चवर्गो भवति ।

चेकीयते । अकवतेः इति किम् ? कोकूयते खरः । कौति-कुवत्योस्तु भवति—चोकूयते ॥ १७ ॥

**आ-गुणौ अनी-म्आदेः । १८ ।**

यङन्तस्य धातोः द्वित्वे सति पूर्वस्य अनी-म्-आद्यन्तस्य आकारः गुणश्च अन्तादेशो भवति ।

पापच्यते । बेभिद्यते । लोलूयते । अनी-म्आदेः इति किम् ? वनीवच्यते जञ्जप्यते ॥ १८ ॥

**न आतो हाकः । १९ ।**

जहातेः यङन्तस्य आकारान्तस्य द्वित्वे सति पूर्वस्य आकारः अन्तादेशो न भवति ।

जहाति । जहेति । आतः इति किम् ? जेहीयते ॥ १९ ॥

**वञ्च-स्रंस-ध्वंस-भ्रंश-कस-पत-पद्-स्कन्दः नीम् । २० ।**

एषां यङन्तानां द्वित्वे सति पूर्वस्य नीम् आगमो भवति ।

वनीवच्यते । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रश्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते ॥ २० ॥

**'जप्' आदेः मम् । २१ ।**

'जप्' आदीनां यङन्तानां द्वित्वे सति पूर्वस्य मम् आगमो भवति ।

---

१ "द्विर्वचे पूर्वस्य कः कवर्ग°" अमोघ° ४।१।८४।

जञ्जप्यते । जञ्जभ्यते । जप जभ दह दश भञ्ज पश इति । 'दश' इति लुप्तनकारनिर्देशात् यङः श्लुचि अपि नकारलोपः—दन्दशीति । पशिः सौत्रो धातुः ॥ २१ ॥

## अतः अनुनासिकस्य । २२ ।

अकारात् परः यः अनुनासिकः तदन्तस्य द्वित्वे सति पूर्वस्य मम् आगमो भवति ।

यंयम्यते । तंतम्यते । मंमम्यते । य-ल-वानाम् अननुनासिकत्वे—तातम्यते । मामम्यते ॥ २२ ॥

## चर-फलाम् उत् च अन्'ओत्' परस्य अत् । २३ ।

चर-फलयोः यङन्तयोः द्वित्वे सति पूर्वस्य मम् आगमो भवति; तद्योगे च परस्य अतः उकारः स च अन्'ओत्' ।

चञ्चूर्यते । पंफुल्यते । बहुवचनम् 'ञिफला विशरणे' इत्यस्यापि परिग्रहार्थम् अन्यथा अनुबन्धकत्वात् 'फल निष्पत्तौ' इत्यस्यैव स्यात् । अन्'ओत्' इति किम् ? पंफुलितः ॥ २३ ॥

## रीम् ऋत्वताम् । २४ ।

ऋत्वतां यङन्तानां द्वित्वे सति पूर्वस्य रीम् आगमो भवति ।

नरीनृत्यते । परीपृच्छ्यते । ऋत्वताम् इति किम् ? चेक्रीयते । 'कृञः रीभावे कृते द्वित्वम् इति ऋत्वत्त्वं नास्ति । बहुवचनम् लाक्षणिकार्थम् ॥ २४ ॥

## रम्-रिमौ च श्लुचि । २५ ।

ऋत्वतां यङः श्लुचि द्वित्वे सति पूर्वस्य रम् रिम् चकारात् रीम् च भवति ।

नर्नर्ति, नरिनर्ति, नरीनर्ति ॥ २५ ॥

## स्वपतेः णौ उः । २६ ।

स्वपतेः णौ परे द्वित्वे सति पूर्वस्य उकारः अन्तादेशो भवति ।

सुस्वापयिषति । असुष्वापकीयत् । णौ इति किम् ? सिष्वापकीयिषति । स्वापं करोति स्वापतः सन्—'सिष्वापयिषति' इत्यत्र न स्वपेः परः णिः घञा व्यवधानात् । 'तिप्'निर्देशात् यङः श्लुचि न भवति—सोषोपयिषति ॥ २६ ॥

## असमानलुचि सन्वत् लघौ ङे । २७ ।

न विद्यते समानस्य लुक् यस्मिन् तस्मिन् ङपरे णौ द्वित्वे सति पूर्वस्य लघुनि धात्वक्षरे परे सनि इव कार्यं भवति ।

अचीकरत् । असमानलुचि इति किम् ? अचकथत् । वादयन्तं प्रायुक्त 'अवीवदत वीणाम्' इत्यत्र णिजातेः निमित्तत्वाश्रयणात् अप्रतिषेधः । लघौ इति किम् ? अततक्षत् । णौ इति किम् ? अचकमत ॥ २७ ॥

## लघोः दीर्घः अस्वरादेः । २८ ।

असमानलुचि ङपरे णौ अस्वरादेः धातोः द्वित्वे सति पूर्वस्य लघोः लघुनि धात्वक्षरे दीर्घो भवति ।

अचीकरत् । लघोः इति किम् ? अचिक्वणत् । अस्वरादेः इति किम् ? आटिटत् । असमानलुचि इति किम् ? जगत् आख्यत् अजजगत् । लघुनि इति किम् ? अततक्षत् ॥ २८ ॥

## प्रथ-म्रद-त्वर-स्मृ-दॄ-स्पशः अत् । २९ ।

एषाम् असमानलुचि ङपरे णौ द्वित्वे सति पूर्वस्य अत् अन्तादेशो भवति ।

अपप्रथत् । अमम्रदत् । अतत्वरत् । अससमरत् । अददरत् । अपस्पशत् ॥ २९ ॥

## चेष्ट-वेष्टो वा । ३० ।

अनयोः असमानलुचि ङपरे णौ द्वित्वे सति पूर्वस्य अत् वा भवति ।

अचचेष्टत्, अचिचेष्टत् । अववेष्टत्, अविवेष्टत् ॥ ३० ॥

## गणेः ईः । ३१ ।

गणयतेः ङे परे द्वित्वे सति पूर्वस्य 'ईकार' आदेशो भवति वा ।

अजीगणत्, अजगणत् । केचित् कथेः अपि इच्छन्ति—"भूरिदाक्षिण्यसंपन्नं यत् त्वं सान्त्वमचीकथः" [ ] ॥ ३१ ॥

## इः सनि अतः । ३२ ।

धातोः सनि परे द्वित्वे सति पूर्वस्य अतः 'इकार' आदेशो भवति ।

पिपक्षति । अतः इति किम् ? पापचिषते ॥ ३२ ॥

## उतः पु-यण्-जि अवर्णे । ३३ ।

सनि परे द्वित्वे सति पूर्वस्य उकारस्य पवर्गे यणि जकारे च अवर्णे परे 'इकार'-आदेशो भवति ।

---

१ "भूरिदाक्षिण्यसंयुक्तं यत्वं शान्त्वनमचीकथः" अमोघ० तथा चिन्तामणि० ४।१।१०४। हैमे ४।१।६७। सूत्रे तु मलयगिरिप्रोक्तवत्। अत्र अमोघ०-चिन्तामण्योः पाठे 'यः त्वम्' इति पाठः उचितः शुद्धश्च भवेत् ।

पिपविषते । पिपावयिषति । भू—बिभावयिषति । मू—मिमावयिषति । यियविषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । पु-यम्-जि इति किम् ? तुतावयिषति । इदम् एव इत्ववचनं ज्ञापकम्—णिनिमित्तं कार्यं स्थानिवद् भवति अन्यथा पूर्वेण एव सिद्धम् । अवर्णे इति किम् ? बुभूषति ॥ ३३ ॥

## श्रु-स्रु-द्रु-प्रु-प्लु-च्योः वा । ३४ ।

एषां सनि परे द्वित्वे सति पूर्वस्य उतः यञि अवर्णपरे इकारो वा भवति ।

शुश्रावयिषति, शिश्रावयिषति । सुस्रावयिषति, सिस्रावयिषति । दुद्रावयिषति, दिद्रावयिषति । पुप्रावयिषति, पिप्रावयिषति । पुप्लावयिषति, पिप्लावयिषति । चुच्याव-यिषति, चिच्यावयिषति । उतः इति किम् ? सोस्रविषति ॥ ३४ ॥

## ऋ-पृ-भृ-हाङ्-माम् शिति । ३५ ।

एषां शिति परे द्वित्वे सति पूर्वस्य इकारः अन्तादेशो भवति ।

इयर्ति । पिपर्ति । बिभर्ति । जिहीते । मिमीते । शिति इति किम् ? पपार । शिति परे द्वित्वे इति किम् ? परीपर्ति ॥ ३५ ॥

## निजि-विजि-विषाम् एत् । ३६ ।

एषां शिति परे द्वित्वे सति पूर्वस्य एकारः अन्तादेशो भवति ।

नेनेक्ति । वेवेक्ति । वेवेष्टि । शिति इति किम् ? निनेज ॥ ३६ ॥

## अस्य आदेः आः परोक्षायाम् । ३७ ।

परोक्षायां परतः धातोः द्वित्वे सति पूर्वस्य आदेः अतः आकारो भवति ।

आटतुः । आदेः इति किम् ? पपाच ॥ ३७ ॥

## 'ऋत्'आदि-अनेकव्यञ्जन-अश्नोः नक् च । ३८ ।

'ऋत्'आदेः अनेकव्यञ्जनस्य अश्नोतेश्च परोक्षायां द्वित्वे सति पूर्वस्य आदेः अतः आकारो भवति, नक् च आगमः ।

आनृधतुः । आनृजे । आनङ्ग । आनशे । 'ऋत्' आदि-इति किम् ? आरतुः ॥३८॥

## भू-स्वपोः अत्-इतौ । ३९ ।

अनयोः परोक्षायां द्वित्वे सति पूर्वस्य यथासंख्यम् अत् इत् इत्यादेशौ भवतः ।

बभूव । बभूवे । बिभ्यथे । केचित् भवतेः भाव-कर्मणोः नेच्छन्ति—बुभूवे । अनुबुभूवे कम्बलः ॥ ३९ ॥

**यञः सस्वरस्य अयञि आज्यम् अश्वेः संप्रसारणम् । ४० ।**

'ज्या' धातुम् अभिव्याप्य वक्ष्यमाणस्य धातोः श्विवर्जस्य परोक्षायां द्वित्वे सति पूर्वस्य संबन्धिनः सस्वरस्य अयञ्-परस्य यञः संप्रसारणं भवति ।

इयाज । उवाय । जिज्यौ । अयञि इति किम्? विव्याध । वकारस्य न भवति । निषेधसामर्थ्यात् कृतेऽपि संप्रसारणे प्रतिषेधः । 'अश्वेः' इति प्रतिषेधाच्च व्यञ्जनस्य अनादेः लुचं बाधित्वा संप्रसारणम् । आज्यम् इति किम्? सस्याम । अश्वेः इति किम्? शिश्वयतुः । परोक्षायाम् इति किम्? वावश्यते ॥ ४० ॥

**'यज्' आदि-स्वप-वचः किति । ४१ ।**

'यज्' आदेः स्वप-वचेश्च किति प्रत्यये सस्वरस्य अयञ्परस्य यञः संप्रसारणं भवति ।

इष्टः । इष्टवान् । उप्तः । सुप्तः । उक्तः । किति इति किम्? यायज्यते । अयञि इति किम्? वेवीयते । वकारस्य मा भूत् । भूवाद्यन्तर्गणो यजादिः ॥ ४१ ॥

**वशि-व्यचि-व्यधि-ज्या-ग्रहि-व्रश्चि-प्रच्छि-भ्रस्जाम् ङ्किति । ४२ ।**

एषां किति ङिति च प्रत्यये परे सस्वरस्य अयञ्परस्य यञः संप्रसारणं भवति ।

उशितः । उशन्ति । विचितः । विचति । विद्धः । विध्यति । जीनः । जिनाति । गृहीतः । गृह्णाति । वृक्णः । वृश्चति । पृष्टः । पृच्छति । भृष्टः । भृज्जति । अयञि इति किम्? विचति—वकारस्य मा भूत् ॥ ४२ ॥

**स्वापेः ङे । ४३ ।**

स्वापेः ण्यन्तङे परे सस्वरस्य यञः संप्रसारणं भवति ।

असूषुपत् । स्वापात् णञन्तात् णौ असुस्वपत् । ङे इति किम्? स्वाप्यते ॥ ४३ ॥

**द्व्युक्तौ ह्वः । ४४ ।**

द्वे उक्ती यस्मात् तस्मिन् द्वित्वनिमित्ते प्रत्यये विषयभूते ह्वेञः सस्वरस्य यञः संप्रसारणं भवति ।

जुहाव । जुहूषति । परनिमित्ते 'जुहुवतुः' इत्यादौ परत्वात् आकारस्य लुकि यञः सस्वरत्वाभावात् संप्रसारणं न स्यात् इति विषयभावाश्रयणम् ॥ ४४ ॥

## णौ सन्-ङे । ४५ ।

सन्परे ङपरे च णौ ह्वेञः यञः सस्वरस्य संप्रसारणं भवति ।

जुहावयिषति । अजूहवत ॥ ४५ ॥

## श्वेः वा । ४६ ।

श्वयतेः सन्परे ङपरे च णौ विषयभूते सस्वरस्य यञः संप्रसारणं भवति वा ।

शुशावयिषति, शिश्वाययिषति, अशूशवत्, अशिश्वयत् ॥ ४६ ॥

## यङ्-परोक्षयोः । ४७ ।

श्वयतेः यङि परोक्षायां च सस्वरस्य यञः संप्रसारणं भवति वा ।

शोशूयते, शेश्वीयते । शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः ॥ ४७ ॥

## प्यायः पी । ४८ ।

यङि परोक्षायां च परतः प्यायः यकारेण सह सस्वरस्य यञः संप्रसारणं भवति ।

आपेपीयते । आपिप्ये ॥ ४८ ॥

## क्तयोः अनुपसर्गस्य । ४९ ।

अनुपसर्गस्य प्यायः क्तयोः परयोः सस्वरस्य यञः यकारेण सह संप्रसारणं भवति ।

पीनं मुखम् । पीनवन्मुखम् । अनुपसर्गस्य इति किम् ? आप्यानो मेघः ॥ ४९ ॥

## आङः अन्धु-ऊधसोः । ५० ।

आङः परस्य प्यायः अन्धौ ऊधसि च अर्थे क्तयोः परयोः सस्वरस्य यञः यकारेण सह संप्रसारणं भवति ।

आपीनः अन्धुः । आपीनम् ऊधः । आङः इति किम् ? प्राप्यानम् ऊधः । प्यायिः अनुपसर्गः आङ्पूर्वः 'आङ्'अन्तोपसर्गसमुदायपूर्वो वा स्वभावात् प्रयुज्यते, अत्र 'आङः' इति वचनात् 'आङ्'अन्तोपसर्गसमुदायनिवृत्तिः । अन्धु-ऊधसोः इति किम् ? आप्यानः चन्द्रमाः ॥ ५० ॥

## द्रवमूर्ति-स्पर्शे श्यः । ५१ ।

मूर्तिः काठिन्यम् द्रवमूर्तौ स्पर्शे च अर्थे वर्तमानस्य श्यायतेः क्तयोः परयोः सस्वरस्य यञः संप्रसारणं भवति ।

शीनं घृतम्-द्रवीभूय काठिन्यं गतम् इत्यर्थः । शीतः वायुः । द्रवमूर्ति-स्पर्शे इति किम् ? संश्यानः वृश्चिकः शीतेन ॥ ५१ ॥

## प्रतेः । ५२ ।

प्रतेः परस्य श्यायतेः सस्वरस्य यञः क्तयोः परयोः संप्रसारणं भवति ।

प्रतिशीनः । प्रतिशीनवान् । अद्रवमूर्ति-स्पर्शार्थः आरम्भः ॥ ५२ ॥

## वा अभि-अवपूर्वस्य । ५३ ।

अभि-अवपूर्वस्य श्यायतेः सस्वरस्य यञः क्तयोः परयोः संप्रसारणं भवति वा ।

अभिशीनः, अभिश्यानः । अवशीनः, अवश्यानः । द्रवमूर्तौ अपि परत्वात् अयमेव विकल्पः—अवशीनम्, अवश्यानं घृतम् । 'पूर्व'ग्रहणम् किम् ? समभिश्यानः[1], समवश्यानः[2] । "अभिसंशीनः, अभिसंश्यानः । अवसंशीनः, अवसंश्यानः" [ ] इति एके ॥ ५३ ॥

## प्र-समः स्त्यः । ५४ ।

प्रात् समश्च परस्य स्त्यायतेः सस्वरस्य यञः क्तयोः परयोः संप्रसारणं भवति[3] ।

प्रस्तीमः । प्रसंस्तीमः । प्र-समः इति किम् ? संस्त्यानः । संप्रस्त्यानः ॥ ५४ ॥

## स्फायः । ५५ ।

स्फायः सस्वरस्य यञः क्तयोः परयोः संप्रसारणं भवति ।

स्फीतः । स्फीतवान् । क्तयोः इति किम् ? स्फातिः ॥ ५५ ॥

## श्रा-श्रपेः शृतं पक्वे हविः-क्षीरे । ५६ ।

पक्वः[4] पचेः कर्म कर्मकर्ता च, तस्मिन् हविषि क्षीरे च वाच्ये क्ते परे श्रातेः श्रायतेः श्रपयतेश्च कृतसंप्रसारणं 'शृतम्' इति निपात्यते । निपातनस्य इष्टविषयत्वात् श्रातेः श्रायतेश्च कर्मकर्तरि श्रपयतेः कर्मणि निपातनम् ।

शृतं हविः क्षीरं वा स्वयमेव[5] । पक्वे इति किम् ? श्रपितं हविः क्षीरं वा चैत्रेण मैत्रेण पाचितम् इत्यर्थः । हविः-क्षीरे इति किम् ? श्राणा यवागूः । श्रपिता यवागूः ॥ ५६ ॥

---

१ अत्र न 'अभि'पूर्वः किन्तु 'समभि'पूर्वः । २ एवम् अत्रापि न 'अव'पूर्वः किन्तु 'समव'पूर्वः । ३ अत्र आचार्येण एव विवक्षितम्—प्रात् परस्य अथवा 'प्र-सम्' इति समुदायात् परस्य, एतच्च उदाहरणदर्शनात् प्रत्युदाहरणदर्शनाच्च प्रतीयते । ४ "पक्वशब्देन एकीकृतोऽर्थः पक्वः"—शाकटा० चिन्ता० ४।१।१३४। ५ अत्र "शृतं हविः शृतं क्षीरं देवदत्तेन" इत्येवं श्रपेः उदाहरणं पतितम् ।

**यङि स्वप्-स्या-स्यमः । ५७ ।**

एषां यङि परे सस्वरस्य यञः संप्रसारणं भवति ।

सोषुप्यते । संवेवीयते । सेसिम्यते । 'अयञि' इति अनुवर्तते तेन संवेवीयते इत्यत्र वकारस्य न भवति ॥ ५७ ॥

**चायः की । ५८ ।**

चायः यङि विषये कृतसंप्रसारणं 'की' इति निपात्यते ।

चेकीयते । चेकीतः ॥ ५८ ॥

**न वशः । ५९ ।**

वशेः यङि संप्रसारणं न भवति ।

वावश्यते ॥ ५९ ॥

**वयेः यः परोक्षायाम् । ६० ।**

वयेः यः परोक्षायां परतः संप्रसारणं न भवति, वकारस्य तु सस्वरस्य भवत्येव ।

ऊयतुः । ऊयुः ॥ ६० ॥

**वः । ६१ ।**

'वेञ्' आदेशस्य 'वा' धातोः परोक्षायां परतः संप्रसारणं न भवति ।

ववौ । वः इति किम् ? उवाय ॥ ६१ ॥

**अपिति वा । ६२ ।**

'वेञ्' आदेशस्य 'वा' धातोः अपिति परोक्षायां संप्रसारणं वा न भवति ।

ववतुः । ववुः । ऊवतुः । ऊवुः ॥ ६२ ॥

**ज्यश्च यपि । ६३ ।**

'ज्या' धातोः वेञश्च यपि परे संप्रसारणं न भवति ।

प्रज्याय । प्रवाय ॥ ६३ ॥

**व्यः । ६४ ।**

व्येञः यपि परे संप्रसारणं न भवति ।

प्रव्याय । योगविभागः उत्तरार्थः ॥ ६४ ॥

## सम्-परेः वा । ६५ ।

आभ्यां परस्य व्येञः यपि परे संप्रसारणं वा भवति ।

संव्याय, संवीय । परिव्याय, परिवीय ॥ ६५ ॥

## स्वरस्य अवः दीर्घः । ६६ ।

स्वरान्तस्य 'वेञ्' वर्जितस्य धातोः संप्रसारणस्य दीर्घः भवति ।

जीनः । संवीतः । स्वरान्तस्य इति किम्? सुप्तः । अवः इति किम्? उतः ॥६६॥

## धुटि सनि । ६७ ।

स्वरान्तस्य धातोः धुडादौ सनि परे दीर्घो भवति ।

तुष्टूषति । चिकीर्षति । धुटि इति किम्? यियविषति ॥ ६७ ॥

## इगम-घ्नः । ६८ ।

इकारादेशस्य गमेः हन्तेश्च धुडादौ सनि परे स्वरस्य दीर्घो भवति ।

अधिजिगांसते । जिघांस्यते[1] । इकारादेशस्य गमेः ग्रहणात् इतरस्य न भवति—संजिगंसते ॥ ६८ ॥

## तनः वा । ६९ ।

तनोतेः धुडादौ सनि परे स्वरस्य वा दीर्घो भवति ।

तितांसति, तितंसति । धुटि इति किम्? तितनिषति ॥ ६९ ॥

## क्रमः क्त्वि । ७० ।

क्रमेः धुडादौ क्त्वाप्रत्यये परे स्वरस्य वा दीर्घो भवति ।

क्रान्त्वा, क्रन्त्वा । धुटि इति किम्? क्रमित्वा । प्रक्रम्य ॥ ७० ॥

## क्वि-क्ङिति अहन्पञ्चमस्य । ७१ ।

हन्वर्जितस्य पञ्चमान्तस्य धातोः स्वरस्य क्वौ धुडादौ किति ङिति परे दीर्घो भवति ।

प्रशान् । शान्तः । अहन्° इति किम्? वृत्रहणौ । धुटि इति किम्? शम्यते ॥७१॥

## च्छ्-वोः श्-ऊठौ अनुनासिके च । ७२ ।

धातोः च्छकार-वकारयोः अनुनासिकादौ क्वौ धुडादौ च प्रत्यये परे यथासंख्यं श् ऊठ् इत्यादेशौ भवतः ।

प्रश्नः । शब्दप्राशौ । पृष्टः । स्योमा । अक्षद्यूः । देद्योति । द्यूतः । केचिद् धुडादौ क्ङिति इच्छन्ति तन्मतेन देदेति इत्यादि भवति ॥ ७२ ॥

---

[1] 'हन्' धातोः ।

## त्वरि-ज्वरि-मवि-अवि-श्रिवः स्वरेण । ७३ ।

एषाम् अन्तस्य अनुनासिकादौ क्वौ धुडादौ च प्रत्यये परे स्वरेण सह वकारस्य ऊच् भवति ।

तूर्णः । जूः । मूतिः । ऊतिः । श्रूतिः ॥ ७३ ॥

## रात् लुक् । ७४ ।

रेफात् परयोः धातोः [1]छकार-वकारयोः अनुनासिकादौ क्वौ धुडादौ च प्रत्यये परे लुग् भवति । श्-ऊचोः अपवादः ।

मूर्मा । मूः । मूर्तिः । तूर्णः[2] ॥ ७४ ॥

## ओतः श्ये । ७५ ।

धातोः ओकारस्य श्ये परे लुग् भवति ।

यति । स्यति । श्य इति किम् ? गौः इव आचरति गवति ॥ ७५ ॥

## सकः स्वरे । ७६ ।

धातोः परस्य सकः स्वरादौ प्रत्यये परे लुक् अन्तादेशो भवति ।

अधुक्षाताम् । अधुक्षि । स्वरे इति किम् ? अधुक्षत् ॥ ७६ ॥

## दुह-दिह-लिह-गुहः वा आत्मने तुवि श्लुक् । ७७ ।

एभ्यः परस्य सकः तवर्गादौ च आत्मनेपदे परे श्लुग् वा भवति ।

अदुग्ध, अधुक्षत । अदुग्धाः, अधुक्षथाः । अदुह्वहि, अधुक्षावहि । अदिग्ध, अधिक्षत । अलीढ, अलिक्षत । न्यगूढ, न्यघुक्षत । 'श्लु'ग्रहणं सर्वलोपार्थम् ॥ ७७ ॥

## अर्-एङ् गुणः । ७८ ।

अर् एङ् च गुणसंज्ञो वेदितव्यः । गुणप्रदेशाः "ह्रस्वस्य गुणः" [ नाम्नि तृतीयपादे सू० ४४ ] इत्येवमादयः ॥ ७८ ॥

## य्वृत् संप्रसारणम् । ७९ ।

इकारः उकारः ऋकारश्च संप्रसारणसंज्ञो वेदितव्यः ॥ ७९ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते चतुर्थः पादः समाप्तः ॥

*

---

१ 'मूर्छा मोह-समुच्छ्राययो' धातुः । २ 'तुर्वै-हिंसायाम्' धातुः । अत्र तूर्मा । तूः । तूर्तिः । एतानि अपि उदाहरणानि योज्यानि ।

# आख्याते पञ्चमः पादः

## गम्-इषु-यमः छः शिति । १ ।

एषाम् अन्तस्य शिति परे छकारादेशो भवति ।

गच्छति । इच्छति । यच्छति । इषेः उदितः ग्रहणात् इह न भवति--इष्णाति॥ १ ॥

## सर्तेः वेगे धाव् । २ ।

सर्तेः शिति परे धाव् आदेशो भवति वेगे गम्यमाने ।

धावति । वेगे इति किम् ? सरति ॥ २ ॥

## ज्ञा-जनः अतिवादौ जा । ३ ।

अनयोः अतिवादौ शिति परे 'जा' आदेशो भवति ।

जानाति । जायते । अतिवादौ इति किम् ? जाज्ञाति । ॥ ३ ॥

## पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृशि-अर्ति-श्रौति-कृवु-धिवु-शद-सदः पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-ऋच्छ-शृ-कृ-धि-शीय-सीदम् । ४ ।

'पा'आदीनां शिति परे यथासंख्यं 'पिब'आदयः आदेशा भवन्ति ।

पिबति । जिघ्रति । धमति । तिष्ठति । मनति । यच्छति । पश्यति । ऋच्छति । शृणोति । कृणोति । धिनोति । शीयते । सीदति । 'तिव्'अनुबन्धनिर्देशात् यङः श्लुचि न भवति---दर्दृशत् इत्यादि । " अदादि-अनदाद्योः अनदादेः एव ग्रहणम् " [न्यायसंग्रह न्याय ३ वक्षस्कार २ पृ० ५२] इति पा-अर्तिधात्वोः भौवादिकयोः ग्रहणम् ॥ ४ ॥

## 'पू'आदेः ह्रस्वः । ५ ।

'पू'आदेः शिति परे ह्रस्वः भवति ।

पुनाति । लुनाति । 'क्री'आदिअन्तर्गणः प्वादिः ॥ ५ ॥

## एः समानस्य मिदः । ६ ।

मिदेः समानस्य शिति परे एकारो भवति ।

मेदति । समानग्रहणम् उत्तरार्थम् ॥ ६ ॥

---

१ श्रीहेमहंसगणिसंगृहीतो न्यायसंग्रहः प्रकाशितो वाराणस्याम् श्रीयशोविजयजैनग्रन्थमालायाम् ।

## 'शम्' आदि-ष्ठिवू-क्लमू-आचमः दीर्घः । ७ ।

एषां समानस्य शिति परे दीर्घो भवति ।

शाम्यति । ताम्यति । माद्यति । ष्ठीवति । क्लामति । आचामति । 'आ' पूर्वस्य चमेः ग्रहणात् इह न भवति—चमति । विचमति ॥ ७ ॥

## क्रमः परस्मै । ८ ।

क्रमः परस्मैपदविषये शिति परे दीर्घो भवति ।

क्रामति । परस्मै इति किम्? आक्रमते सूर्यः ॥ ८ ॥

## सिचि अङिति वृद्धिः । ९ ।

धातोः समानस्य परस्मैपदविषये सिचि अङिति परे वृद्धिर्भवति ।

अचैषीत् । असावीत् । अतारीत् । अङिति इति किम्? न्यनुवीत् । परस्मैपदे इति किम्? अच्योष्ट । समानस्य इति किम्? गौः इव अचारीत् अगवीत् । अचिकीर्षीत् इत्यत्र परत्वात् लुक् ॥ ९ ॥

## व्यञ्जनानाम् अनिटि । १० ।

व्यञ्जनान्तस्य धातोः समानस्य परस्मैपदविषये अनिटि सिचि परे वृद्धिर्भवति ।

अभैत्सीत् । अरौत्सीत् । अपाक्षीत् । अताप्सीत् । बहुवचनं जातिप्रतिपत्त्यर्थम् तेन अनेकव्यञ्जनव्यवधानेऽपि भवति—असाङ्क्षीत् । समानस्य इति किम्? उदवोढाम् । अनिटि इति किम्? अतर्क्षीत् ॥ १० ॥

## वा ऊर्णुवः सेटि । ११ ।

ऊर्णोतेः सेटि परस्मैपदविषये सिचि वृद्धिर्भवति वा ।

प्रौर्णावीत्, प्रौर्णवीत् ॥ ११ ॥

## व्यञ्जनादेः अतः । १२ ।

व्यञ्जनादेः व्यञ्जनान्तस्य संबन्धिनः अतः सेटि सिचि परे परस्मैपदविषये वृद्धिर्वा भवति ।

---

१ 'शम-आदि' पदेन शमसप्तकस्य ग्रहणम् । शम् दम् तम् भ्रम् श्रम् क्षम् मद् इत्येव शमसप्तकम् । २ अत्र "नित्यत्वात् अन्तरङ्गत्वाच्च गुण." इति हैमन्याससारोद्धारः ४।३।१४ । ३ अत्र अन्त्यअकारस्य लोपः ।

अकाणीत्, अकणीत्। गौः इव अचारीत् अगावीत्, अगवीत्। व्यञ्जनादेः इति किम्? मा भवान् अटीत्। अतः इति किम्? अदेवीत्। सेटि इति किम्? अपाक्षीत्। अजक्षीत् इत्यत्र व्यवधानात् न भवति ॥ १२ ॥

### वद्-व्रज-र्लः । १३ ।

वद-व्रजोः रेफान्तस्य लकारान्तस्य च धातोः अतः परस्मैपदविषये सेटि सिचि वृद्धिः भवति।

अवादीत्। अव्राजीत्। अचारीत्। अचालीत्। अतः इति किम्? न्यखोरीत्। अम्रक्षीत् इत्यादौ व्यवधानात् न भवति ॥ १३ ॥

### न क्षण-शसि-ह्-म्-य्-श्वि-जागृ-एदितः । १४ ।

क्षणेः शसेः हकारान्तस्य मकारान्तस्य यकारान्तस्य श्वि-जाग्रोः एदितां च परस्मैपद-विषये सेटि सिचि परे वृद्धिः न भवति।

अक्षणीत्। अशसीत्। अग्रहीत्। अचमीत्। अव्ययीत्। अश्वयीत्। अजागरीत्। अकगीत्। यङः श्लुचि अपि प्रतिषेधः—अचाक्षणीत्। न तु एदिताम्, 'क्षण'आदीनाम् एदित्वाकरणात् अन्यथा तान् अपि एदितः कृत्वा 'क्षण'आदिग्रहणम् इह न क्रियेत। इटि इति किम्? अधाक्षीत् ॥ १४ ॥

### धूञ्-सु-स्तुभ्यः इट् । १५ ।

एभ्यः परस्मैपदविषयस्य सिचः इट् भवति।

अधावीत्। असावीत्। अस्तावीत्। परस्मै इति किम्? अधोष्ट ॥ १५ ॥

### यमि-रमि-नम्-आताम् सक् च । १६ ।

एभ्यः परस्य परस्मैपदविषयस्य सिचः इट् भवति, सक् च आगमः एतेषाम्।

अयंसीत्। व्यरंसीत्। अनंसीत्। अयासिष्टाम्। परस्मै इति किम्? अयंस्त। बहुवचनं लाक्षणिकार्थम्—अग्लासिष्टाम् ॥ १६ ॥

### पिब-एति-दा-भू-स्थः श्लुक् । १७ ।

एभ्यः परस्य परस्मैपदविषयस्य सिचः श्लुग् भवति।

अपात्। अगात्। अध्यगात्। अदात्। अधात्। अभूत्। अस्थात्। 'पिब'-निर्देशः किम्? 'पा रक्षणे'—धनम् अपासीत्। परस्मै इति किम्? व्यत्यभविष्ट ॥ १७ ॥

---

१ 'क्षण'आदीनां यङः श्लुचि प्रतिषेधः एदितां तु यङः श्लुचि न प्रतिषेधः इति तात्पर्यम्।

## घ्रा-धेट्-शा-च्छा-सः वा । १८ ।

एभ्यः परस्मैपदविषयस्य सिचः श्लुग् वा भवति ।

अघ्रात्, अघ्रासीत् । अधात्, अधासीत् । अशात्, अशासीत् । अच्छात्, अच्छासीत् । असात्, असासीत् । परस्मै इति किम्? अधिषातां स्तनौ वत्सेन ॥ १८ ॥

## 'तन्' आदेः थास्-ते । १९ ।

'तन्' आदेः परस्य सिचः थासि ते च परे [1]श्लुग् वा भवति ।

अतथाः । अतत । अतनिष्ठाः । अतनिष्ट । असथाः । असत । असनिष्ठाः । असनिष्ट । 'थास्'साहचर्यात् 'त'स्य आत्मनेपदविषयस्य ग्रहणात् इह न स्यात्—अतनिष्ट यूयम् ॥ १९ ॥

## ह्रस्व-धुटः सः लुक् तौ । २० ।

ह्रस्वान्तात् धुडन्तात् च परस्य सिचः सकारस्य तवर्गादौ प्रत्यये परे लुग् भवति ।

अकृत । अकृथाः । अभित्त । ह्रस्व-धुट इति किम्? अमंस्त । 'अच्योष्ट' इत्यत्र परत्वात् लुचः प्रागेव गुणः । सः इति किम्? अवादिष्ट । तौ इति किम्? अभैत्सम् । "श्लुग्'अधिकारे 'लुग्'वचनं स्थानिकार्यार्थम् तेन 'अवात्त' इत्यादौ "व्यञ्जनानाम् अनिटि" [ आख्याते पा० ५ सूत्र १० इति सिचः स्थानित्वेन अतः वृद्धिः ॥ २० ॥

## ईटि इटः । २१ ।

इटः परस्य सिचः ईटि परे श्लुग् भवति ।

अलावीत् । इटः इति किम्? अकार्षीत् । ईटि इति किम्? अकणिषम् ॥ २१ ॥

## सः वा धौ । २२ ।

धातोः 'धकार'आदौ प्रत्यये परे सकारस्य वा लुक् भवति ।

अलविध्वम्, अलविढ्वम् । चकाधि, चकाद्धि ॥ २२ ॥

## अस्तेः सि हः तु एति । २३ ।

अस्तेः सकारस्य 'सकार'आदौ प्रत्यये परे लुग् भवति एकारे तु परे हकारः ।

असि । व्यतिहे । भावयामाहे ॥ २३ ॥

## उदितः नम् । २४ ।

---

[1] 'ति'इत्यस्य सप्तम्यन्तम् । आ०हेमचन्द्रस्तु अत्र "त-थोः" इति निर्दिशति–४।३।७०।

उदितः धातोः अन्त्यस्वरात् परः नम् भवति ।

वन्दन्ते ॥ २४ ॥

## 'लिम्प'आदि-तृफ-दृफ-गुफ-उभ-शुभः शे । २५ ।

एषां शे परे अन्त्यात् स्वरात् परः नम् भवति ।

लिम्पति । सिञ्चति । तृम्फति । दृम्फति । गुम्फति । उम्भति । शुम्भति ॥ २५ ॥

## जभः स्वरे । २६ ।

जभः स्वरादौ प्रत्यये परे नम् भवति ।

जम्भयति । जम्भकः । स्वरे इति किम् ? जजब्धि ॥ २६ ॥

## रधः । २७ ।

रधः स्वरादौ प्रत्यये परे नम् भवति ।

रन्धयति । रन्धकः । स्वरे इति किम् ? रध्वा ॥ २७ ॥

## परोक्षायाम् एव इटि । २८ ।

इटि परे रधः नम् परोक्षायाम् एव भवति ।

ररन्धिव । ररन्धिम । परोक्षायाम् इति किम् ? रधिता ॥ २८ ॥

## रभेः अपरोक्षा-शपि । २९ ।

रभेः अपरोक्षा-शपि स्वरादौ प्रत्यये परे नम् भवति ।

आरम्भयति । अपरोक्षा-शपि इति किम् ? आरेभे । आरभते ॥ २९ ॥

## लभः । ३० ।

लभेः अपरोक्षा–शपि स्वरादौ प्रत्यये परे नम् भवति ।

लम्भयति । अपरोक्षा-शपि इति किम् ? लेभे । लभते ॥ ३० ॥

## आङः यि । ३१ ।

आङः परस्य लभेः यकारादौ प्रत्यये परे नम् भवति ।

आलम्भ्या गौः । आङः इति किम् ? लभ्यम् ॥ ३१ ॥

## स्तुतौ उपात् । ३२ ।

---

१ अत्र 'लिम्प आदि'शब्देन मुच्, सिच्, विद्, लुप्, लिप्, कृत् खिद् पिश् इत्येतेषां तुदादिअन्तर्गणस्थानां धातूनां ग्रहणम् ।

उपात् परस्य लभेः यकारादौ प्रत्यये परे स्तुतौ गम्यमानायां नम् भवति ।

उपलम्भ्या विद्या । स्तुतौ इति किम् ? उपलभ्यम् अस्मात् वृषलात् किञ्चित् ॥३२॥

**अम्-औ वा । ३३ ।**

अमि औ च परे लभेः नम् भवति वा ।

लम्भंलम्भम् , लाभंलाभम् । अलम्भि, अलाभि ॥ ३३ ॥

**ख्वल्-घञोः च उपसर्गात् । ३४ ।**

उपसर्गात् परस्य लभेः खलि घञि अमि औ च परे नम् भवति ।

ईषत्प्रलम्भम् । प्रालम्भः । प्रालम्भंप्रालम्भम् । प्रालम्भि । उपसर्गात् इति किम् ? लाभः । ॥ ३४ ॥

**सु-दुर्भ्यः । ३५ ।**

सु-दुर्भ्यां व्यस्ताभ्याम् समस्ताभ्याम् उपसर्गात् पराभ्यां परस्य लभेः खल्-घञोः परयोः नम् भवति ।

अतिसुलम्भम् । अतिदुर्लम्भम् । अतिसुदुर्लम्भम् । अतिसुलम्भः । अतिसुदुर्लम्भः । उपसर्गात् इति किम् ? सुलभम् । दुर्लभम् । 'उपसर्गात् एव सु-दुर्भ्यः' इति नियमार्थं वचनम् ॥ ३५ ॥

**नशेः धुटि । ३६ ।**

नशेः धुडादौ प्रत्यये परे नम् भवति ।

नंष्टा । धुटि इति किम् ? नशिता ॥ ३६ ॥

**मस्जेः सः न् । ३७ ।**

मस्जेः सकारस्य धुडादौ प्रत्यये परे 'नकार' आदेशो भवति ।

मङ्क्ता । धुटि इति किम् ? मज्जनम् ॥ ३७ ॥

**सृजि-दृशोः अकिति अम् । ३८ ।**

अनयोः धुडादौ अकिति प्रत्यये परे अन्त्यात् स्वरात् परः अम् भवति ।

स्रष्टा । द्रष्टा । अद्राक्षीत् । अमि कृते वृद्धिः । धुटि इति किम् ? सर्जनम् । अकिति इति किम् ? सिसृक्षति ॥ ३८ ॥

**तृप-दृप-सृप-कृष-स्पृश-मृशः वा । ३९ ।**

एषां धुडादौ अकिति प्रत्यये परे अम् वा भवति ।

त्रप्ता, तर्प्ता। द्रप्ता, दर्प्ता। स्रप्ता, सर्प्ता। क्रष्टा, कर्ष्टा। स्प्रष्टा, स्पर्ष्टा। म्रष्टा, मर्ष्टा ॥३९॥

**सम्-परेः कृञः स्सट् भूषा-समवाये । ४० ।**

सम्-परिभ्यां परस्य कृञः सट् भवति भूषायाम् समवाये च ।

संस्करोति—परिष्करोति-भूषयति इत्यर्थः । तत्र नः संस्कृतम्—परिष्कृतम्—समुदितम् इत्यर्थः । भूषा-समवाये इति किम्[1] संकरोति । 'संस्कृतं वचनम्' इति भाक्तो निर्देशः । संचस्कार, समस्कार्षीत् इत्यत्र परत्वाच्च सटि कृते द्विर्भाव-अट्आगमौ। 'स्सट्' इति द्विसकारको निर्देशः ततः सकार एव स भवति इति 'समचिस्करत्' इत्यादौ षित्वाभावः । 'परिष्करोति' इत्यादौ तु यत्नाद् भावः ॥ ४० ॥

**उपात् प्रतियत्न-विकृति-वाक्याऽध्याहारे । ४१ ।**

उपात् परस्य कृञः 'प्रतियत्न'आदिषु भूषा-समवाये च अर्थे सट् भवति ।

एधोदकस्य उपस्कुरुते—तत्र प्रतियतते इत्यर्थः । उपस्कृतं गच्छति—विकृतम् इत्यर्थः । उपस्कृतं जल्पति—सवाक्याधारम् इत्यर्थः—उपस्करोति—इत्यर्थः । तत्र नः उपस्कृतम् समुदितम् इत्यर्थः ॥ ४१ ॥

**किरः लवने । ४२ ।**

उपात् परस्य लवनविषयस्य किरतेः सट् भवनि ।

उपस्कीर्य मद्रका लुनन्ति—विक्षिप्य लुनन्ति इत्यर्थः । लवने इति किम्? उपकिरति धान्यम् ॥ ४२ ॥

**प्रतेश्च वधे । ४३ ।**

प्रतेः उपाच्च परस्य किरः वधविषये सट् भवति ।

प्रतिस्कीर्णम् उपस्कीर्णं वा ह ते वृषल! भूयात्-हिंसानुबन्धी विक्षेपः ते भूयात् इत्यर्थः ॥ ४३ ॥

**हर्षात् चतुष्पदि अपात् । ४४ ।**

अपात् परस्य किरः सट् भवति हर्षश्चेत् चतुष्पदि विषये तदर्थः स्यात् ।

अपस्किरते वृषभो हृष्टः । चतुष्पदि इति किम्? अपकिरति नटः हृष्टः । हर्षात् इति किम्? अपकिरति श्वा ॥ ४४ ॥

१ "स्तु-स्वञ्ज-सटां वा तु अटि" [आख्याते पञ्चमपा० सू० ५८] इति वचनरूपयत्नात् इत्यर्थः ॥

### श्व-वौ आश्रय-भक्ष्याय । ४५ ।

अपात् परस्य किरतेः सट् भवति शुनि वौ च यथाक्रमं आश्रयाय भक्ष्याय चेत् तदर्थः स्यात् ।

अपस्किरते श्वा—आश्रयाय विलिख्य प्रक्षिपति इत्यर्थः । अपस्किरते भक्ष्याय विः[1]। आश्रय-भक्ष्याय इति किम् ? अपकिरति पिण्डम् आशितः श्वा । 'विष्किरः शकुनिः' इति पृषोदरादिः ॥ ४५ ॥

### गवि प्रात् तुम्पतेः । ४६ ।

प्रात् परस्य तुम्पतेः गवि कर्तरि सट् भवति ।

प्रस्तुम्पति गौः । गवि इति किम् ? प्रतुम्पति वनस्पतिः ॥ ४६ ॥

### य-स्वरे प्रादुसः अस्तेः सः षिः । ४७ ।

प्रादुसः परस्य अस्तेः सकारस्य ये स्वरे च परे षिः भवति ।

प्रादुःषन्ति । प्रादुःष्यात् । य-स्वरे इति किम् ? प्रादुःस्तः ॥ ४७ ॥

### उपसर्गात् । ४८ ।

उपसर्गात् परस्य अस्तेः सकारस्य ये स्वरे च परे षिः भवति ।

निःषन्ति । निःष्यात् । य-स्वरे इति किम् ? निःस्तः ॥ ४८ ॥

### सु-सू-सो-स्तु-स्तुभः अटि अपि अद्वित्वे । ४९ ।

एषाम् अद्वित्वे सति सकारस्य उपसर्गात् परस्य अटि अपि अन्तरे षिः भवति ।

परिषुणोति । परिषुवति । परिष्यति । परिष्टौति । परिष्टोभते । अटि अपि—पर्यषुणोत् । पर्यषुवत् इत्यादि । अद्वित्वे इति किम् ? अभिसुसूषति ॥ ४९ ॥

### स्था-सेनि-सेध-सञ्ज-सिचाम् द्वित्वे अपि । ५० ।

एषाम् उपसर्गात् परेषां द्वित्वेऽपि अटि अपि सकारस्य षिः भवति ।

अधिष्ठास्यति । अभिषेणयति । प्रनिषेधयति । अनुषजति । अभिषिञ्चति । द्वित्वेऽपि, अटि अपि—अधितष्ठौ । अध्यष्ठात् । अभिषिषेणयिषति । अभ्यषेणयत् इत्यादि ॥ ५० ॥

### स्तम्भेः अङ-प्रतिस्तब्ध-निस्तब्धे । ५१ ।

---

[1] विः पक्षी-कुक्कुटादिः ।

उपसर्गात् परस्य स्तम्भेः सकारस्य द्वित्वे अपि अटि अपि षिः भवति, न चेत् असौ स्तम्भिः ङविषयः प्रतिस्तब्ध–निस्तब्धविषयश्च स्यात् ।

विष्टभ्नाति । वितष्टम्भ । व्यष्टभ्नात् । अङ-प्रतिस्तब्ध-निस्तब्धे इति किम्? अभ्यतस्तम्भत् । प्रतिस्तब्धः । निस्तब्धः ॥ ५१ ॥

## अवात् आविदूर्य-ऊर्जा-आश्रये । ५२ ।

अवात् उपसर्गात् परस्य स्तम्भेः सकारस्य द्वित्वेऽपि अटि अपि ' आविदूर्ये 'आदौ अर्थे षिः भवति ।

अवष्टब्धा शरत् । अहो ! वृषलस्य अवष्टम्भः । दुर्गम् अवष्टभ्नाति । अवतष्टम्भ । अवाष्टभ्नात् । आविदूर्य-ऊर्जा-आश्रये इति किम्? अवस्तब्धः वृषलः शीतेन ॥ ५२ ॥

## वेश्च स्वनः अशने । ५३ ।

वेः अवात् च परस्य अशनार्थस्य स्वनः सकारस्य द्वित्वेऽपि अटि अपि षिः भवति ।

विष्वणति । अवष्वणति । विषेष्वण्यते । व्यष्वणत् । अशने इति किम्? विस्वनति मृदङ्गः ॥ ५३ ॥

## स्वञ्जेः परोक्षायां तु आदेः । ५४ ।

उपसर्गात् परस्य स्वञ्जेः द्वित्वे अपि अटि अपि सकारस्य षिः भवति, परोक्षायां तु आदेः एव ।

परिष्वजते । परिषिष्वङ्क्ते । पर्यष्वजत । परिषस्वजे ॥ ५४ ॥

## सदः अप्रतेः । ५५ ।

प्रतिवर्जात् उपसर्गात् परस्य सदेः सकारस्य द्वित्वे अपि अटि अपि षिः भवति, परोक्षायां तु आदेः ।

निषीदति । निषाषद्यते । न्यषीदत् । निषसाद ॥ ५५ ॥

## परि-नि-वेः सेवः । ५६ ।

एभ्यः परस्य सेवः सकारस्य द्वित्वे अपि अटि अपि षिः भवति ।

परिषेवते । निषेवते । विषेवते । विषिषेविषते । व्यषेवत । ॥ ५६ ॥

## सय-सिते । ५७ ।

---

१ अत्र ' परिषिषेवे ' ' निषिषेवे ' ' विषिषेवे ' इत्यपि रूपत्रयम् उदाहार्यम् ।

परि-नि-विभ्यः परस्य सय-सितसकारस्य षिः भवति ।

परिषयः । निषयः । विषयः । परिषितः । निषितः । विषितः ॥ ५७ ॥

## स्तु-स्वञ्ज-सटां वा तु अटि । ५८ ।

परि-नि-विभ्यः परस्य स्तु-स्वञ्जः सटश्च सकारस्य षिः भवति, अटि तु अन्तरे वा ।

परिष्टौति । निष्टौति । विष्टौति । परिष्वजते । निष्वजते । विष्वजते । परिष्करोति । अटि तु वा—पर्यष्वजत, पर्यस्वजत । इत्यादि ॥ ५८ ॥

## सिवेः अङे । ५९ ।

परि-नि-विभ्यः परस्य सीव्यतेः सकारस्य षिः भवति, वा तु अटि, ङे तु न स्यात् ।

परिषीव्यति । निषीव्यति । विषीव्यति । पर्यषीव्यत्, पर्यसीव्यत् । अङे इति किम्? मा परि सिषिवत् ॥ ५९ ॥

## असोः सहः । ६० ।

परि-नि-विपूर्वस्य असोभूतस्य सहः सकारस्य षिः भवति, वा तु अटि, न तु ङे ।

परिषहते । निषहते । विषहते । पर्यषहत, पर्यसहत । अङे इति किम्? मा परिसीषहत् । असोः इति किम्? परिसोढः ॥ ६० ॥

## स्यन्दतेः वा अभि-अनोश्च अप्राणिनि । ६१ ।

अभि-अनुभ्याम् परि-नि-विभ्यश्च परस्य स्यन्दतेः सकारस्य षिः भवति वा, तदर्थश्चेत् प्राणिविषयो न स्यात् ।

अभिष्यन्दते । अनुष्यन्दते । परिष्यन्दते । निष्यन्दते । विष्यन्दते । पक्षे अभिस्यन्दते इत्यादि । अप्राणिनि इति किम्? अभिस्यन्दते मत्स्यः । परिस्यन्देते मत्स्योदके[1] । 'तिप्'-निर्देशात् यङः श्लुचि न भवति । अभिसास्यन्दीति वीचिः ॥ ६१ ॥

## वेः स्कन्दः अक्तयोः । ६२ ।

वेः परस्य स्कन्दः सकारस्य षिः वा भवति, न तु क्त-क्तवत्वोः परयोः ।

विष्कन्ता, विस्कन्ता । अक्तयोः इति किम्? विस्कन्नः । विस्कन्नवान् ॥ ६२ ॥

---

१ "पर्युदासोऽयम् 'न तु प्राणिनि प्रतिषेधः' तेन इहापि भवति-अनुष्यन्देते मत्स्योदके । अनुस्यन्देते मत्स्योदके"-अमोघ० ४।२।२३१ । अत्र प्राणी अप्राणी इति उभय कर्तृ तेन 'अप्राणिनि' इत्यनेन न निषेधः इति-शाकटायनः तथैव च २।३।५० । सूत्रे हेमचन्द्रोऽपि ।
२ मत्स्यः उदक चेति उभय कर्तृ ।

## परेः । ६३ ।

परेः परस्य स्कन्देः सकारस्य षिः वा भवति ।

परिष्कन्ता, परिस्कन्ता । परिष्कन्नः, परिस्कन्नः ॥ ६३ ॥

## स्फुर-स्फुलः निर्-नेः । ६४ ।

निर्-निभ्यां परयोः स्फुर-स्फुलोः सकारस्य षिः वा भवति ।

निःष्फुरति, निःस्फुरति । निःष्फुलति, निःस्फुरति । एवम् नेः अपि ॥ ६४ ॥

## वेः । ६५ ।

वेः परयोः स्फुर-स्फुलोः सकारस्य षिः वा भवति ।

विष्फुरति, विस्फुरति । विष्फुलति, विस्फुलति । पृथग्योगः उत्तरार्थः ॥ ६५ ॥

## स्कभ्नः । ६६ ।

वेः परस्य स्कभ्नातेः सकारस्य षिः भवति ।

विष्कभ्नाति ॥ ६६ ॥

## निर्-दुर्-सु-वेः सम-सूतेः । ६७ ।

एभ्यः परयोः सम-सूतिशब्दयोः सकारस्य षिः भवति ।

निःषमः । दुःषमः । सुषमः । विषमः । निःषूतिः । दुःषूतिः । सुषूतिः । विषूतिः ॥६७॥

## अवः स्वपः । ६८ ।

निर्-दुर्-सु-वेः परस्य अवकारस्य स्वपेः सकारस्य षिः भवति ।

निःषुप्तः । दुःषुप्तः । सुषुप्तः । विषुप्तः । अवः इति किम् ? विस्वप्नः ॥ ६८ ॥

## अदुरः अन्तरश्च हिनु-मीना-आनि-णः नः णः । ६९ ।

'दुर्'वर्जात् उपसर्गात् 'अन्तर्'शब्दात् च परेषां हिनु-मीना-आनिइत्येतेषाम् णकारस्य च नकारस्य णकार आदेशो भवति ।

प्रहिणोति । प्रमीणाति । प्रयाणि । परिणमति । अन्तर्णयति । अदुरः इति किम् ? दुर्नयः । हिनु-मीना-आनि-णः इति किम् ? प्रनृत्यति । नृति-नन्दि-नशि-नर्दि-नृ-नाटि[1]-नक्कीनां णोपदेशाभावात् । प्रगतः नायकः यस्मात् स प्रनायकः देशः इत्यादौ प्रादेः प्रत्ययार्थेन

---

१ "नृति नन्दि नर्दि नशि नाटि नक्कि नाधृ नाथृ नृ वर्जम्" इति हेमचन्द्रः–२।३।९७। नृति नर्तने । नदु समृद्धौ । नशि अदर्शने । नर्द शब्दे । नृ नये । नटण् अवस्यन्दने । नक्क नाशने । इत्येते धातवः । २ °टि-नक्कीनां पा० । पू० ।

योगः न धातुना इति अनुपसर्गत्वम् ॥ ६९ ॥

### शः नशः । ७० ।

अ'दुर्'उपसर्गात् अन्तरश्च परस्य शकारान्तस्य नशेः नकारस्य णः भवति ।

प्रणश्यति । अन्तर्णश्यति । शः इति किम् ? प्रनङ्क्ष्यति ॥ ७० ॥

### नेः मा-दा-नद्-गद्-पत-पद्-स्यति-याति-वाति-द्राति-प्साति-हन्ति-वपी--वही-शमू-चिञ्-देग्धौ । ७१ ।

अ'दुर्'उपसर्गात् अन्तरश्च परस्य नेः नकारस्य 'मा'आदिषु धातुषु परेषु णकार आदेशो भवति ।

प्रणिमिमीते । प्रणिददाति । प्रणिधयति । प्रणिनदति । प्रणिगदति । प्रणिपतति । प्रणिपद्यते । प्रणिष्यति । प्रणियाति । प्रणिवाति । प्रणिद्राति । प्रणिप्साति । प्रणिहन्ति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि । 'निप्'अनुबन्धनिर्देशात् यङः श्लुचि न भवति–प्रनिसासेति इत्यादि । 'दा'साहचर्यात् 'मा' इति मेङ्-माङो ग्रहणम् तेन इह न भवति–प्रनिमाति ॥ ७१ ॥

### पाठे अ'ष'अन्त-'क'-'ख'आदौ शेषे वा । ७२ ।

'मा'-दासंज्ञकादिभ्यः शेषे धातुपाठे अ'ष'अन्ते अ'क'-'ख'आदौ परे अ'दुर्'-उपसर्गात् अन्तरश्च परस्य नेः नकारस्य णः भवति वा ।

प्रनिपचति, प्रणिपचति । अन्तर्निभिनत्ति, अन्तर्णिभिनत्ति । अ'ष'अन्त-'क'-'ख'-आदौ इति किम् ? प्रनिपिनष्टि । प्रनिकरोति । प्रनिखादः । पाठे इति किम् ? प्रनिपापचीति । इह तु न भवति–प्रेणिवेष्टा[1] ॥ ७२ ॥

### परेः अनितेः । ७३ ।

परेः परस्य अनितेः नकारस्य णः भवति वा ।

पर्यणिति, पर्यनिति । परेः इति किम् ? प्राणिति ॥ ७३ ॥

### अन्ते च । ७४ ।

अ'दुर्'उपसर्गात् अन्तरश्च परस्य अनितेः नकारस्य अन्ते अनन्ते च णः भवति ।

प्राणिति । हे प्राण् ॥ ७४ ॥

---

१ अत्र प्रणिवेष्टा प्रनिवेष्टा इति रूपद्वय भवत्येव धातोः शकारान्तत्वात् धातुश्च विशंत् प्रवेशने । एवम् अन्यत्रापि-यथा-प्रणिदेष्टा प्रनिदेष्टा इत्यादि बोध्यम् ।

## द्वयोः । ७५ ।

अ'दुर्'उपसर्गात् अन्तरश्च परस्य अनितेः द्वयोः नकारयोः णः भवति ।

प्राणिणिषति ॥ ७५ ॥

## हनः । ७६ ।

अ'दुर्'उपसर्गात् अन्तरश्च परस्य हन्तेः नकारस्य णः भवति ।

प्रहण्यते । अन्तर्हण्यते ॥ ७६ ॥

## व-मोः वा । ७७ ।

अ'दुर्'उपसर्गात् अन्तरश्च परस्य हन्तेः नकारस्य वकार-मकारयोः परयोः णः वा भवति ।

प्रहन्वः, प्रहण्वः । प्रहन्मः, प्रहण्मः ॥ ७७ ॥

## निक्ष-र्निस-निन्दः कृति वा । ७८ ।

एषाम् अ'दु्'उपसर्गात् अन्तरश्च परेषां नकारस्य कृति परे णः वा भवति ।

प्रणिक्षणम्, प्रनिक्षणम् । प्रणिंसनम्, प्रनिंसनम् । प्रणिन्दनम्, प्रनिन्दनम् । कृति इति किम् ? प्रणिंस्ते ॥ ७८ ॥

## अषः स्वरात् अभा-भू-पूञ्-कमि-गमि-प्यायि-वेपः । ७९ ।

अषकारान्तात् अ'दुर्'उपसर्गात् अन्तरश्च परात् 'भा'आदिवर्जात् धातोः परस्य कृत्प्रत्ययस्थस्य स्वरात् परस्य नकारस्य णः भवति ।

प्रयाणम् । प्रयाणीयम् । अषः इति किम् ? निष्पानम् । स्वरात् इति किम् ? निर्भग्नः । 'भा' आदिप्रतिषेधः किम् ? प्रभानम् । प्रभवनम् । प्रपवनम् । प्रकमनम् । प्रगमनम् । प्रप्यायनम् । प्रवेपनम् । कृति इति किम् ? प्रवापेन ॥ ७९ ॥

## नमि 'नामि'आदेः एव । ८० ।

अषकारान्तात् अ'दुर्'उपसर्गात् अन्तरश्च परस्य धातोः नमि सति तस्मात् 'नामि' आदेः एव परस्य कृत्प्रत्ययस्थस्य स्वरात् परस्य नकारस्य णकारः भवति ।

प्रेङ्खणम् । नमि इति किम् ? अनमि नियमो मा भूत्—प्रवपनम् । 'नामि'आदेः एव इति किम् ? प्रभञ्जनम् ॥ ८० ॥

## 'व्यञ्जन'आदेः 'नामि'उपान्त्यात् वा । ८१ ।

अषकारान्तात् अ'दुर्'उपसर्गात् अन्तरश्च परात् व्यञ्जनादेः नामिउपान्त्यात् 'भा'-आदिवर्जात् धातोः परस्य कृत्प्रत्ययस्थस्य स्वरात् परस्य नकारस्य वा णः भवति ।

प्रकोपनम्, प्रकोपणम् । 'नामि'उपान्त्यात् इति किम्? प्रवपनम् ॥ ८१ ॥

## णेः । ८२ ।

अषकारान्तात् अ'दुर्'उपसर्गात् अन्तरश्च परात् ण्यन्तात् 'भा' आदिवर्जात् परस्य कृत्प्रत्ययस्थस्य स्वरात् परस्य नकारस्य णः भवति ।

प्रयापणम्, प्रयापनम् । 'भा'आदिवर्जनं किम्? प्रभापनम् । प्रभावनम् इत्यादि ॥८२॥

## रः लः अयौ । ८३ ।

उपसर्गस्य संबन्धिनः रेफस्य अयतौ परे लकारः भवति ।

प्लायते । पलायते ॥ ८३ ॥

## गिरः यङि । ८४ ।

गिरतेः रेफस्य यङि परे लकारः भवति ।

निजेगिल्यते ॥ ८४ ॥

## वा स्वरे । ८५ ।

गिरतेः धातोः स्वरादौ प्रत्यये परे रेफस्य लकारो वा भवति ।

गिरति, गिलति । 'गिरौ' 'गिरः' इत्यत्र न धातोः प्रत्ययः इति न भवति ॥८५॥

## डश्च 'ऋफिड'आदीनाम् । ८६ ।

'ऋफिड' आदीनां रेफस्य डकारस्य च वा लकारः भवति ।

ऋफिडः, लृफिडः । ऋतकः, लृतकः । ऋफिलः, ऋफिडः । पीडा, पीला ।

नि-प्रतेः अयतौ । निलयनम्, निरयनम् । प्रत्ययते, प्लत्ययते ।

परेः घ-अङ्क-योगे । परिघः, पलिघः । पर्यङ्कः, पल्यङ्कः । परियोगः, पलियोगः ।

स्वरभागमध्यगतरेफः ऋवर्णः स्वरभागमध्यगतलकारश्च लृवर्णः । ततः रेफस्य लकारे कृते लृवर्ण एव संपद्यते । 'ऋफिड'आदयः प्रयोगगम्याः ॥ ८६ ॥

## कृपः अ'कृपीट'आदिषु । ८७ ।

कृपः रेफस्य लकारः भवति न तु 'कृपीट' आदिषु ।

क्लृप्तः । अचीक्लृपत् । अ'कृपीट'आदिषु इति किम्? कृपीटः । कृपणः । कर्पूरः इत्यादि ॥ ८७ ॥

---

१ 'अय् धातौ परे' इत्यर्थः ।

## आदेः णः नः । ८८ ।

पाठे इति वर्तते । पाठे धातोः आदेः णकारस्य नकार आदेशो भवति ।

णीञ्—नयति । पाठे इति किम् ? णकारीयति[1] ॥ ८८ ॥

## षः सः अष्ट्या-ष्ठिव-ष्वष्कः । ८९ ।

पाठे धातोः 'ष्ट्या' आदिवर्जस्य आदेः षकारस्य सकारः भवति ।

षह्—सहते । पाठे इति किम् ? षण्डीयति । 'ष्ट्या' आदिप्रतिषेधः किम् ? ष्ट्यायति । निष्ठीवति । ष्वष्कते ॥ ८९ ॥

## लुग् बहुलं क्रीञ्-तनि अवस्य । ९० ।

क्रीञ्-तनोः परयोः 'अव' शब्दस्य आदेः लुग् बहुलं भवति ।

वक्रयः, अवक्रयः । वतंसः, अवतंसः । 'बहुल' ग्रहणं प्रयोगानुसरणार्थम् ॥९०॥

## धाञ्-नहि अपेः । ९१ ।

धाञ्-नहोः परयोः अपेः आदेः लुग् बहुलं भवति ।

पिहितम्, अपिहितम् । पिनद्धम्, अपिनद्धम् ॥ ९१ ॥

## इण्-इकोः अद्यतन्यां गाः । ९२ ।

इण् इकोः अद्यतन्यां परस्यां 'गा' आदेशो भवति ।

अगात् । अध्यगात् ॥ ९२ ॥

## णौ गम् अज्ञाने । ९३ ।

अज्ञाने वर्तमानयोः इण्-इकोः णौ परे 'गम्' आदेशो भवति ।

गमयति । अधिगमयति । अज्ञाने इति किम् ? अर्थान् प्रत्याययति ॥९३॥

## सनि इङश्च । ९४ ।

इण्-इकोः इङश्च सनि परे 'गम्' आदेशो भवति अज्ञाने ।

अधिजिगांसते । जिगमिषति । अधिजिगमिषति । अज्ञाने इति किम् ? अर्थान् प्रतीषिषति ॥ ९४ ॥

---

१ णकारम् इच्छति–इति ।

## गाङ् परोक्षायाम् । ९५ ।

इङः परोक्षायां गाङ् आदेशो भवति ।

अधिजगे ॥ ९५ ॥

## णौ सन्-ङे वा । ९६ ।

सन्परे ङपरे च णौ इङः 'गा' आदेशो भवति वा ।

अधिजिगापयिषति. अध्यापिपयिषति । अध्यजीगपत, अध्यापिपत् ॥ ९६ ॥

## क्रियातिपत्तौ गीङ् । ९७ ।

इङः क्रियातिपत्तौ परस्यां गीङ् आदेशो भवति वा ।

अध्यगीष्यत, अध्यैष्यत ॥ ९७ ॥

## अद्यतन्याम् । ९८ ।

इङः अद्यतन्यां परतः गीङ् आदेशो भवति वा ।

अध्यगीष्ट, अध्यैष्ट । पृथग्योगः उत्तरार्थः ॥ ९८ ॥

## हनः वधः वा तु आत्मने । ९९ ।

हन्तेः अद्यतन्यां विषये 'वध' आदेशो भवति, आत्मनेपदे वा ।

अवधीत । आहत, आवधिष्ट । 'वध' इति अदन्तः अयम् अत. "व्यञ्जनादेः अतः" [ आख्याते पा० ५ सू० १२ ] इति वृद्धिर्न भवति ॥ ९९ ॥

## आशिषि अञौ । १०० ।

आशिषि विषये हन्तेः 'वध' आदेशो भवति, न तु ञौ ।

वध्यात । आवधिषीष्ट । अञौ इति किम् ? घानिषीष्ट ॥ १०० ॥

## ह्यस्तनी-अद्यतनी-क्रियातिपत्तिषु अमाङः अट् । १०१ ।

'ह्यस्तनी' आदिविषये धातोः अट् आगमो भवति न तु माङः योगे ।

अकरोत । अकार्षीत । अकरिष्यत् । अमाङः इति किम् ? मा भवान् करोत् ॥ १०१ ॥

## स्वरस्य आदेः वृद्धिः । १०२ ।

धातोः आदेः स्वरस्य 'ह्यस्तनी' आदिविषये वृद्धिर्भवति न तु माङः योगे ।

आटत । आटीत । आटिष्यत । आर्च्छत । ऐहत । औब्जत् । अमाङः इति किम् ? मा स्म भवान् अटत् ॥ १०२ ॥

## एति-अस्तेः । १०३ ।

एतेः अस्तेश्च आदेः स्वरस्य 'ह्यस्तनी' आदिविषये वृद्धिर्भवति न तु माङा योगे ।

आयन् । अध्यायन् । आस्ताम् । अमाङा इति किम् ? मा स्म भवन्तः यन् । 'अच्'आदेशादिबाधनार्थं वचनम्, अत एव वचनात् 'ह्यस्तनी'आदेः विषयविज्ञानेऽपि निष्पन्ने अन्यस्मिन् धातु-प्रत्ययकार्ये पश्चात् वृद्धिः तेन 'ऐयरुः'इत्यादि सिद्धम् । पर-विज्ञाने च 'शव्' आदिव्यवधाने न स्यात् इति विषयविज्ञानम् ॥ १०३ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते पञ्चमः पादः समाप्तः ॥

*

## षष्ठः पादः

### 'कण्डू'आदेः यक् । १ ।

'कण्डू' आदेः धातोः परः यक् प्रत्ययः भवति ।

कण्डूयति, कण्डूयते। मन्तूयति । धातोः इति किम्? कण्डूः । कण्डूञ् मन्तु वल्गु इत्यादि ॥ १ ॥

### किति-तिजि-गुपः 'भिषज्या'आदि-क्षमा-निन्दे सन् । २ ।

एभ्यः यथासङ्ख्यं 'भिषज्या'आदि-क्षमा-निन्दार्थेभ्यः स्वार्थे सन् प्रत्ययः भवति ।

ज्वरं चिकित्सति । चिकित्स्यानि क्षेत्रे तृणानि । चिकित्स्यः पारदारिकः । विचिकित्सति मे मनः – संशेते इत्यर्थः । तितिक्षते। जुगुप्सते । 'भिषज्या'आदि-क्षमा-निन्दे इति किम्? केतयति । तेजनम्। गोपनम् ॥ २ ॥

### शान-दान-मान-बधात् निशान-आर्जव-जिज्ञासा-वैरूप्ये दीर्घश्च इतः । ३ ।

'शान'आदिभ्यः यथासंख्यं 'निशान'आदिअर्थेभ्यः स्वार्थे सन् प्रत्ययो भवति, दीर्घश्च एषां पूर्वस्य इतः ।

शीशांसति । दीदांसति । मीमांसते । बीभत्सते । अर्थोपादानं किम्? अर्थान्तरे मा भूत्–निशानम् । अवदानम् । मानयति । बाधयति ॥ ३ ॥

### वा इच्छायाम् आप्यात् एककर्तृकात् अतत्सनः । ४ ।

इच्छायाम् अर्थे धातोः आप्यात् इच्छतिना एककर्तृकात् परः सन् प्रत्ययः भवति वा, न तु इच्छाविहितसन्नन्तात् ।

चिकीर्षति । इच्छायाम् इति किम्? कर्तुं शक्नोति । नदीकूलं पिपतिषति, श्वा मुमूर्षति इति उपमानात् यथावाक्यम् । एककर्तृकात् इति किम्? चैत्रस्य गमनम् इच्छति । 'अतत्'ग्रहणात् इह न प्रतिषेधः–चिकित्सिषति । आप्यात् इति किम्? गमनेन इच्छति। सनः अकारः किम्? प्रतीषिषति । 'वा' इति वाक्यार्थम् ॥ ४ ॥

### प्रयोक्तृव्यापारे णिञ् । ५ ।

धातोः परः प्रयोक्तृव्यापारे णिञ् प्रत्ययो वा भवति ।

कटं कारयति चैत्रम् । भिक्षा वासयति । राजानम् आगमयति कथकः, कथनेन

हि बुद्धौ आगमनं प्रयुक्तं प्रतीयते । कंसं घातयति नटः, अत्र अभिनयेन । पुष्येण चन्द्रं योजयति गणकः, अत्र ज्ञानेन ॥ ५ ॥

## व्यञ्जनादेः एकस्वरात् अगृणा-शुभ-रुचः भृश-आभीक्ष्ण्ये यङ् । ६ ।

गुणक्रियाणाम् अधिश्रयणादीनां क्रियान्तराव्यपेतानां साकल्येन संपत्तिः फलातिरेको वा भृशत्वम् । प्रधानक्रियायाः विक्लेदादेः क्रियान्तराव्यवायेन आवृत्तिः पौनःपुन्यम् आभीक्ष्ण्यम् । भृशे आभीक्ष्ण्ये च अर्थे वर्तमानात् व्यञ्जनादेः एकस्वरात् गृणा-शुभि-रुचिवर्जात् परः यङ् प्रत्ययो वा भवति ।

भृशम् पुनः पुनर्वा लुनाति लोलूयते । पापच्यते । पक्षे लुनीहि लुनीहि इत्येव अयं लुनाति । व्यञ्जनादेः इति किम् ? भृशम् ईक्षते । एकस्वरात् इति किम् ? भृशं चकास्ति । अगृणा-शुभ-रुचः इति किम् ? भृशं गृणाति, शोभते, रोचते ॥ ६ ॥

## 'अटि'आदेः । ७ ।

' अटि ' आदेः भृशे आभीक्ष्ण्ये च अर्थे वर्तमानात् परः यङ् प्रत्ययो भवति वा ।

अटाट्यते । अरार्यते । अटि अर्ति मूत्रि सूत्रि मूचि अशू ऊर्णु इति 'अटि'आदिः । अपरे जागर्तेः अपि इच्छन्ति—जाजागीयते । अपरे सर्वस्मात् अप्रत्ययात्—अशाश्यते । दादरिद्र्यते ॥ ७ ॥

## 'गति'अर्थात् कुटिले । ८ ।

व्यञ्जनादेः एकस्वरात् गत्यर्थात् कुटिल एव अर्थे यङ् वा भवति ।

भृशम् पुनः पुनर्वा कुटिलं क्रामति चङ्क्रम्यते । कुटिले इति किम् ? भृशं क्रामति ॥८॥

## 'लुप'आदेः गर्हे । ९ ।

एभ्यः गर्हे अर्थे यङ् प्रत्ययो वा भवति ।

भृशम् पुनः पुनर्वा गर्हितं लुम्पति लोलुप्यते । जञ्जप्यते । लुंप् जप् जभ् दह् दश् चर गॄ इति लुपआदिः ॥ ९ ॥

## ल्लुग् बहुलम् । १० ।

यङः बहुलं ल्लुग् भवति ।

बोभूयते । बोभोति । बहुलग्रहणम् प्रयोगानुसरणार्थम् ॥ १० ॥

---

१. अत्र आ० हेमचन्द्रः ३।४।१२ सूत्रे 'सद' धातुम् अधिकं पठति । ततः सासद्यते इति साधयति ।

### अचि । ११ ।

अचि परे यङः श्लुग् भवति ।

चेच्यः । लोलुवः ॥ ११ ॥

### न उतः । १२ ।

उकारात् विहितस्य यङः अचि परे श्लुग् न भवति ।

योयूयः ॥ १२ ॥

### गुपौ-धूप-विच्छि-पणि-पनेः आयः । १३ ।

एभ्यः स्वार्थे आयप्रत्ययो भवति वा ।

गोपायिता, गोप्ता । धूपायिता, धूपिता । विच्छायिता, विच्छिता । पणायिता, पणिता । पनायिता, पनिता । साहचर्यात् पणि इह स्तुत्यर्थः । इह न भवति - शतस्य पणते । केचित् अत्र अपि इच्छन्ति । 'गुपौ' इति औकारः यङः श्लुचि निवृत्त्यर्थः ॥ १३ ॥

### कमू-ऋतेः णिङ्-ईयङ् । १४ ।

कमि-ऋतिभ्यां परौ यथासङ्ख्यं णिङ् ईयङ् प्रत्ययौ भवतः ।

कामयिता, कमिता । ऋतीयिता, अर्तिता ॥ १४ ॥

### नित्याः शपि । १५ ।

'आय'आदयः शपि विषये नित्या भवन्ति ।

गोपायति । धूपायति । विच्छायति । पणायति । पनायति । कामयते । ऋतीयते । इह 'नित्य'ग्रहणात् पूर्वत्र विकल्पः ॥ १५ ॥

### 'चुर'आदिभ्यः णिच् । १६ ।

एभ्यः स्वार्थे णिच् प्रत्ययो भवति ।

चोरयति । चिन्तयति । पादयते ॥ १६ ॥

### 'युज'आदेः वा । १७ ।

एभ्यः णिच् प्रत्ययो वा भवति ।

योजयति, योजति । साहयति, सहति । चुरादिअन्तर्गणः युजादिः ॥ १७ ॥

### भुवेः प्राप्तौ इणिः । १८ ।

भुवः प्राप्तौ अर्थे वर्तमानात् परः इणिः प्रत्ययो भवति वा ।

भावयते, भवते। अन्यत्र न भवति। 'इगिः' इत्यत्र इकारः आत्मनेपदार्थः। 'भुवेः' इति इकारनिर्देशात् इणिअभावेऽपि प्राप्तौ आत्मनेपदार्थः ॥ १८ ॥

## 'कुट'आदेः ङिद्वत् अञ्णित् । १९ ।

'कुट'आदेः परः ञिन्-णित्वर्जः प्रत्ययः ङिद्वत् भवति।

कुटिता। पुटिता। अञ्णित इति किम्? उत्कोटः। उचुकोट। तुदादिअन्तर्गणः कुटादिः ॥ १९ ॥

## विजेः इट् । २० ।

विजेः इट् ङिद्वत भवति।

उद्विजिता। इट् इति किम्? उद्वेजनम् ॥ २० ॥

## वा ऊर्णोः । २१ ।

ऊर्णोतेः इट् वा ङिद्वत् भवति।

प्रोर्णविता, प्रोर्णुविता ॥ २१ ॥

## शित् अपित् । २२ ।

धातोः परः अपित् शित् प्रत्ययः ङिद्वत् भवति।

इतः। चिन्वन्ति। क्रीणाति। वृश्चति। अपित् इति किम्? एति। शित् इति किम्? चेषीष्ट ॥ २२ ॥

## असंयोगात् परोक्षा कित् । २३ ।

असंयोगात् धातोः परोक्षा अपित् किद्वत् भवति।

निन्यतुः। ऊचतुः। असंयोगात् इति किम्? सस्रंसे। अपित् इति किम्? निनयिथ ॥ २३ ॥

## इन्धेः । २४ ।

इन्धेः परोक्षा अपित् किद्वत् भवति।

समीधे। संयोगान्तत्वात् पूर्वेण एव अप्राप्तौ वचनम् ॥ २४ ॥

## वा स्वञ्जेः । २५ ।

स्वञ्जेः परोक्षायां किद्वत् भवति।

सस्वजे, सस्वञ्जे ॥ २५ ॥

**ज-नशः नि उपान्त्ये तादि क्त्वा । २६ ।**

'ज'अन्तस्य नशश्च नकारे उपान्त्ये सति तकारादिः क्त्वा किद्वत् भवति वा ।

रक्त्वा, रङ्क्त्वा । नष्ट्वा, नंष्ट्वा । नि उपान्त्ये इति किम् ? भुक्त्वा । इष्ट्वा । मृष्ट्वा । तादि इति किम् ? विभज्य ॥ २६ ॥

**थ-फ-तृषि-मृषि-कृषि-वञ्चि-लुञ्चि-ऋतेः सेट् । २७ ।**

थकारान्तस्य फकारान्तस्य 'तृषि' आदेश्च नकारोपान्त्ये सति क्त्वा सेट् वा किद्वत् भवति ।

श्रथित्वा, श्रन्थित्वा । ग्रथित्वा, ग्रन्थित्वा । गुफित्वा, गुम्फित्वा । तृषित्वा, तर्षित्वा । मृषित्वा, मर्षित्वा । कृषित्वा, कर्षित्वा । वचित्वा, वञ्चित्वा । लुचित्वा, लुञ्चित्वा । ऋतित्वा, अर्तित्वा । नि उपान्त्ये इति किम् ? कोथित्वा । रेफित्वा । इदं च विशेषणम् थ-फअन्तानामेव न अन्येषाम् असंभवात् व्यभिचाराभावाच्च । सेट् इति किम् ? वक्त्वा ॥ २७ ॥

**गौ व्यञ्जनादेः अवः सन् च । २८ ।**

अवकारान्तस्य व्यञ्जनादेः धातोः इकारे उकारे च उपान्त्ये सति सन् क्त्वा च से_ किद्वत् वा भवति ।

लिलिखिषति, लिलेखिषति । लिखित्वा, लेखित्वा । दियुतिषते, दिद्योतिषते । द्युतित्वा, द्योतित्वा । अवः इति किम् ? दिदेविषति, देवित्वा । व्यञ्जनादेः इति किम ? एषित्वा । सेट् इति किम् ? भुक्त्वा ॥ २८ ॥

**उति 'शव्'अर्ह-अदादेः क्तौ भाव-आरम्भे । २९ ।**

'शव्'अर्हाणाम् अदादेश्च उकारे उपान्त्ये सति भावे आरम्भे च विहितौ क्त-क्तवतू सेटौ वा किद्वत् भवतः ।

कुचितम् कोचितम् अनेन । प्रकुचितः प्रकोचितवान् । रुदितम् रोदितम् अनेन । प्ररुदितः, प्ररोदितः । उति इति किम् ? श्विनितम् अनेन । 'शव्' अर्ह-अदादेः इति किम् ? गुधितम् अनेन । भाव-आरम्भे इति किम् ? रुचितः कार्षापणः । सेटौ इति किम् ? प्ररूढः ॥ २९ ॥

**न शीङ्-डीङ्-पूङ्-धृषि-क्ष्विदि-स्विदि-मिदः । ३० ।**

एभ्यः परौ सेटौ क्त-क्तवतू किद्वत् न भवतः ।

शयितः । डयितः । पवितः । धर्षितः । प्रक्ष्वेदितः । प्रस्वेदितः । प्रमेदितः ? शयित-

वान् इत्यादि । शीङ्-पूङ्-डीङाम् अनुबन्धोच्चारणात् यङः श्लुचि न प्रतिषेधः—शेशियितः । डेडितः । पोपुवितः । सेटौ इति किम् ? डीनः, डीनवान् ॥ ३० ॥

## मृषः क्षान्तौ । ३१ ।

क्षान्तौ वर्तमानात् मृषः सेटौ क्त-क्तवतू किद्वत् न भवतः ।

मर्षितः, मर्षितवान् । क्षान्तौ इति किम् ? अपमृषितं वाक्यम् आह । सेटौ इति किम् ? मृष्टः ॥ ३१ ॥

## क्त्वा । ३२ ।

धातोः परः क्त्वा सेट् किद्वत् न भवति ।

देवित्वा । सेट् इति किम् ? कृत्वा ॥ ३२ ॥

## स्कन्द-स्यन्दः । ३३ ।

आभ्यां क्त्वा किद्वत् न भवति ।

स्कन्त्वा । स्यन्त्वा । अनिडर्थं वचनम् ॥ ३३ ॥

## क्षुध-क्लिश-कुष-गुध-मृड-मृद-वद-वसः । ३४ ।

एभ्यः क्त्वा सेट् किद्वत् न भवति ।

क्षुधित्वा । क्लिशित्वा । कुषित्वा । गुधित्वा । मृडित्वा । मृदित्वा । उदित्वा । उषित्वा ॥ ३४ ॥

## रुद-विद-मुष-ग्रह-स्वप-प्रच्छः सन् च । ३५ ।

एभ्यः सन् क्त्वा च किद्वत् भवति ।

रुरुदिषति । विविदिषति । मुमुषिषति । जिघृक्षति । सुषुप्सति । पिपृच्छिषति । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा । सुप्त्वा । पृष्ट्वा ॥ ३५ ॥

## इकः अनिट् । ३६ ।

'इक्'अन्तात् धातोः अनिट् सन् किद्वत् भवति ।

चिचीषति । लुलूषति । इकः इति किम् ? पिपासति । अनिट् इति किम् ? शिशयिषते ॥ ३६ ॥

## व्यञ्जनात् । ३७ ।

इकः परं यद् व्यञ्जनम् तदन्तात् धातोः अनिट् सन् किद्वत् भवति ।

बिभित्सति ॥ ३७ ॥

## सिच्-आशिषौ आत्मने । ३८ ।

इकः परं यद् व्यञ्जनम् तदन्तात् धातोः परे[१] सिच्-आशिषौ आत्मनेपदविषये अनिटौ किद्वत् भवतः ।

अभित्त । भित्सीष्ट । आत्मने इति किम् ? अस्राक्षीत् । अनिटौ इति किम् ? अवर्तिष्ट ? वर्तिषीष्ट । व्यञ्जनात् इति किम् ? अचेष्ट । चेषीष्ट ॥ ३८ ॥

## ऋवर्णात् । ३९ ।

ऋवर्णात् धातोः परे अनिटौ सिच्-आशिषौ आत्मनेपदविषये किद्वत् भवतः ।

अकृत । कृषीष्ट । अतीर्ष्ट । तीर्षीष्ट । अनिटौ इति किम् ? वरिषीष्ट ॥ ३९ ॥

## गमः वा । ४० ।

गमः परे आत्मनेपदविषये सिच्-आशिषौ वा किद्वत् भवतः ।

समगत, समगंस्त । संगसीष्ट, संगंसीष्ट ॥ ४० ॥

## यमः सिच विवाहे । ४१ ।

'विवाह'अर्थात् यमेः आत्मनेपदविषयः सिच् किद्वत् वा भवति ।

उपायत, उपायंस्त कन्याम् । विवाहे इति किम् ? अयंस्त पादौ ॥ ४१ ॥

## सूचने । ४२ ।

'सूचन'अर्थात् यमेः आत्मनेपदविषयः सिच् किद्वत् भवति ।

उदायत—सूचितवान् इत्यर्थः ॥ ४२ ॥

## हन्तेः । ४३ ।

हन्तेः आत्मनेपदविषयः सिच् किद्वत् भवति ।

आहत ॥ ४३ ॥

## दा-स्थोः इच् । ४४ ।

अनयोः आत्मनेपदविषयः सिच् किद्वत् भवति, तद्योगे च अनयोः इकारः अन्तादेशः ।

अदित । अधित । अस्थित ॥ ४४ ॥

## व्यञ्जनात् यः अशिति लुक् । ४५ ।

व्यञ्जनान्तात् धातोः परस्य यकारस्य अशिति प्रत्यये परे लुग् भवति ।

---

१ स्त्रीलिङ्गे द्विवचनम् सिच्-आशिषौ इत्यस्य विशेषणम् ।

बेभिदिता । व्यञ्जनात् इति किम् ? लोलूयिता । अशिति इति किम् ? बेभिद्यते । धातोः परस्य इति किम् ? ईर्ष्यिता ॥ ४५ ॥

## क्तिः वा । ४६ ।

व्यञ्जनात् परस्य क्तिः यकारस्य अशिति प्रत्यये परे वा लुग् भवति ।

समिधिष्यति, समिध्यिष्यति । दृषदिता, दृषद्यिता । अशिति इति किम् ? समिध्यति ॥ ४६ ॥

## दरिद्रः अद्यतन्याम् । ४७ ।

दरिद्रातेः अद्यतन्यां विषये वा लुग् भवति ।

अदरिद्रीत्, अदरिद्रासीत् ॥ ४७ ॥

## अवुञ्-वुण्-स्मञन्ते । ४८ ।

दरिद्रातेः 'वुञ्'आदिवर्जिते अशिति प्रत्यये विषयभूते लुग् भवति ।

दरिद्यते । दुर्दरिद्रः । अशिति इति किम् ? दरिद्राति । 'वुञ्'आदिप्रतिषेधः किम् ? दरिद्रायकः[1] । दरिद्रायकः[2] । दरिद्रायकः[3] याति । दिदरिद्रासति । दरिद्राणम् ॥ ४८ ॥

## अतः । ४९ ।

अदन्तात् धातोः विहिते अशिति प्रत्यये परे पूर्वस्य अकारस्य लुग् भवति ।

कथयति । चिकित्सिता । विहितविशेषणम् किम् ? ततः ॥ ४९ ॥

## णेः अनिटि । ५० ।

अनिटि अशिति प्रत्यये परे णेः लुग् भवति ।

आटिटत् । अनिटि इति किम् ? कारयिता ॥ ५० ॥

## सेटोः क्तयोः । ५१ ।

सेटोः क्त-क्तवत्वोः परयोः णेः लुग् भवति ।

गणितः । गणितवान् ॥ ५१ ॥

## आम्-आलु-अन्त-अय्य-इत्नौ अय् । ५२ ।

एषु परेषु णेः अय् आदेशो भवति ।

---

१ अत्र प्रश्नादिअर्थबोधकः णक-वुञ्-प्रत्ययः । २ अत्र केवलं कर्तृसूचकः वुञ् प्रत्ययः । ३ अत्र क्रियायां क्रियार्थायां वुञ् प्रत्ययः ।

कारयामास । स्पृहयालुः । मण्डयन्तः । महयाय्यः । स्तनयित्नुः ॥ ५२ ॥

**लघोः व्यञ्जनात् यपि । ५३ ।**

लघोः परं यद् व्यञ्जनम् तस्मात् परस्य णेः यपि परे अय् आदेशो भवति ।

प्रशमय्य । लघोः इति किम् ? प्रतिपाद्य । वचनात् एकेन वर्णेन व्यवधानम् ॥५३॥

**वा आप्नोतेः । ५४ ।**

आप्नोतेः परस्य णेः यपि परे वा अय् भवति ।

प्रापय्य, प्राप्य । आप्नोतेः इति किम् ? अध्याप्य ॥ ५४ ॥

**मेङः मित् । ५५ ।**

मेङः यपि परे मित् आदेशो वा भवति ।

अपमाय, अपमित्य ॥ ५५ ॥

**क्षेः क्षीः । ५६ ।**

क्षेः यपि परे क्षी आदेशो भवति ।

प्रक्षीय ॥ ५६ ॥

**दो-सो-मा-स्थाम् क्किति तादौ इत् । ५७ ।**

एषां क्किति 'तकार'आदौ प्रत्यये परे इकारः अन्तादेशो भवति ।

दितिः । सितः । मितः । स्थित्वा ॥ ५७ ॥

**शः व्रते । ५८ ।**

व्रतविषयस्य श्यतेः क्किति 'तकार'आदौ प्रत्यये परे इत् भवति ।

संशितः व्रते । संशितः व्रती ॥ ५८ ॥

**छः च वा । ५९ ।**

छ्यतेः श्यतेश्च क्किति 'तकार'आदौ प्रत्यये परे इः वा भवति ।

अवच्छातः, अवच्छितः । निशातः, निशितः ॥ ५९ ॥

**दत् दः अधः । ६० ।**

धावर्जितस्य दासंज्ञकस्य धातोः क्किति 'तकार'आदौ प्रत्यये परे दत् आदेशो भवति ।

दत्तम् । दासंज्ञकस्य इति किम् ? दातं बर्हिः ॥ ६० ॥

## स्वरात् उपसर्गात् तश् । ६१ ।

'स्वर'अन्तात् उपसर्गात् परस्य दासंज्ञकस्य धावर्जितस्य किति 'तकार'आदौ प्रत्यये परे तश् आदेशो भवति । शकारः सर्वादेशार्थः ।

प्रत्तः । प्रत्तवान् । स्वरात् इति किम् ? निर्दत्तम् । दासंज्ञकस्य इति किम् ? दातं बर्हिः । अवदातं मुखम् ॥ ६१ ॥

## प्रदाञः ते वा आरम्भे । ६२ ।

प्रात् परस्य दाञः आरम्भे विहिते तकारे परे तश् आदेशो भवति वा ।

प्रत्तम्, प्रदत्तम् । प्रात् इति किम् ? परीत्तम् । आरम्भे इति किम् ? प्रत्तम् ॥६२॥

## नि-वि-सु-अनु-अवात् । ६३ ।

एभ्यः परस्य दाञः ते परे तश् आदेशो भवति वा ।

नीत्तम्, निदत्तम् । वीत्तम्, विदत्तम् । सूत्तम्, सुदत्तम् । अनूत्तम्, अनुदत्तम् । अवात्तम्, अवदत्तम् । अनारम्भार्थः योगः ॥ ६३ ॥

## धाञः हिः । ६४ ।

धाञः 'तकार'आदौ किति प्रत्यये परे हिः आदेशो भवति ।

हितः । ञकारः धेट्निवृत्त्यर्थः—धीतः ॥ ६४ ॥

## हाकः त्वि । ६५ ।

हाकः त्वाप्रत्यये परे हिः आदेशो भवति ।

हित्वा । ककारः 'हाङ्'निवृत्त्यर्थः—हात्वा । त्वि इति किम् ? हीनः ॥ ६५ ॥

## यपि च अदः जग्ध् । ६६ ।

अदः 'तकार'आदौ किति प्रत्यये परे यपि च जग्ध् आदेशो भवति ।

जग्धिः । जग्धः । जग्धवान् । प्रजग्ध्य । 'किति तादौ' इत्येव सिद्धे 'यप्' ग्रहणम् अन्तरङ्गात् अपि कार्यान्तरात् प्रागेव यप् भवति इति ज्ञापनार्थम्, तेन 'प्रशमय्य' इत्यादौ दीर्घादि न भवति । अन्नम् इति अदेः औणादिको नः ॥ ६६ ॥

## घस्लृ घञ्-अद्यतनी-सन्-अच्-अलि । ६७ ।

अदेः 'घञ्' आदिषु परेषु घस्लृ आदेशो भवति ।

घासः । अघसत् । जिघत्सति । घसः । अल्—प्रघसः । लृकारः लृदित्कार्यार्थः ॥६७॥

**वा परोक्षायाम् । ६८ ।**

अदेः परोक्षायां परतः वा घस्लृ आदेशो भवति ।

जघास, जक्षतुः । आद, आदतुः ॥ ६८ ॥

**वेञः वय् । ६९ ।**

वेञः परोक्षायां वय् आदेशो वा भवति ।

उवाय, ऊयतुः । ववौ, ववतुः ॥ ६९ ॥

**वीः अजः अन-अयव्यञ्जने । ७० ।**

अजतेः अनप्रत्यये यकारवर्जितव्यञ्जनादौ च अशिति प्रत्यये परे वीः आदेशो वा भवति ।

प्राजनः दण्डः, प्रवयणः दण्डः । प्राजितुम् , प्रवेतुम् । प्राजिता, प्रवेता । प्राजितव्यम् प्रवेतव्यम् ॥ ७० ॥

**अघञ्-अल्-क्यप्-अचि । ७१ ।**

घञ्-अल् क्यप्-अच्वर्जिते अशिति प्रत्यये परे वी आदेशो नित्यं भवति ।

वीयात् । विवाय । वीयते । प्रवेयम् । प्रवायकः । अघञ्-अल्-क्यप्-अचि इति किम्? समाजः । समजः । समज्या । अजति इति अजः ॥ ७१ ॥

**सः तः सि । ७२ ।**

धातोः सकारान्तस्य अशिति सकारादौ प्रत्यये तः स्यात् ।

अवात्सीत् । वत्स्यति । अवत्स्यत् । व्यतिवत्सीष्ट । विवत्सति । सः इति किम् ? यक्षीष्ट । सि इति किम्? वसिषीष्ट ॥ ७२ ॥

**दीङः यक् क्ङिति अचि । ७३ ।**

दीङः क्ङिति अशिति अचि स्वरे प्रत्यये परे यक् आगमः भवति ।

उपदिदीये । उपदिदीयाते । अचि इति किम्? उपदेदीयते । क्ङिति इति किम्? उपदानम् ॥ ७३ ॥

**इट्-एत्-पुसि च आतः लुक् । ७४ ।**

आदन्तस्य धातोः अशिति स्वरादौ क्ङिति इटि एति पुसि च परे लुक् भवति ।

पपुः । अदधत् । पपिथ । व्यतिरे । अयुः । अशिति इति किम्? यान्ति ॥ ७४ ॥

## संयोगात् आशिषि एत् वा । ७५ ।

संयोगात् परः यः आकारः तदन्तस्य धातोः क्ङिति आशिषि परायाम् एकारः अन्तादेशो भवति वा ।

ग्लेयात्, ग्लायात् । क्ङिति इति किम् ? ग्लासीष्ट ॥ ७५ ॥

## दा-मा-गा-पा-स्था-हाकः । ७६ ।

एषां क्ङिति आशिषि परायाम् एकारः अन्तादेशो भवति ।

देयात् । धेयात् । मेयात् । गेयात् । पेयात् । स्थेयात् । हेयात् । 'दा'इति दासंज्ञकस्य ग्रहणात् इह न भवति—दायात् केदारम् । अवदायात् भूमिम् । 'पा'इति पिबतेः ग्रहणम् न पातेः आदादिकत्वात्—पायात् ॥ ७६ ॥

## अयपि व्यञ्जने ईः । ७७ ।

'दा'संज्ञकआदीनां 'यप्'वर्जिते व्यञ्जनादौ क्ङिति अशिति प्रत्यये परे ईकारः अन्तादेशो भवति ।

दीयते । धीयते । मीयते । गीयते । पीयते । स्थीयते । हीयते । अयपि इति किम् ? अवदाय । अपहाय । क्ङिति इति किम् ? दाता ॥ ७७ ॥

## घ्रा-ध्मोः यङि । ७८ ।

घ्रा-ध्मोः यङि इकारः अन्तादेशो भवति ।

जेघ्रीयते । देध्मीयते । जाघ्राति, दाध्माति इत्यत्र यङभावात् न भवति ॥ ७८ ॥

## हनः वा घ्नी वधे । ७९ ।

हन्तेः वधे वर्तमानस्य यङि परे घ्नी इत्यादेशो वा भवति ।

जेघ्नीयते, जङ्घन्यते ॥ ७९ ॥

## अस्ति-ब्रुवोः भू-वचौ । ८० ।

अनयोः अशिति प्रत्यये विषयभूते यथासंख्यं भू वच इति आदेशौ भवतः ।

अभूत् । अवोचत् । अशिति इति किम् ? अस्ति । ब्रूते ॥ ८० ॥

## चक्षः क्शाञ् ख्याञ् वाचि । ८१ ।

वाचि वर्तमानस्य चक्षः अशिति प्रत्यये विषयभूते क्शाञ् ख्याञ् आदेशौ भवतः ।

आक्शास्यति । आक्शास्यते । आख्यास्यति । आख्यास्यते । वाचि इति किम् ? बोधे—विचक्षणः । वर्जने—परिसंचक्ष्यः । वधे नृचक्षी राक्षसः । ञकारः फलेशे कर्तरि आत्मनेपदार्थः ॥ ८१ ॥

## भ्रस्जः असः अर् । ८२ ।

भ्रस्जः धातोः संबन्धिनः 'अस्' इति अवयवस्य अशिति प्रत्यये विषयभूते अर् आदेशो वा भवति ।

भ्रष्टा, भर्ष्टा । भृष्टः, भृज्ज्यते बरीभृज्यते. इत्यादौ 'अर्' आदेशे कृते संप्रसारणम् ॥ ८२ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते षष्ठः पादः समाप्तः ॥

*

## आख्याते सप्तमः पादः

**व्यञ्जनादेः अत्र-उणादि-घोषवतः इट् । १ ।**

धातोः परस्य अशितः प्रत्ययस्य व्यञ्जनादेः इट् आगमो भवति, न तु त्रस्य उणादेः घोषवतश्च ।

लविता । अत्र-उणादि-घोषवतः इति किम् ? शस्त्रम् । भन्यम् । ईश्वरः । तन्तुः । जन्तुः । ॥ १ ॥

**तेः ग्रहादिभ्यः । २ ।**

ग्रहादेः परस्य तेः अशितः प्रत्ययस्य इट् आगमो भवति ।

गृहीतिः । उपस्निहितिः । 'ग्रह'आदयः प्रयोगगम्याः । 'ग्रहादेः एव' इति नियमार्थं वचनम् ॥ २ ॥

**ग्रहेः एकस्वरात् अपरोक्षायां दीर्घः । ३ ।**

ग्रहेः एकस्वरात् परस्य इटः दीर्घो भवति न तु परोक्षायाम् ।

ग्रहीता । एकस्वरात इति किम् ? जरीग्रहिता । अपरोक्षायाम् इति किम् ? जगृहिव ॥ ३ ॥

**वा वृ-ऋतः न आशीः-परस्मैसिचि च । ४ ।**

वृञ्-वृङ्याम् ॠदन्तेभ्यश्च परस्य इटः वा दीर्घो भवति, न तु आशिषि, परस्मैपद-विषये च सिचि, परोक्षायां च ।

प्रावरीता, प्रावरिता । वरीता, वरिता । तरीता, तरिता । न आशीः-परस्मैसिचि च इति किम् ? प्रावरिषीष्ट । आस्तरिषीष्ट । प्रावारिष्ट । आस्तारिष्ट । प्राववरिथ । तेरिथ ॥ ४ ॥

**सिच्-आशिषोः आत्मने इट् । ५ ।**

वृङ्याम् ॠदन्तेभ्यश्च परयोः आत्मनेपदविषययोः सिच्-आशिषोः इट् आगमो वा भवति ।

प्रावृत, प्रावरिष्ट । अवृत, अवरिष्ट । आस्तीर्ष्ट, आस्तरिष्ट । प्रावरिषीष्ट, प्रावृषीष्ट । वृषीष्ट, वरिषीष्ट । आस्तीर्षीष्ट, आस्तरिषीष्ट । आत्मनेपदे इति किम् ? प्रावारीत् । अतारीत् ॥५॥

**संयोगात् ऋतः । ६ ।**

धातोः संयोगात् परो यः ऋत् तदन्तात् धातोः आत्मनेपदविषये सिच्-आशिषोः इट् वा भवति ।

अस्मृषाताम्, अस्मरिषाताम् । स्मृषीष्ट, स्मरिषीष्ट । धातोः संयोगात् इति किम्? निष्कृषीष्ट । आत्मने इति किम्? अस्मार्षीत् ॥ ६ ॥

## रधादि-औदित्-धूञः । ७ ।

रधादेः औदितः धूञश्च परस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् वा भवति ।

रद्धा, रधिता । दिवाद्यन्तर्गणो रधादिः । गोप्ता, गोपिता । धूञ्—धोता, धविता ॥७॥

## अञ्जः असिचः । ८ ।

अञ्जेः परस्य असिचः व्यञ्जनादेः अशितः प्रत्ययस्य इट् वा भवति ।

अङ्क्ता, अञ्जिता । असिचः इति किम्? आञ्जीत् ॥ ८ ॥

## निष्कुषः । ९ ।

'निस्'पूर्वात् कुषेः परस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् वा भवति ।

निष्कोष्टा, निष्कोषिता । 'निस्'ग्रहणम् किम्? कोषिता ॥ ९ ॥

## क्तयोः । १० ।

निष्कुषः परयोः क्त-क्तवत्वोः इट् भवति ।

निष्कुषितः । निष्कुषितवान् ॥ १० ॥

## न डीय-श्वि-ऐदितः । ११ ।

डीय-श्विभ्याम् ऐदितश्च परयोः क्त-क्तवत्वोः इट् न भवति ।

डीनः । डीनवान् । शूनः । शूनवान् । उद्विग्नः । उद्विग्नवान् । 'कृन्तति'आदेः विकल्पेट्त्वे अपि ऐदित्त्वं यङ्लुगर्थम्—चरीकृत्तः । चरीकृत्तवान् । 'डीय' इति निर्देशात् डयते' न प्रतिषेधः—डयितः । डयितवान् ॥ ११ ॥

## वेटः अपतेः । १२ ।

'पति'वर्जात् विकल्पितेटः परयोः क्त-क्तवत्वोः इट् न भवति ।

रद्धः । रद्धवान् । अपतेः इति किम्? पतितः । पतितवान् । 'एकस्वरात्' इति वर्तते—दरिद्रितः ॥ १२ ॥

## सम्-नि-वेः अर्दः । १३ ।

सम्-नि-विभ्यः परात् अर्देः परयोः क्त-क्तवत्वोः इट् न भवति ।

समर्णः । न्यर्णः । समर्णवान् । सम्-नि-वेः इति किम्? अर्दितः ॥ १३ ॥

## 'अभ्यर्ण'आदिः । १४ ।

'अभ्यर्ण'आदय : 'क्त'अन्ता यथादर्शनम् 'इट्'आदिअभावेन निपात्यन्ते ।

'अभि'पूर्वस्य अर्देः —अभ्यर्णः अविदूरः । अन्यत्र न भवति—अभ्यर्दितः शीतेन । दृहेः दृंहेः वा दृढः स्थूलः बली वा । अन्यत्र दृहितम् दृंहितम् वा । कषः कृच्छ्र-गहने—कष्टम् दुःखम् । कष्टं वनम् । कृच्छ्र-गहनाभ्याम् अन्यत्र कषितः । घुषः अविशब्दे—घुष्टा रज्जुः । अन्यत्र घुषितं वाक्यम् । शसि-धृषः प्रगल्भे—शस्तः धृष्टः—प्रगल्भ इत्यर्थः । अन्यत्र शसितः, धर्षितः । लगतेः लग्नम् । म्लेच्छतेः म्लिष्टम्—अस्पष्टम् । स्वनेः स्वान्तं मनः । ध्वनेः ध्वान्तं तमः । क्षुभेः मन्थे—क्षुब्धः समुद्रः । क्षुब्धं वल्लवैः । रिभेः सौत्रस्य रेभृङो वा 'वि'पूर्वस्य—विरिब्धः स्वरः । फणेः फाण्टम् यद् अश्रपितं पिष्टम् उदकसंपर्कमात्रात् विभक्तरसकषायम् । अपरे "अग्निना तप्तं यत् किञ्चिद उष्णं तत् फाण्टम् " [ ] इत्याहुः । बाहेः बाढम्—भृशम् । 'परि'पूर्वस्य बृहः बृंहेर्वा परिवृढ प्रभुः । क्षीवृञः केवलस्य क्षीबः । लाघृङः 'उत्'पूर्वस्य उल्लाघः कृशः । केवलस्य 'परि' पूर्वस्य च कृशः कृशः, परिकृशः । 'त्रिफला' इत्येतस्य केवलस्य 'उत्'पूर्वस्य 'सम' पूर्वस्य च फुल्लः उत्फुल्लः संफुल्लः । अर्थान्तरे उपसर्गाधिक्ये च न भवति—लगितः । प्रक्षीवितः । प्रोल्लाघितः ॥ १४ ॥

## 'आत्'इतः । १५ ।

'आत्'इतः धातोः परयोः क्त-क्तवत्वोः इट् न भवति ।

मिन्नः । मिन्नवान् ॥ १५ ॥

## वा भाव-आरम्भे । १६ ।

'आत्'इतः परयोः भाव-आरम्भार्थयोः क्त-क्तवत्वोः इट् वा भवति ।

मिन्नम् मेदितम् अनेन । प्रमिन्नः प्रमेदितः । प्रमिन्नवान् प्रमेदितवान् ॥ १६ ॥

## जप-श्वस-वम-रुषि-अम-त्वर-संघुष-आस्वनः । १७ ।

एभ्यः परयोः क्त-क्तवत्वोः इट् वा भवति ।

जप्तः, जपितः । श्वस्तः, श्वसितः । वान्तः, वमितः । रुष्टः, रुषितः । अभ्यान्तः, अभ्यमितः । तूर्णः, त्वरितः । संघुष्टौ, संघुषितौ । अविशब्देऽपि परत्वात् अयमेव विकल्पः । आस्वान्तम्, आस्वनितम् । एवम् क्तवति अपि उदाहार्यम् ॥ १७ ॥

## 'अपचित'आदिः । १८ ।

'अपचित'आदिः यथादर्शनम् 'इट्'आदिअभावेन वा निपात्यते ।

तृअपा चायेः अपचितः, अपचायितः ।

हृषेः केश-लोम-विस्मय-प्रतीघाते—हृष्टाः हृषिताः केशाः लोमानि वा । हृष्टः हृषितः देवदत्तः विस्मितः इत्यर्थः । हृष्टाः हृषिताः दन्ताः—प्रतिहता इत्यर्थः ।

शकेः कर्मणि—शक्तः शकितो वा घटः कर्तुम् । कर्मणः अन्यत्र शक्तश्चैत्रः ।

णौ दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-च्छन्न-ज्ञप्ताः वा । दान्तः, दमितः । शान्तः, शमितः । पूर्णः, पूरितः । दस्तः, दासितः । स्पष्टः, स्पाशितः । छन्नः, छादितः । ज्ञप्तः, ज्ञपितः ॥ १८ ॥

## जॄ-व्रश्चोः क्त्वः । १९ ।

आभ्यां परस्य क्त्वाप्रत्ययस्य इट् भवति ।

जरित्वा । वृश्चित्वा । 'जॄ'इति जॄणातेः ग्रहणम् न जॄषः सानुबन्धत्वात् ॥ १९ ॥

## 'ऊत्'इतः वा । २० ।

'ऊत्'इतः क्त्वाप्रत्ययस्य वा इट् भवति ।

शान्त्वा, शमित्वा ॥ २० ॥

## क्त-क्तवाम् क्षुध-वसः । २१ ।

क्षुध-वसिभ्यां परयोः क्त-क्तवत्वोः क्त्वाप्रत्ययस्य च इट् भवति ।

क्षुधितः । क्षुधितवान् । क्षुधित्वा । उषितः । उषितवान् । उषित्वा ॥ २१ ॥

## लुभि-अञ्चेः विमोह-अर्चे । २२ ।

लुभि-अञ्चिभ्यां यथासंख्यं विमोह-अर्चाअर्थाभ्यां परेषां क्त-क्तवतु-क्त्वाम् इट् भवति ।

विलुभितः । विलुभितवान् । लुभित्वा । अञ्चितः गुरुः । अञ्चितवान् । अञ्चित्वा गुरुम् । विमोह-अर्चे इति किम् ? लुब्धो जाल्मः । उदक्तम् उदकं कूपात् ॥ २२ ॥

## पूङ्-क्लिशिभ्यो वा । २३ ।

पूङ्-क्लिशिभ्यां परेषां क्त-क्तवतु-क्त्वाम् इट् वा भवति ।

पूतः, पूतवान् , पूत्वा, पवितः, पवितवान् , पवित्वा । क्लिष्टः, क्लिष्टवान् , क्लिष्ट्वा, क्लिशितः, क्लिशितवान् , क्लिशित्वा । बहुवचनम् क्लिशिद्वयस्यापि परिग्रहार्थम् ॥ २३ ॥

## सह-लुभ-इच्छ-रुष-रिषः तः । २४ ।

एभ्यः परस्य तकारादेः अशितः प्रत्ययस्य इट् वा भवति ।

सोढा, सहिता । लोब्धा, लोभिता । एष्टा, एषिता । रोष्टा, रोषिता । रेष्टा, रेषिता । तः इति किम् ? सहिष्यते ॥ २४ ॥

### इव्-ऋध-दम्भ-भ्रस्ज-सनि-तनि-पति-ज्ञपि-श्रि-यु-ऊर्ण-भर-दरिद्रा-स्तृ-वृ-ऋतः सन् । २५ ।

'इव्'अन्तात् 'ऋध्'आदिभ्यः ऋदन्तेभ्यश्च परस्य सन् इट् वा भवति । दुद्यूषति, दिदेविषति । ईर्त्सति, अर्दिधिषति । धीप्सति, दिदम्भिषति । बिभर्क्षति, बिभर्जिषति । सिषासति, सिसनिषति । तितांसति, तितनिषति । पित्सति, पिपतिषति । ज्ञीप्सति, जिज्ञपयिषति । शिश्रीषति, शिश्रयिषति । युयूषति, यियविषति । प्रोर्णुनूषति, प्रोर्णुनविषति । बुभूर्षति, बिभरिषति । दिदरिद्रासति, दिदरिद्रिषति । सुस्तूर्षति, सिस्तरिषति । प्राबुवूर्षति, प्राविवरिषति । वुवूर्षते, विवरिषते । तितीर्षति, तितरिषति । 'चिकीर्षति' इत्यादौ लाक्षणिकत्वात् न भवति ॥ २५ ॥

### ऋ-स्मि-पूङ्-अञ्ज्-अशौ-कॄआदेः । २६ ।

पृथग्योगात् वा इति निवृत्तम् । एभ्यः परस्य सनः इट् भवति ।

अरिरिषति । सिस्मयिषते । पिपविषते । अञ्जिजिषति । अशिशिषते । चिकरीषति । जिगरीषति । तुदादिअन्तर्गणः 'कॄ'आदिः ॥ २६ ॥

### हन्-ऋतः स्यस्य । २७ ।

हनेः ऋदन्तात् च परस्य 'स्य'शब्दादेः अशितः प्रत्ययस्य इट् भवति ।

हनिष्यति । करिष्यति ॥ २७ ॥

### घस्-एकस्वर-आतः क्वसः । २८ ।

घसेः एकस्वरात् 'आत्'अन्तात् च परस्य च क्वसोः अशितः इट् भवति ।

जक्षिवान् । आशिवान् । ययिवान् । घस्-एकस्वर-आतः इति किम्? बिभिद्वान् ॥ २८ ॥

### गम्-हन्-विद-विश-दृशः वा । २९ ।

एभ्यः क्वसौ वा इट् भवति ।

जगन्वान्, जग्मिवान् । जघन्वान्, जघ्निवान् । विविद्वान्, विविदिवान् । विविश्वान्, विविशिवान् । ददृश्वान्, ददृशिवान् ॥ २९ ॥

### 'कृत'आदेः सः असिचः । ३० ।

'कृत्'आदेः परस्य सकारादेः असिचः अशितः प्रत्ययस्य इट् वा भवति ।

कर्त्स्यति, कर्तिष्यति । नर्त्स्यति, नर्तिष्यति । असिचः इति किम्? अकर्तीत् । कृत् चृत् छृत् तृद नृत् इति 'कृत्'आदिः ॥ ३० ॥

**गमः । ३१ ।**

गमेः परस्य सकारादेः अशितः प्रत्ययस्य इट् वा भवति ।

संजिगंसिता, संजिगमिषिता ॥ ३१ ॥

**परस्मै । ३२ ।**

गमेः परस्य सकारादेः अशितः प्रत्ययस्य परस्मैपदे इट् भवति ।

गमिष्यति । अगमिष्यत् ॥ ३२ ॥

**न वृद्भ्यः । ३३ ।**

परस्मैपदनिमित्तात् 'वृत्'आदेः परस्य अशितः प्रत्ययस्य इट् न भवति ।

वर्त्स्यति । स्यंत्स्यति । परस्मै इति किम् ? वर्तिष्यते । द्युतादिअन्तर्गणः वृतादिः ॥ ३३ ॥

**गम्-स्नोः अनाम-आत्मने । ३४ ।**

गमि-स्नुभ्याम् परस्य अशितः प्रत्ययस्य इट् न भवति अनामधातोः संबन्धिनि आत्मनेपदे सति ।

गंस्यते । गंस्यमानः । अधिजिगांसिष्यमाणः । अनाम-आत्मने इति किम् ? संजिगमिषिता । प्रस्नवितव्यम् । 'अनाम'ग्रहणं किम् ? जिगमिषत्रीयते ॥ ३४ ॥

**क्रमः । ३५ ।**

क्रमः परस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति अनामधातोः संबन्धिनि आत्मनेपदे सति ।

प्रक्रंस्यते । अनात्मने इति किम् ? क्रमिता ॥ ३५ ॥

**तुः । ३६ ।**

अनात्मनेपदविषयात् क्रमेः परस्य 'तृ'प्रत्ययस्य इट् न भवति ।

क्रन्ता । अनात्मने इति किम् ? क्रमिता । क्रमित्रीयते ॥ ३६ ।

**विन्द-विध-हनि-वसि-शकि-प्रच्छ-घसः । ३७ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

विन्द–वेत्ता । विध–वेत्ता । हन्ता । वस्ता । शक्ता । प्रष्टा । जिघत्सति ॥ ३७ ॥

**मुचि-रिचि-सिचि-विचि-पचि-वचेः । ३८ ।**

एभ्यः व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

मोक्ता । रेक्ता । सेक्ता । वेक्ता । पक्ता । वक्ता ॥ ३८ ॥

**युजि-रुजि-रञ्जि-भुजि-भजि-भञ्जि-सञ्जि-त्यजि-भ्रस्जि-यजि-मस्जि-सृजि-निजि-विजि-ष्वजेः । ३९ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

योक्ता । रोक्ता । रङ्क्ता । भोक्ता । भक्ता । भङ्क्ता । सङ्क्ता । त्यक्ता । भ्रष्टा । यष्टा । मङ्क्ता । स्रष्टा । नेक्ता । वेक्ता । स्वङ्क्ता ॥ ३९ ॥

**अदि-तुदि-नुदि-क्षुदि-स्विदि-शदि-सदि-हदि-पदि-स्कन्दि-भिदि-छिदः । ४० ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

अत्ता । तोत्ता । नोत्ता । क्षोत्ता । स्वेत्ता । शत्ता । सत्ता । हत्ता । पत्ता । स्कन्ता । भेत्ता । छेत्ता ॥ ४० ॥

**राधि-रुधि-क्रुधि-क्षुधि-बन्धि-व्यधि-शुधि-बुधि-युधि-साधेः । ४१ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

राद्धा । रोद्धा । क्रोद्धा । क्षोद्धा । बन्द्धा । व्यद्धा । शोद्धा । बोद्धा । योद्धा । साद्धा । ॥ ४१ ॥

**आपि-तपि-तिपि-स्वपि-वपि-लपि-लिपि-क्षिपि-छुपि-लुपि-शपि-सृपेः । ४२ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

आप्ता । तप्ता । तेप्ता । स्वप्ता । वप्ता । लप्ता । लेप्ता । क्षेप्ता । छोप्ता । लोप्ता । शप्ता । सर्प्ता ॥ ४२ ॥

**यभि-रभि-लभेः । ४३ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

यब्धा । रब्धा । लब्धा ॥ ४३ ॥

**यमि-रमि-नमि-गमेः । ४४ ।**

एभ्यः व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

यन्ता । रन्ता । नन्ता । गन्ता । ॥ ४४ ॥

**रिशि-रुशि-क्रुशि-लिशि-विशि-स्पृशि-मृशि-दृशि-दंशेः । ४५ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

रेष्टा । रोष्टा । क्लेष्टा । लेष्टा । वेष्टा । स्प्रष्टा । म्रष्टा । द्रष्टा । दंष्टा । ॥ ४५ ॥

**त्विषि-शिषि-शुषि-कृषि-पिषि-विषि-तुषि-दुषि-द्विषेः । ४६ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

त्वेष्टा । शेष्टा । शोष्टा । क्रष्टा । पेष्टा । वेष्टा । तोष्टा । दोष्टा । द्वेष्टा ॥ ४६ ॥

**दहि-दिहि-दुहि-मिहि-मुहि-रुहि-लुहि-नहि-वहेः । ४७ ।**

एभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

दग्धा । देग्धा । दोग्धा । मेढा । मोग्धा । रोढा । लोढा । नद्धा । वोढा ॥ ४७ ॥

**स्विदि-मिदि-खिदि-श्लिषि-पुषः श्ये । ४८ ।**

एभ्यः श्यविकरणेभ्यः विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति ।

स्वेत्ता । मेत्ता । खेत्ता । श्लेष्टा । पोष्टा । श्ये इति किम् । स्वेदिता ॥ ४८ ॥

**ऋवर्ण-श्रि-ऊर्णुञः किति । ४९ ।**

ऋवर्णात् श्रेः ऊर्णुञश्च परस्य [1]विहितस्य प्रत्ययस्य इट् न भवति ।

भृतम् । तीर्त्वा । श्रितः । ऊर्णुतः । एकस्वरात् इति वर्तते तेन इह न प्रतिषेधः- जागरितः । किति इति किम् । वरिता ॥ ४९ ॥

**उवर्णात् । ५० ।**

उवर्णान्तात् विहितस्य कितः अशितः प्रत्ययस्य इट् न भवति ।

युतः । लूनः ॥ ५० ॥

**ग्रह-गुहश्च सनः । ५१ ।**

आभ्याम् उवर्णाच्च परस्य सनः इट् न भवति । जिघृक्षति । जुघुक्षति । रुरूषति । लुलूषति ॥ ५१ ॥

**स्वार्थे । ५२ ।**

स्वार्थे विहितस्य सनः इट् न भवति ।

जुगुप्सति ॥ ५२ ॥

**स्वरात् अश्वि-श्रि-डीङ्-शीङ्-रु-क्षु-वृ-ऋत्-ऊत्-अतः । ५३ ।**

१ "किति प्रत्यये विहिते"—अमोघ० ४ । ३ । १८९ ।

स्वरान्तात् 'श्वि'आदिवर्जात् विहितस्य व्यञ्जनादेः अशितः प्रत्ययस्य इट् न भवति।

पाता । चेता। स्तोता । 'श्वि'आदिप्रतिषेधः किम् ? श्वयिता । श्रयिता । डयिता । शयिता । रविता । क्षविता । वरिता । प्रावरिता । ॠत्—तरीता । उत्—लविता । अत् अवधीत् ॥ ५३ ॥

**सृजि-दृशि-स्वर-अत्वतः तृचि नित्यानिटः थपः अवृ-व्ये-अद्-अर्तेः ।५४।**

तृचि नित्यानिटः सृजेः दृशः स्वरान्तात् अत्वतश्च परतः विहितस्य थपः इट् वा न भवति, वृ-व्ये-अद्-अर्ति इत्येतान् वर्जित्वा ।

सस्रष्ठ, ससर्जिथ । दद्रष्ठ, ददर्शिथ । निनेथ, निनयिथ । पपक्थ, पेचिथ । तृचि नित्यानिटः इति किम् ? जघसिथ, न अस्य तृच् अस्ति परोक्षायाम् आदेशविधानात् । नित्य-ग्रहणम् किम् ? आनञ्जिथ । एकस्वरात् इत्येव ? बेभिदिथ । अवृ-व्ये-अद्-अर्तेः इति किम् ? ववरिथ । विव्ययिथ । आरिथ । आदिथ ॥ ५४ ॥

**ऋतः ।५५।**

ऋकारान्तात् धातोः एकस्वरात् विहितस्य थपः इट् न भवति ।

सस्मर्थ । एकस्वरात् इति किम् ? जजागरिथ ॥ ५५ ॥

**कृञः असटः ।५६।**

कृञ· असट्कात् विहितस्य थपः इट् न भवति ।

चकर्थ । असटः इति किम् ? संचस्करिथ ॥ ५६ ॥

**सृ-वृ-भृ-स्तु-द्रु-स्रु-श्रोश्च परोक्षायाम् ।५७।**

एभ्यः असट्कात् कृञश्च परस्यां परोक्षायाम् इट् न भवति ।

ससृव । ववृव । बभृव । तुष्टोथ । दुद्रोथ । सुस्रोथ । शुश्रोथ । चकृव । असटः इति किम् ? संचस्करिथ । स्वरान्तत्वादेव प्रतिषेधे सिद्धे 'सृ'आदीनाम् उपादानं नियमार्थम् तेन अन्येभ्यः परोक्षा सेट् एव ॥ ५७ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते सप्तमः पादः समाप्तः ॥

*

# आख्याते अष्टमः पादः

## कृतः णौ कीर्त् । १ ।

कृतः णौ 'कीर्त्'आदेशो भवति ।

कीर्तयति ॥ १ ॥

## क्तौ अपात् चायेः चिः । २ ।

अपात् परस्य चायेः क्तौ परे 'चिः' आदेशो भवति ।

अपचितिः ॥ २ ॥

## क्तयोश्च ह्लादेः ह्लद् । ३ ।

क्त-क्तवत्वोः क्तौ च परे ह्लादः ह्लद् भवति ।

ह्लन्नः । ह्लन्नवान् । ह्लत्तिः ॥ ३ ॥

## ॠत्-'लू'आदेः एषां तः नः अप्रः । ४ ।

ॠकारान्तात् 'लू' आदेश्च परेषां क्ति-क्त-क्तवतूनां तकारस्य 'नकार' आदेशो भवति ।

कीर्णिः । कीर्णः । कीर्णवान् । लूनिः । लूनः । लूनवान् । धूनिः । धूनः । धूनवान् । अप्रः इति किम् ? पूर्तिः । पूर्तः । पूर्तवान् । क्रादिअन्तर्गणः 'लू'आदिः ॥ ४ ॥

## क्तयोः 'सूयति'आदिऔदितः । ५ ।

'सूयति' आदेः औदितश्च परयोः क्त-क्तवत्वोः तकारस्य नकारो भवति ।

सूनः । सूनवान् । दूनः । दूनवान् । लग्नः । लग्नवान । 'दिव्य'आदिअन्तर्गणः 'सूयति' आदिः ॥ ५ ॥

## र-दात् अमूर्च्छ-मदः दस्य च । ६ ।

रेफान्तात् दकारान्तात् च मूर्च्छ-मदवर्जात् परयोः क्त-क्तवत्वोः तकारस्य नकारो भवति, तद्योगे धातोः दकारस्य च ।

पूर्णः । पूर्णवान् । भिन्नः । भिन्नवान् । अमूर्च्छ-मदः इति किम् ? मूर्तः । मूर्तवान् । मत्तः । मत्तवान् । कृतस्य अपत्यम् कार्तिः इति 'असिद्धं बहिरङ्गम् अन्तरङ्गे' [ न्यायसंग्रहे न्या० २० पृ० २० ] इति न भवति ॥ ६ ॥

## व्यञ्जनात् यञः आतः अख्या-ध्यः । ७ ।

ख्या-ध्यावर्जस्य धातोः व्यञ्जनात् परः यः यञ् तस्मात् परात् आकारात् परस्य क्त-क्तवत्वोः तकारस्य नकारो भवति ।

स्त्यानः । स्त्यानवान् । व्यञ्जनात् इति किम् ? यातः । यञः इति किम् ? स्नातम् । आतः इति किम् ? च्युतम् । अख्या-ध्यः इति किम् ? ख्यातः । ध्यातः । 'धातोः व्यञ्जनात्' इति विशेषणात् इह न भवति—निर्यातः ॥ ७ ॥

## श्यः अस्पर्शे । ८ ।

श्यायतेः परस्य क्त-क्तवत्वोः तकारस्य अस्पर्शे नकारो भवति ।

शीनः । शीनवान् । अस्पर्शे इति किम् ? शीतः स्पर्शः । शीतः वायुः ॥ ८ ॥

## वा प्रस्त्यः मः । ९ ।

प्रपूर्वात् स्त्यायतेः परस्य क्त-क्तवत्वोः तकारस्य मकारो वा भवति ।

प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् ॥ ९ ॥

## क्षः । १० ।

क्षायतेः परस्य क्त-क्तवत्वोः तकारस्य मकारो नित्यं भवति ।

क्षामः । क्षामवान् ॥ १० ॥

## शुषि-पचेः क-वम् । ११ ।

शुषि-पचिभ्यां परस्य क्त-क्तवत्वोः तकारस्य यथासंख्यं 'क्' 'व्' इति आदेशौ भवतः ।

शुष्कः । शुष्कवान् । पक्वः । पक्ववान् ॥ ११ ॥

## 'सिन'आदि बहुलम् । १२ ।

'सिन'आदिः बहुलं क्त-क्तवतुअन्तो निपात्यते ।

सिनोतेः कर्मकर्तरि ग्रासे—सिनः ग्रासः स्वयमेव । अन्यत्र न भवति—सितः ग्रासः चैत्रेण । सितं कर्म स्वयमेव । पू-दिवि-अञ्चिभ्यः नाश-द्यूत-अनपादानेषु—पूनाः यवाः । आद्यूनः चैत्रः । समक्नौ न शकुनेः पादौ । 'नाश'आदिभ्यः अन्यत्र न—पूतं धान्यम् । उदक्तम् उदकं कूपात् । 'नि'पूर्वात् वातेः अवाते कर्तरि क्तस्य नकारः—निर्वाणः मुनिः । वाते तु कर्तरि न भवति—निर्वातः वातः । निर्वातं वातेन । दु-ग्वोः दीर्घश्च-दूनः । दूनवान् ।

गूनः । गूनवान् । क्षेः अभाव-कर्मणोः —क्षीणः । क्षीणवान् । भाव-कर्मणोः तु न भवति— क्षितम् अस्य । दैन्य-आक्रोशयोः वा —क्षितकः, क्षीणकः । क्षितायुः भव, क्षीणायुः भव । ऋ-ह्री-घ्रा-ध्रा-त्रा-उन्द-नुद-विन्तेः वा — ऋणम् ऋतम् । ह्रीणः, ह्रीतः । घ्राणः, घ्रातः । ध्राणः, । ध्रातः । त्राणः, त्रातः । समुन्नः, समुत्तः । नुन्न, नुत्तः । विन्नम्, वित्तम् । 'भित्तम्' शकलपर्यायश्चेत् । अन्यत्र भिन्नम् । वेदेः 'लाभ'अर्थात् क्ते वित्तम् धनम् प्रतीतम् वा इत्यर्थः । अन्यत्र विन्नम् ॥ १२ ॥

## ॠताम् क्ङिति इर् । १३ ।

ॠदन्तस्य धातोः किति ङिति च प्रत्यये परे ॠतः इर् भवति ।

तीर्णः । किरति । जिहीर्षति । बहुवचनं लक्ष्यार्थम् ॥ १३ ॥

## पु-वात् उर् । १४ ।

पवर्गात् वकारात् च परस्य ॠतः किति ङिति च प्रत्यये परे उर् भवति ।

पुः । पुपूर्षति । प्रावुवूर्षति ॥ १४ ॥

## यमि-रमि-नमि-गमि-हनि-मनि-वननि-तनादेः लुक् धुटि । १५ ।

'यम्'आदीनाम् 'तन्'आदीनां च अन्तस्य 'धुट्'आदौ क्ङिति प्रत्यये परे लुग् भवति ।

यतः । रतः । नतः । गतः । हतः । मतः । वतः । ततः । सतः । 'तिप्'-गण-निर्देशात् यङः श्लुचि न भवति—वंवान्तः । तन्तान्तः । 'मनि' ग्रहणम् 'मन्यति'अर्थम् । धुटि इति किम् ? यम्यते । क्ङिति इति किम् ? यन्ता ॥ १५ ॥

## यपि । १६ ।

'यम्'आदीनां यपि परे लुग् भवति ।

प्रहत्य । प्रमत्य ॥ १६ ॥

## मः वा । १७ ।

'यम्'आदीनां मकारस्य यपि परे लुग् वा भवति । प्रयत्य, प्रयम्य । विरत्य, विरम्य ॥ १७ ॥

## 'गम्'आदीनाम् क्वौ । १८ ।

'गम्'आदीनां क्वौ परे लुग् अन्तादेशो भवति ।

[1]जनगत् । सुयत् । सुवत् । सुमत् । परीतत् ॥ १८ ॥

---

१ 'जनपदगत्' इति शाकटायनीये ४।१।२६४। सूत्रे

## न तिकि दीर्घश्च । १९ ।

'यम्'आदीनां तिकि परे लुग् दीर्घश्च न भवति ।

यन्तिः । रन्तिः । तन्तिः ॥ १९ ॥

## आः खनि-सनि-जनः । २० ।

एषाम् अन्तस्य 'धुट्'आदौ क्ङिति प्रत्यये परे आकारो भवति ।

खातः । सातः । जातः । क्ङिति इति किम्? चङ्खन्ति । धुटि इति किम्? जनित्वा ॥ २० ॥

## सनि । २१ ।

खनि सनि-जनाम् अन्तस्य 'धुट्'आदौ सनि परे आकारो भवति ।

सिषासति । धुटि इति किम्? सिसनिषति ॥ २१ ॥

## ये वा । २२ ।

खनि-सनि-जनाम् अन्तस्य यकारे क्ङिति परे आकारो वा भवति ।

खायते, खन्यते । सायते, सन्यते । जायते, जन्यते । चाखायते चङ्खन्यते । क्ङिति इति किम्? खान्यम् ॥ २२ ॥

## क्ये तनः । २३ ।

तनोतेः क्ये परे आकारो वा भवति ।

तायते, तन्यते ॥ २३ ॥

## सनः तौ तिकि । २४ ।

सनः तिकि परे तौ लुक्-आतौ भवतः वा ।

सतिः । सातिः ॥ २४ ॥

## वनि आङ् पञ्चमस्य । २५ ।

पञ्चमान्तस्य धातोः वनि प्रत्यये परे आकारः अन्तादेशः भवति ।

विजावा । ध्मावा ॥ २५ ॥

## क्ते अनिटः च-जः कुः घिति । २६ ।

'क्त'प्रत्यये अनिटः धातोः च-जान्तस्य घिति प्रत्यये परे कवर्गादेशो भवति ।

पाकः । त्यागः । क्ते अनिटः इति किम्? संकोचः । कूजः ॥ २६ ॥

## 'उद्ग' आदयः । २७ ।

'उद्ग'आदयः कृतकत्वादयो निपात्यन्ते ।

उब्जेः घञ्—उद्गः, अभ्युद्गः, समुद्गः । शोकः । श्वपाकः—कर्मणः अण् । मेघः—अच् । नि-अवपूर्वस्य दहेः घञि संज्ञायाम्—निदाघः, अवदाघः असंज्ञायां तु निदाहः अवदाहः । वि-अयः-द्रु-स्तम्बेभ्य परस्य हन्तेः 'स्थादिभ्यः' [ ] इति करणे 'क'प्रत्यये विघनः, अयोघनः, द्रुघनः, स्तम्बघनः । 'घन'शब्दः स्वभावात् पुंसि नपुंसके तेन स्त्रियाम्—स्तम्बघ्ना इत्येव । परिहन्यते अनेन परिघः । मूर्ति—निचित—अभ्रेषु हन्तेः घनि वृद्ध्यभावश्च—दधिघनः, घनाः केशाः, घनः अभ्रम् । निघाः वृक्षाः समारोहपरिणाहा इत्यर्थः । उद्घः प्रशस्तः । संघः प्राणिसमूहः । उद्घन काष्ठच्छेदन कुट्टनाधारः । अपघनः शरीरावयवः । उपघ्नः आसन्नः । 'प्र'पूर्वस्य गृहांशे वाच्ये प्रघण, प्रघाणः । 'अन्तः'-शब्दपूर्वस्य देशे अन्तर्घनः अन्तर्घण । 'मूर्ति' आदिभ्य अन्यत्र घातः इत्यादि ॥ २७ ॥

## न गतौ वञ्चः । २८ ।

वञ्चेः गत्यर्थस्य कुत्वं न भवति ।

"वञ्चं वञ्चन्ति वाणिजाः"[1] । ] गतौ इति किम् ? वङ्कं[2] काष्ठम् ॥ २८ ॥

## यजेः यज्ञाङ्गे । २९ ।

यजेः यज्ञाङ्गे कुत्वं न भवति ।

याजः । प्रयाजः । यज्ञाङ्गे इति किम् ? यागः । प्रयागः ॥ २९ ॥

## घ्यणि आवश्यके । ३० ।

आवश्यके अर्थे विहिते घ्यणि कुत्वं न भवति ।

अवश्यपाच्यम् । आवश्यके इति किम् ? पाक्यम् ॥ ३० ॥

## वचेः अनाम्नि । ३१ ।

वचेः धातोः अनाम्नि विषये घ्यणि कुत्वं न भवति ।

वाच्यम् । अनाम्नि इति किम् ? वाक्यम् ॥ ३१ ॥

---

१ "पश्यैते व्याघ्रवार्केण्यसंकुले वित्तत्रस्तमाः ।
राश्रावपि महारण्ये वञ्चं वञ्चन्ति वाणिजाः" ॥
इति संपूर्णं पद्य हैमे—४।१।११३।
अत्र वञ्चम् गन्तव्यस्थानम्, वञ्चन्ति गच्छन्ति-इति तात्पर्यम् । काशिकायां तु 'वञ्च्यं वञ्चन्ति वणिजः" इति मुद्रितः पाठः—७।३।६३।

२ वङ्कम् वक्रम् इत्यर्थः ।
प्राकृतभा० वंकं वङ्क वा । गुज० भाषायाम् वांकुं इति ।

## नि-प्रात् युजः शक्ये । ३२ ।

नि-प्राभ्यां परस्य युजेः शक्ये अर्थे विहिते ध्यणि परे कुत्वं न भवति ।

नियोज्यः । प्रयोज्यः । शक्ये इति किम् ? प्रयोग्यः ॥ ३२ ॥

## भुजः अदौ । ३३ ।

अदर्थस्य भुजेः ध्यणि कुत्वं न भवति ।

भोज्यम् अन्नम् । भोज्यं पयः । अदौ इति किम् ? भोग्यः कम्बलः ॥ ३३ ॥

## यजि-त्यजः । ३४ ।

अनयोः ध्यणि कुत्वं न भवति ।

याज्यम् । त्याज्यम् ॥ ३४ ॥

## इकः ञ्णिति वृद्धिः । ३५ ।

धातोः इकः ञिति णिति च प्रत्यये परे वृद्धिर्भवति ।

अकारि । कारयति । नाययति । लावयति ॥ ३५ ॥

## पकि गुणः । ३६ ।

धातोः इकः पकि परे गुणः भवति ।

अर्पयति । रेपयति । क्नोपयति ॥ ३६ ॥

## अक्ङिल्लुग्घेतौ । ३७ ।

धातोः इकः प्रत्यये परे गुणो भवति नतु किति ङिति लुग्घेतौ च ।

कर्ता । चेता । स्तोता । अक्ङिल्लुग्घेतौ इति किम् ? चितः । अशिश्रियत् । लोलुवः ॥३७॥

## उ-श्नोः । ३८ ।

धातोः परयोः उ-श्नोः अक्ङिल्लुग्घेतौ प्रत्यये परे गुणो भवति ।

तनोति । सुनोति । अक्ङिल्लुग्घेतौ इति किम् ? तनुतः । सुनुतः ॥ ३८ ॥

## लघोः उपान्त्यस्य । ३९ ।

धातोः उपान्त्यस्य इकः लघोः अक्ङिल्लुग्घेतौ प्रत्यये परे गुणो भवति ।

भेत्ता । गोप्ता । कर्त्स्यति । लघोः इति किम् ? ईहते । उपान्त्यस्य इति किम् ? भिक्षते । अक्ङिल्लुग्घेतौ इति किम् ? भिन्नः । सुत्वा । मरीमृजः ॥ ३९ ॥

## न द्व्युक्तेः शिति स्वरे । ४० ।

द्विरुक्तस्य धातोः उपान्त्यस्य इकः लघोः शिति स्वरादौ प्रत्यये परे गुणो न भवति ।

वेभिदीति । मोमुदीति । नर्नृतीति । द्व्युक्तेः इति किम् ? वेदानि । शिति इति किम् ? निनेजः । स्वरे इति किम् ? नेनेक्ति । उपान्त्यस्य इति किम् ? जुहवानि ॥४०॥

## जुहोति-इणोः अपिति व्-यौ । ४१ ।

जुहोतेः इणश्च इकः अपिति शिति स्वरादौ प्रत्यये परे यथासंख्यं वकार–यकारौ भवतः ।

जुह्वति । यन्तु । अपिति इति किम् ? अजुहवुः । जुहवानि ॥ ४१ ॥

## इकः । ४२ ।

इको धातोः स्वरादौ अपिति प्रत्यये परे यः वा भवति ।

अधियन्ति, अधीयन्ति ॥ ४२ ॥

## पिति उवर्णस्य अद्वेः औः व्यञ्जने । ४३ ।

अद्विरुक्तस्य धातोः उवर्णस्य पिति शिति व्यञ्जनादौ प्रत्यये परे औः भवति ।

यौति । पिति इति किम् ? रुतः । अद्वेः इति किम् ? जुहोति । धातोः इति किम् ? सुनोति ॥ ४३ ॥

## वा ऊर्णोः । ४४ ।

ऊर्णोतेः अद्विरुक्तस्य ऊवर्णस्य पिति शिति व्यञ्जनादौ प्रत्यये परे औः वा भवति।

प्रोर्णोति, प्रोर्णौति । अद्वेः इति किम् ? प्रोर्णोनोति ॥ ४४ ॥

## न दि-स्योः । ४५ ।

दि-स्योः शितोः परयोः ऊर्णोतेः औः न भवति ।

प्रोर्णोत् । प्रोर्णोः ॥ ४५ ॥

## [1]तृहेः इः । ४६ ।

श्नात् परः व्यञ्जनादौ पिति शिति परे इकारो भवति ।

तृणेढि । व्यञ्जनादौ इति किम्? तृणहानि । पिति इति किम् ? तृण्ढः ॥ ४६ ॥

## ऊतः ब्रुवः ईट् । ४७ ।

---

१ शाकटायनीये "तृणेह" ४।२।२४। इति सूत्रम् ।
हैमे 'तृहः श्नात् ईत्" ।४।३।६२। इति सूत्रम् ।

ब्रूञः ऊकारात् परस्य व्यञ्जनादेः पितः शितः प्रत्ययस्य ईट् भवति ।

ब्रवीति । अब्रवीत् । ऊतः इति किम्? आत्थ । पितः इति किम्? ब्रूतः ॥ ४७ ॥

## यङ्-तु-रु-स्तोः बहुलम् । ४८ ।

यङ्लुगन्तात् तु-रु-स्तुभ्यश्च परस्य व्यञ्जनादेः पितः शितः प्रत्ययस्य ईट् भवति बहुलम् ।

नर्नृतीति, नर्नर्ति । क्वचिद् न भवति– वर्वर्ति । तवीति । रवीति । स्तवीति । व्यञ्जनादेः इति किम्? तवानि । पितः इति किम्? नुतः । शितः इति किम्? तुनोथ ॥ ४८ ॥

## सः सिच्-अस्तेः दि-स्योः । ४९ ।

'सिच्'अन्तात् धातोः अस्तेश्च सकारान्तात् परयोः दि-स्योः ईट् भवति ।

अकार्षीत् । अकार्षीः । आसीत् । आसीः । सः इति किम्? अदात् । अभूत् ॥४९॥

## अदः अट् । ५० ।

अत्तेः परयोः दि-स्यो शितोः अट् भवति ।

आदत् । आदः ॥ ५० ॥

## रुदादेः ईट् च । ५१ ।

'रुद्'आदेः परयोः दि-स्योः शितोः ईट् चकारात् अट् च भवति ।

अरोदीत् । अरोदत् । अजक्षीत् । अजक्षत् । रुदादेः इति किम्? अजागः ॥ ५१ ॥

## अयव्यञ्जनादेः इट् । ५२ ।

रुदादेः परस्य यकारवर्जितव्यञ्जनादेः शितः परस्य इट् भवति ।

रोदिति । रुदितः । स्वपिति । श्वसिति । प्राणिति । जक्षिति । अयव्यञ्जनादेः इति किम्? रुद्यात् । रुदन्ति । शितः इति किम्? स्वप्नः ॥ ५२ ॥

## ईश-ईड् स्वे-ध्वे-स्व-ध्वमोः । ५३ ।

ईश-ईड्भ्यां परयोः वर्तमानासे-ध्वयोः पञ्चमीस्व-ध्वमोश्च इट् भवति ।

ईशिषे । ईशिध्वे । ईशिष्व । ईशिध्वम् । ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वम् । वचनभेदात् यथासङ्ख्याऽभावः ॥ ५३ ॥

## हु-धुटोः हेः धिः । ५४ ।

जुहोतेः धुडन्ताच्च परस्य हेः धिः भवति ।

जुहुधि । विद्धि । हु-धुटोः परत्वेन हेः विशेषणात् इह न भवति । रुदिहि ॥ ५४ ॥

## शास्-अस्-हनः शाधि-एधि-जहि । ५५

'शास्'प्रभृतीनां ह्यन्तानां यथासंख्यं शाधि-एधि-जहि इत्येते आदेशा भवन्ति ।

शाधि । एधि । जहि ॥ ५५ ॥

## प्रत्ययात् अतः श्लुक् । ५६ ।

धातोः परात् अदन्तात् प्रत्ययात् परस्य हेः श्लुग् भवति ।

भव । दिव्य । प्रत्ययात् इति किम् ? पापहि । अतः इति किम् ? आप्नुहि ॥ ५६ ॥

## असंयोगात् उतः । ५७ ।

असंयोगात् परः यः उकारः तदन्तात् प्रत्ययात् परस्य हेः श्लुग् भवति ।

सुनु । कुरु । असंयोगात् इति किम् ? आप्नुहि । प्रत्ययात् इति किम् ? युहि ॥५७॥

## व-मि अपिति लुग् वा । ५८ ।

असंयोगात् परः यः उकारः तदन्तस्य अपिति वकारादौ मकारादौ च प्रत्यये परे लुग् वा भवति ।

सुन्वः, सुनुवः । सुन्मः, सुनुमः । अपिति इति किम् ? सुनोति ॥ ५८ ॥

## करोतेः ये च । ५९ ।

करोतेः परस्य उकारस्य यकारादौ वकार-मकारादौ च अपिति प्रत्यये परे लुग् भवति ।

कुर्युः । कुर्वः । कुर्मः ॥ ५९ ॥

## अतः शिति उत । ६० ।

शिति अपिति परे यः उकारः तस्य कार्यभूतः यः करोतेः अकारः तस्य उकारो भवति ।

कुरुतः । उतः कार्यत्वेन विज्ञानात् उकारलोपेऽपि भवति—कुर्यात् । शितः उत्वं प्रति निमित्तविज्ञानं किम् ? कुरु, परत्वे हि इह न स्यात् । अपिति इति किम् ? करोति ॥६०॥

## श्नम्-अस्त्योः लुक् । ६१ ।

श्नमः अस्तेश्च अतः शिति अपिति प्रत्यये परे लुग् भवति ।

---

१ 'प्रत्यये परे विद्यमाने सति' इति वक्तव्ये इति भावः । 'कुरु' इत्यत्र प्रत्ययः परो विद्यमानो नास्ति तथापि 'हि'प्रत्ययो निमित्तभूतस्तु वर्तते ।

रुन्धः । रुन्धन्ति । स्तः । सन्ति । अतः इति किम् ? आस्ताम् ॥ ६१ ॥

## द्युक्ति-जक्षपञ्चक-श्नः आतः । ६२ ।

द्युक्तेः जक्षपञ्चकस्य श्नश्च आकारस्य अपिति शिति प्रत्यये परे लुग् भवति।

मिमते। दरिद्रति । क्रीणन्ति। अपिति इति किम् ? अजहाम् । अक्रीणाम् ॥६२॥

## ईः अदः व्यञ्जने । ६३ ।

अदासंज्ञकस्य श्नश्च आकारस्य व्यञ्जनादौ शिति अपिति परे ईकारो भवति।

लुनीते । लुनीतः । दाम्-दैमोः यङः लुचि दादीतः । अदः इति किम् ? दध्मः । व्यञ्जने इति किम् ? मिमते । अपिति इति किम् ? दधाति ॥ ६३ ॥

## इः दरिद्रः । ६४ ।

दरिद्रातेः आतः व्यञ्जनादौ शिति अपिति परे इकारो भवति।

दरिद्रितः । व्यञ्जने इति किम् ? दरिद्रति ॥ ६४ ॥

## भियः वा । ६५ ।

बिभीतेः व्यञ्जनादौ शिति अपिति प्रत्यये परे इः वा भवति।

बिभितः, बिभीतः ॥ ६५ ॥

## जहातेः । ६६ ।

जहातेः व्यञ्जनादौ शिति अपिति प्रत्यये परे इः वा भवति।

जहितः, जहीतः । 'तिप्'निर्देशात् यङः लुचि न भवति ॥ ६६ ॥

## आ च हौ । ६७ ।

जहातेः हौ परे आकारः इकारश्च वा भवति।

जहाहि, जहिहि, जहीहि ॥ ६७ ॥

## यि लुक् । ६८ ।

यकारादौ शिति प्रत्यये परे जहातेः अन्तस्य लुग् भवति।

जह्यात् ॥ ६८ ॥

## ए शीङः । ६९ ।

शीङः शिति अपिति प्रत्यये परे एकारः अन्तादेशो भवति।

शेते। अनुबन्धोपादानात् यङः लुचि न भवति—शेशीतः। शिति इति किम् ? शिश्ये ॥ ६९ ॥

## यि क्ङिति शय् । ७० ।

शीङः यकारे किति ङिति च प्रत्यये परे शय् आदेशो भवति ।

शय्यते । शाशय्यते । क्ङिति इति किम् ? शेयम् । यङः श्लुचि न भवति । शेशीयते ॥ ७० ॥

## उपसर्गात् ऊहः ह्रस्वः । ७१ ।

उपसर्गात् परस्य ऊहतेः 'यकार'आदौ किति ङिति च प्रत्यये परे आदेः ह्रस्वो भवति ।

समुह्यते । उपसर्गात् इति किम् ? ऊह्यते । 'यि' इति किम् ? समूहितः । क्ङिति इति किम् ? समूह्यः ॥ ७१ ॥

## आशिषि इणः । ७२ ।

उपसर्गात् परस्य इणः 'यकार'आदौ आशिषि परे आदेः ह्रस्वो भवति ।

उदियात् । उपसर्गात् इति किम् ? ईयात् ॥ ७२ ॥

## आ म-वि अतः । ७३ ।

धातोः विहिते मकारादौ वकारादौ च प्रत्यये परे अतः आकारो भवति ।

पचामि । पचावः ॥ ७३ ॥

## मग् आने । ७४ ।

धातोः विहिते आनप्रत्यये परे अतः मग् आगमो भवति ।

पचमानः । पक्ष्यमाणः । अतः इति किम् ? शयानः ॥ ७४ ॥

## आसीनः । ७५ ।

आस्तेः परस्य आनस्य आदेः ईकारो निपात्यते ।

आसीनः । उदासीनः ॥ ७५ ॥

## ऋतः रिः श-क्य-आशीर्ये । ७६ ।

ऋतः श-क्ये आशीर्ये च परे रिः आदेशो भवति । म्रियते । क्रियते । क्रियात् ॥ ७६ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते अष्टमः पादः समाप्तः ॥

*

# आख्याते नवमः पादः

## एचः अशिति आः । १ ।

धातोः एच्-अन्तस्य आकारः अन्तादेशो भवति, न तु शिति प्रत्यये परे ।

दाता । सुग्लः । धातोः इति किम् ? जग्ले । लाक्षणिकत्वात् इह न भवति । चेता । स्तोता ॥ १ ॥

## व्येञः अपरोक्षायाम् । २ ।

व्येञः आकारो भवति न तु परोक्षायाम् ।

संव्याता । अपरोक्षायाम् इति किम् ? संविव्याय । संविव्ययिथ ॥ २ ॥

## स्फुर-स्फुलोः घञि । ३ ।

अनयोः एचः घञि परे आकारो भवति ।

विस्फारः । विस्फालः । घञि इति किम् ? विस्फोलकः ॥ ३ ॥

## वा अपगुरः णमि । ४ ।

'अप'पूर्वस्य गुरः एचः णमि परे आकारो वा भवति ।

अपगारम् अपगारम् । अपगोरम् अपगोरम् । अस्यपगारम् अस्यपगोरम् युध्यन्ते ॥४॥

## दीङः सनि । ५ ।

दीङः सनि परे आकारः अन्तादेशो वा भवति ।

दिदासते, दिदीषते ॥ ५ ॥

## यप्-अक्ङिति । ६ ।

यपि अक्ङिति प्रत्यये विषयभूते दीङः आकारः अन्तादेशो भवति ।

अवदाय । ईषद् उपदानम् । यप्-अक्ङिति इति किम् ? दीनः । उपदेदीयते । अनुबन्धोपादानात् यङः श्लुचि न भवति । उपदेदेति ॥ ६ ॥

## मिञ्-मीञोः अखल्-अच्-अलि । ७ ।

मिञ्-मीञोः यपि खल्-अच्-अल्वर्जिते च अक्ङिति प्रत्यये विषयभूते आकारो वा भवति ।

---

१ असि+अपगारम् । असिः खड्गः ।

निमाय । निमाता । प्रमाय । प्रमाता । अखल्-अच्-अलि इति किम् ? दुर्निमयः । दुष्प्रमयः । अनुबन्धनिर्देशात् यङः श्लुचि न भवति । मेमेति । दैवादिकस्य च कण्ठ्य-ङकारान्तस्य मेता ॥ ७ ॥

## लीङ्-लिनोः वा । ८ ।

अनयोः यपि खल्-अच्-अल्वर्जिते च अङ्किति प्रत्यये विषयभूते आकारो वा भवति ।

विलाय, विलीय । विलाता, विलेता । अखल् अच्-अलि इति किम् ? सुविलयः । विलयः । अनुबन्धनिर्देशात् यङः श्लुचि न भवति—लेलेति । 'ली द्रवीकरणे' इत्यस्य च यौजादिकस्य—विलयति ॥ ८ ॥

## पूजा-प्रलम्भ-अभिभवे णौ । ९ ।

'पूजा'आदौ अर्थे वर्तमानयोः लीङ् लिनोः णौ परे आकारः अन्तादेशो भवति ।

जटाभिः आलापयते--आत्मानं पूजां प्रापयति इत्यर्थः । क त्वाम् उल्लापयति[१] । श्येनः वर्तिकाम् उल्लापयति—अभिभवति इत्यर्थः । पूजा-प्रलम्भ-अभिभवे इति किम् ? घृतं विलाययति ॥ ९ ॥

## स्मिङः प्रयोक्तुः । १० ।

विस्मये प्रयोक्तृहेतुके वर्तमानस्य स्मिङः णौ परे आकारः अन्तादेशो भवति ।

जटिलः विस्मापयते । प्रयोक्तुः इति किम् ? कुञ्चिकया एनं विस्माययति । अनुबन्धोपादानात् यङः श्लुचि न भवति—विसेष्माययति ॥ १० ॥

## विभीतेः स्वार्थे भीष् च । ११ ।

विभीतेः प्रयोक्तुः सकाशात् स्वार्थे वर्तमानस्य णौ परे आकारः अन्तादेशो भवति भीष् च ।

जटिलो भापयते भीषयते वा । प्रयोक्तुः इति किम् ? कुञ्चिकया एनं भाययति । 'तिप्'निर्देशात् यङः श्लुचि न भवति—बेभाययति ॥ ११ ॥

## क्री-जि-इङः । १२ ।

एषां णौ परे आकारः अन्तादेशो भवति ।

क्रापयति । जापयति । अध्यापयति ॥ १२ ॥

## सिध्यतेः अज्ञाने १३ ।

---

१ 'भीञ् हिंसायाम्' इत्यस्य धातोः । २ वञ्चयति इत्यर्थः ।

अज्ञानार्थस्य सिध्यतेः णौ परे आकारो भवति ।

मित्रं साधयति । अज्ञाने इति किम्? तपः तापसं सेधयति[1] ॥ १३ ॥

**चि-स्फुरोः वा । १४ ।**

अनयोः णौ आकारो भवति वा ।

चापयति, चाययति । विस्फारयति, विस्फोरयति ॥ १४ ॥

**वेतेः प्रजने[2] । १५ ।**

वेतेः प्रजनार्थस्य णौ आकारो वा भवति ।

पुरोवातः गाः प्रवापयति—गर्भं ग्राहयति इत्यर्थः—प्रवाययति ॥ १५ ॥

**रुहः पः । १६ ।**

रुहेः णौ परे पकारः अन्तादेशो वा भवति ।

रोपयति, रोहयति तरुम् ॥ १६ ॥

**वः विधूनने जक् । १७ ।**

विधूनने वर्तमानस्य 'वा' धातोः णौ परे जक् आगमो भवति ।

पक्षेण उपवाजयति । विधूनने इति किम्? 'ओवै शोषणे'—केशान् आवापयति[3] ॥ १७ ॥

**शदेः अगतौ त् । १८ ।**

शदेः अगत्यर्थस्य णौ परे तकारः अन्तादेशो भवति ।

शातयति । अगतौ इति किम्? गाः शादयति ॥ १८ ॥

**स्फायः व् । १९ ।**

स्फायः णौ परे वकारः अन्तादेशो भवति ।

स्फावयति ॥ १९ ॥

**प्रीङ्-धूञोः नक् । २० ।**

अनयोः णौ परे नक् आगमो भवति ।

प्रीणयति । धूनयति ॥ २० ॥

**लियः वा स्नेहद्रवे । २१ ।**

लियः स्नेहद्रवे गम्यमाने णौ परे नक् आगमो भवति वा ।

---

१ 'तापसः सिध्यति-जानीते ज्ञानेन' इति वाक्यं बोध्यम् । २ प्रजनम्-गर्भग्रहणम् । ३ शोषयति ।

घृतं विलीनयति । घृतं विलालयति । स्नेहद्रवे इति किम् ? अयो विलालयति ॥२१॥

## लः लक् । २२ ।

'ला'रूपस्य स्नेहद्रवे गम्यमाने लक् आगमो वा भवति ।

घृतं विलालयति । घृतं विलापयति । स्नेहद्रवे इति किम् ! जटाभिः आलापयते ॥ २२ ॥

## पातेः । २३ ।

पातेः णौ परे लक् आगमो भवति ।

पालयति ॥ २३ ॥

## वे-व्या-पा-ह्वा-शा-छा-सः यक् । २४ ।

एषां णौ परे यक् आगमो भवति ।

वाययति । व्याययति । 'पा पाने'–पाययति । 'पै' इत्यस्य न भवति लाक्षणिकत्वात् । ह्वाययति । शाययति । छाययति । साययति ॥ २४ ॥

## अर्ति-ह्री-ब्ली-री-क्नूयी-क्ष्मायि-आताम् पक् । २५ ।

'अर्ति'आदीनाम् आकारान्तानां च णौ परे पक् आगमो भवति ।

अर्पयति । ह्रेपयति । ब्लेपयति । रेपयति । क्नोपयति । क्ष्मापयति । दापयति । क्रापयति । बहुवचनम् री-रीङोः लाक्षणिकआदन्तानां च परिग्रहार्थम् । अर्तेः 'तिप्'-निर्देशात् यङः लुचि न भवति–अरियारयति ॥ २५ ॥

## ह्रस्वः घटादेः उपान्त्यस्य स्वरस्य अम्-ञौ तु वा दीर्घः । २६ ।

घटादेः उपान्त्यस्य स्वरस्य ह्रस्वो भवति अम्-ञिपरे तु वा दीर्घः ।

घटयति । घटंघटम् , घाटंघाटम् । अघटि, अघाटि । एवम् व्यथयति इत्यादि । ष्वादिअन्तर्गणो घटादिः ॥ २६ ॥

## अमः अकमि-अमि-चमः । २७ ।

'अम्'अन्तस्य 'कम्'आदिवर्जितस्य धातोः उपान्त्यस्य णौ परे ह्रस्वो भवति अम्-ञिपरे तु वा दीर्घः ।

रमयति । गमयति । णम्-ञिपरे–रमंरमम् , रामंरामम् । अरमि, अरामि । एवं सर्वत्र अपि उदाहार्यम् । अकमि-अमि-चमः इति किम् ? कामयति । आमयति । चामयति । चामयति ॥ २७ ॥

### कगे-वनू-जनै-जॄष्-क्नसु-रञ्जः । २८ ।

एषाम् उपान्त्यस्य णौ परे ह्रस्वो भवति अम्-ञिपरे तु वा दीर्घः ।

कगयति । वनयति । जनयति । जरयति । क्नसयति । रजयति ॥ २८ ॥

### परि-अपाभ्यां स्खदः । २९ ।

परि-अपाभ्यां परस्य स्खदेः उपान्त्यस्य णौ परे ह्रस्वो भवति अम्-ञिपरे तु वा दीर्घः ।

परिस्खदयति । अपस्खदयति । परि-अपाभ्याम् इति किम् ? प्रस्खादयति ॥ २९ ॥

### शमेः अदर्शने । ३० ।

अदर्शनार्थस्य शमेः उपान्त्यस्य णौ परे ह्रस्वो भवति अम्-ञिपरे तु वा दीर्घः ।

शमयति । अदर्शने इति किम् ? निशामयति रूपम् । केचित् दर्शने एव इच्छन्ति ॥ ३० ॥

### यमः अपरिवेषे णिचि च । ३१ ।

अपरिवेषार्थस्य यमेः उपान्त्यस्य णिचि अणिचि च परे ह्रस्वो भवति अम्-ञिपरे तु वा दीर्घः ।

यमयति । अपरिवेषे इति किम् ? यामयति अतिथिम् । यामयति अयने चन्द्रमसम् । केचित् परिवेषे एव इच्छन्ति । 'णिचि[1] च' इति वचनात् अन्येषां न भवति—स्यमि वितर्के स्यामयते ॥ ३१ ॥

### मारण-तोषण-निशाने ज्ञश्च । ३२ ।

एषु अर्थेषु ज्ञः उपान्त्यस्य णिचि अणिचि च परे ह्रस्वो भवति अम्-ञिपरे तु वा दीर्घः ।

विज्ञपयति पशुम् । विज्ञपयति राजानम् । प्रज्ञपयति[2] । चकारः 'णिचि च' इत्यस्य अनुकर्षणार्थः ॥ ३२ ॥

### चहः शाठ्ये । ३३ ।

'शाठ्य'अर्थस्य चहेः उपान्त्यस्य णौ परे ह्रस्वो भवति अम्-ञिपरे वा दीर्घः ।

चहयति । चहंचहम्, चाहंचाहम् । अचहि, अचाहि । शाठ्ये इति किम् ? चहंचहम् । अचहि । कथादित्वात् सिद्धे दीर्घार्थं वचनम् ॥ ३३ ॥

---

१ णिचि यम एव इति नियमार्थं व्याख्येयम् । तेन णिचि अन्येषां नैतद् विधानम् ।
२ ज्ञपयति शरान् व्याधः' इति शाकटायने ४।१।२०५। ज्ञपयति तेजयति—तीक्ष्णान् करोति—इति भावः ।

### वा अनुपसर्गात् ज्वल-ह्वल-ह्मल-ग्ला-स्ना-वनू-वम-नमः । ३४ ।

एषाम् उपान्त्यस्य णौ ह्रस्वो वा भवति चेत् उपसर्गात् परे न स्युः ।

ज्वलयति, ज्वालयति । ह्वलयति, ह्वालयति । ह्मलयति, ह्मालयति । ग्लपयति, ग्लापयति । स्नपयति, स्नापयति । वनयति, वानयति । वमयति, वामयति । नमयति, नामयति । अनुपसर्गात् इति किम् ? प्रज्वलयति । ग्ला-स्नोः अप्राप्ते शेषाणां नित्यं प्राप्ते वचनम् ॥३४॥

### छदेः इस्-मन्-त्रट्-क्वौ । ३५ ।

छदेः उपान्त्यस्य 'इस्'आदिपरे णौ परे ह्रस्वो भवति ।

छदिः । छद्म । छत्रम् । दामच्छत् ॥ ३५ ॥

### अद्व्यादिउपसर्गस्य घे । ३६ ।

छदेः उपान्त्यस्य घपरे णौ ह्रस्वो भवति न चेत् तस्य पूर्वं द्व्यादय उपसर्गाः स्युः ।

छदः । प्रच्छदः । अद्व्यादिउपसर्गस्य इति किम् ? समुपाच्छादः ॥ ३६ ॥

### ङे० समानस्य अलुचि । ३७ ।

धातोः उपान्त्यस्य स्वरस्य ङे परे णौ ह्रस्वो भवति न तु समानस्य लुचि ।

अपीपचत् । लुचि असमानस्य इति किम् ? अरराजत् । उपान्त्यस्य इति किम् ? अचकाङ्क्षत् ॥ ३७ ॥

### न शास्-ऋदितः । ३८ ।

शासेः ऋदितश्च उपान्त्यस्य ङपरे णौ ह्रस्वो न भवति ।

अशशासत् . मा भवान् ओणिणत् ॥ ३८ ॥

### 'भाष'आदीनां वा । ३९ ।

एषाम् उपान्त्यस्य ङपरे णौ ह्रस्वो भवति वा । अबीभषत् , अबभाषत् । अबीभसत् , अबभासत् । भाष भास भ्राज दीप पीड जीव मील कण रण वण भण हेठ लुट लप इति 'भाष'आदि' । बहुवचनं यङः १लुचि अपि भावार्थम् ॥ ३९ ॥

### ऋत् ऋवर्णस्य । ४० ।

धतोः उपान्त्यस्य ऋवर्णस्य ङपरे णौ ऋः वा भवति ।

अवीवृतत् , अववर्तत् । अचीकृतत्, अचिकीर्तत् । उपान्त्यस्य इति किम् ? अचीकरत् ॥ ४० ॥

---

१ पू० तथा पा० आदर्शे ईदृश एव पाठः परन्तु मूलसूत्रपाठानुसारेण अत्र समानस्य अलुचि इति उचितम् । एतत्पाठानुसारेण तु "ङऽसमानस्य लुचि" इत्येवं सूत्रं भवेत् ।

## जिघ्रतेः इः । ४१ ।

जिघ्रतेः उपान्त्यस्य ङे परे णौ इः वा भवति ।

अजिघ्रिपत् , अजिघ्रपत् । 'तिप्'निर्देशात् यङः श्लुचि न भवति । अजाघ्रपत् ॥ ४१ ॥

## तिष्ठतेः इः । ४२ ।

तिष्ठतेः उपान्त्यस्य ङपरे णौ इः भवति ।

अतिष्ठिपत् ॥ ४२ ॥

## णौ दुषेः ऊत् । ४३ ।

दुषेः उपान्त्यस्य णौ परे ऊकारो भवति ।

दूषयति । णौ अनुवर्तमाने पुनः णिग्रहणं ङनिवृत्त्यर्थम् । ङे ह्रस्वबाधनार्थम् इति एके—अदुदूषत् ॥ ४३ ॥

## चित्ते वा । ४४ ।

चित्ते वाच्ये दुषेः उपान्त्यस्य णौ परे ऊकारो वा भवति ।

मनो दूषयति दोषयति वा मैत्रः ॥ ४४ ॥

## गोहः स्वरे । ४५ ।

कृतगुणस्य गुहेः उपान्त्यस्य स्वरादौ प्रत्यये परे ऊकारो भवति ।

निगूहति । गोह इति किम् ? निजुगुहुः ॥ ४५ ॥

## गम-हन-जन-खन-घसः अनङि लुक् क्ङिति । ४६ ।

एषाम् उपान्त्यस्य अङ्वर्जिते स्वरादौ किति ङिति च प्रत्यये परे लुग् भवति ।

जग्मतुः । जघ्नतुः । जज्ञे । चख्नतुः । घ्नन्ति । अनङि इति किम् ? अगमत् । स्वरादौ इति किम् ? गम्यते ॥ ४६ ॥

## शासे इक् व्यञ्जने । ४७ ।

शासेः उपान्त्यस्य स्वरस्य अङि व्यञ्जनादौ च किति ङिति परे इकारो भवति ।

अशिषत् । शिष्टः । अङ्-व्यञ्जने इति किम् ? शासति । क्ङिति इति किम् ? शास्ति ॥ ४७ ॥

## क्वौ । ४८ ।

शासेः उपान्त्यस्य क्वौ परे इकारो भवति । मित्रशीः ॥ ४८ ॥

**आङः । ४९ ।**

आङः परस्य शासः उपान्त्यस्य इकारो भवति क्वौ एव परे ।

आशीः । क्वौ इति किम् ? आशास्ते ॥ ४९ ॥

**नेः व्यञ्जनस्य अनुदितः । ५० ।**

व्यञ्जनान्तस्य अनुदितः धातोः उपान्त्यस्य नकारस्य किति ङिति प्रत्यये परे लुग् भवति ।

श्रस्तः । सनीस्रस्यते । व्यञ्जनान्तस्य इति किम् ? नीयते । अनुदितः इति किम् ? निन्द्यते ॥ ५० ॥

**अञ्चः अनर्चायाम् । ५१ ।**

अनर्चार्थस्य अञ्चतेः उपान्त्यस्य नकारस्य क्ङिति प्रत्यये लुग् भवति ।

उदक्तम उदकं कूपात् । अनर्चायाम् इति किम् ? अञ्चिता गुरवः ॥ ५१ ॥

**लङ्गि-कम्प्योः उपताप-अङ्गविकृत्योः । ५२ ।**

लङ्गि-कम्प्योः उपान्त्यस्य नकारस्य यथासङ्ख्यं उपतापे अङ्गविकारे च अर्थे क्ङिति प्रत्यये परे लुग् भवति ।

विलगितः । विकपितः । उपताप-अङ्गविकृत्योः इति किम् ? विलङ्गितः । विकम्पितः । उदित्वात् अनयोः अप्राप्तौ वचनम् ॥ ५२ ॥

**भञ्जेः ञौ वा । ५३ ।**

भञ्जेः उपान्त्यस्य नकारस्य ञौ परे लुग् वा भवति ।

अभञ्जि, अभाजि ॥ ५३ ॥

**दंश-सञ्जः शपि । ५४ ।**

अनयोः उपान्त्यस्य नकारस्य शपि परे लुग् भवति ।

दशति । सजति ॥ ५४ ॥

**रञ्जः । ५५ ।**

रञ्जेः उपान्त्यस्य नकारस्य शपि परे लुग् भवति ।

रजति ॥ ५५ ॥

---

१ अत्र सूत्रे षट्चत्वारिंशत्तमसूत्रात् 'लुक्' इति अनुवर्तनीयम् ।

### णौ मृगरमणे । ५६ ।

मृगरमणे वर्तमानस्य रञ्जेः उपान्त्यनकारस्य णौ परे लुग् भवति ।

रजयति मृगान् व्याधः । मृगरमण इति किम् ? रञ्जयति रजको वस्त्रम् ॥ ५६ ॥

### घञि भाव-करणे । ५७ ।

भाव-करणार्थविहिते घञि परे रञ्जेः उपान्त्यनकारस्य लुग् भवति ।

रञ्जनम् , रज्यते अनेन इति वा रागः । भाव-करणे इति किम् ? आधारे रङ्गः ॥५७॥

### 'प्रश्रथ'आदिः । ५८ ।

'प्रश्रथ'आदिः कृतनलुक् निपात्यते ।

प्र-हिमपूर्वस्य श्रन्थेः घञ्—प्रश्रथः । हिमश्रथः । इन्धेः एधः । अवपूर्वस्य उन्देः अवोदः । मन्—उद्म । दशेः अनटि दशनम् । स्यन्देः घञि स्यदो जवः । निपातनात् अन्यत्र न भवति—तैलस्यन्दः ॥ ५८ ॥

### ऋतः मृजेः आर् वा स्वरे । ५९ ।

मृजेः उपान्त्यस्य ऋकारस्य स्वरादौ प्रत्यये परे आर् वा भवति ।

परिमृजन्ति, परिमार्जन्ति । ऋतः इति किम् ? मार्जनम् । स्वरे इति किम् ? मृष्टः ॥ ५९ ॥

### अतः आः । ६० ।

मृजेः उपान्त्यस्य अकारस्य आकारो भवति ।

मार्ष्टि । अतः इति किम् ? मृष्टः ॥ ६० ॥

### ञिणति । ६१ ।

धातोः उपान्त्यस्य अतः ञिति णिति च प्रत्यये परे आकारो भवति ।

अपाचि । पाचयति । उपान्त्यस्य इति किम् ? पिपतिषकः ॥ ६१ ॥

### णपि अस्मदि वा वृद्धिश्च इकः । ६२ ।

धातोः उपान्त्यस्य अतः अस्मद्विषये णपि परे आकारो वा भवति वृद्धिश्च 'इक्'-अन्तस्य वा ।

अहं पपच, अहं पपाच । अहं निनय, अहं निनाय ॥ ६२ ॥

### विश्रमो घञि । ६३ ।

विपूर्वस्य श्रमेः उपान्त्यस्य अतः घञि परे वा आकारो भवति ।

विश्रमः, विश्रामः। केचित् कृति ञिणति औ च अस्य विकल्पम् आहुः ॥ ६३ ॥

### न उद्यम-उपरमः । ६४ ।

अनयोः उपान्त्यस्य अतः घञि परे आकारो न भवति ।

उद्यमः। उपरमः। उत्-उपग्रहणं किम् ? यामः। उपयामः। रामः। विरामः ॥६४॥

### मः अकमि-यमि-रमि-नमि-गमि-वम्-आचमः कृञ्-औ । ६५ ।

'कमि'आदिवर्जस्य मन्तस्य धातोः उपान्त्यस्य अतः कृति ञ्णिति औ च परे आकारो न भवति ।

शमः। शमकः। अशमि। 'कमि'आदिप्रतिषेधः किम् ? कामः। यामः। रामः। नामः। आगामुकः। वामः। आचामः। 'आचम्' इति किम् ? चमकः। विचमकः ॥६५॥

### जन-वधः । ६६ ।

अनयोः उपान्त्यस्य अतः कृति ञ्णिति औ च परे आकारो न भवति ।

जनकः। वधकः। अजनि। अवधि ॥ ६६ ॥

### आतः यम् । ६७ ।

आकारान्तस्य धातोः कृति ञ्णिति औ परे यम् भवति ।

दायः। दायकः। अदायि ॥ ६७ ॥

### भुवः परोक्षा-अद्यतन्योः स्वरे वक् । ६८ ।

भुवो धातोः परोक्षा-अद्यतन्योः स्वरे परे वक् आगमो भवति ।

बभूव। अभूवन्। स्वरे इति किम् ? बभूवान्। अभूत् ॥ ६८ ॥

### हनः हः घः ञिणति । ६९ ।

हन्तेः हकारस्य ञिति णिति च प्रत्यये परे घकारो भवति ।

अघाति। घातयति। ञ्णिति इति किम् ? हन्ता ॥ ६९ ॥

### नः तश्च अञि-णपि । ७० ।

हन्तेः नकारस्य ञिति णिति च प्रत्यये ञि-णपूर्वजिते परे तकारो भवति हकारस्य च घः।

घातः। घातकः। अञि-णपि इति किम् ? अघानि। जघान ॥ ७० ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते नवमः पादः समाप्तः ॥

*

## आख्याते दशमः पादः

### श्वयतेः अङि अत् । १ ।

श्वयतेः अङि परे अत् अन्तादेशो भवति ।

अश्वत् । तिप्निर्देशात् यङः श्लुचि न भवति—अशेश्वियत् ॥ १ ॥

### वचेः उम् । २ ।

वचेः अङि परे अन्त्यात् स्वरात् परः उम् भवति ।

अवोचत् ॥ २ ॥

### असेः थक् । ३ ।

अस्यतेः अङि परे थक् आगमो भवति ।

आस्थत् ॥ ३ ॥

### पतेः पप्त । ४ ।

पतेः अङि पप्त आदेशो भवति ।

अपप्तत् ॥ ४ ॥

### नशो वा इम् । ५ ।

नशेः अङि परे अन्त्यात् स्वरात् परो वा इम् भवति ।

अनेशत्, अनशत् ॥ ५ ॥

### ऋवर्णस्य अर् । ६ ।

ऋवर्णान्तस्य अङि परे अर् भवति ।

मा भवान् अरत् । अरताम् । अरन् । असरन् । अजरत् । जरा ॥ ६ ॥

### जागुः किति । ७ ।

'जागृ' इत्येतस्य इकः किति प्रत्यये अर् भवति ।

जागर्यते । जागरितः ॥ ७ ॥

### स्कृ-ऋच्छ्-ऋतः परोक्षायाम् अक्वसु-कानयोः । ८ ।

स्कृ-ऋच्छ्योः ऋदन्तानां च ऋवर्णस्य परोक्षायाम् अर् भवति न तु क्वसु-कानयोः ।

संचस्करतुः । आनर्छुः । ऋन्–निचकरतुः । 'स्कृ' इति सस्सट उपादानात् इह न भवति–चकृतुः । अक्वसु-कानयोः इति किम् ? तितीर्वान् । ततिराणः । उत्तरेण एव सिद्धे 'स्कृ'ग्रहणम् अन्यत्र संयोगात् परस्य ग्रहणे स्कृञः अपरिग्रहार्थम् ॥ ८ ॥

## संयोगात् ऋत्-अर्तेः । ९ ।

संयोगात् परो यः ऋत् तदन्तस्य अर्तेश्च परोक्षायाम् अर् भवति न तु क्वसु-कानयोः ।

सस्मरतुः । आरतुः ॥ ९ ॥

## क्य-यङ्-आशीर्ये । १० ।

संयोगात् परः यः ऋत् तदन्तस्य अर्तेश्च क्ये यङि आशीर्ये च परे अर् भवति ।

स्मर्यते । अर्यते । सास्मर्यते । अरार्यते । स्मर्यात् । अर्यात् । 'अर्तेः'इति 'तिप्'निर्दे-शात् यङः ^लुपि न भवति–आरियात् ॥ १० ॥

## सिच् अद्यतन्याम् ११ ।

धातोः परः अद्यतन्यां सिच् भवति ।

अकार्षीत् ॥ ११ ॥

## 'तृप्'आदेः असृपः वा । १२ ।

'तृप्'आदेः परः अद्यतन्यां सिच् वा भवति न तु सृपः ।

अतृपत, अत्राप्सीत् । तृप दृप कृप स्पृश इति तृपादिः ॥ १२ ॥

## इकः शिटः अदृशः सक् नेट् चेत् । १३ ।

इकः परो यः शिट् तदन्तात् धातोः दृशिवर्जात् अद्यतन्यां परतः सक् प्रत्ययो भवति न चेत् तस्य सकः इट् स्यात् ।

अलिक्षत् । अधुक्षत् । इकः इति किम् ? अधाक्षीत् । शिटः इति किम् ? अभैत्सीत् । अदृश इति किम् ? अद्राक्षीत् । नेट् चेत् इति किम् ? अकोषीत् । न्यगूहीत् ॥ १३ ॥

## श्लिषः । १४ ।

श्लिषः अद्यतन्यां सक् भवति नेट् चेत् ।

आश्लिक्षत् युवतिं युवा । नेट् चेत् इति किम् ? आश्लेषीत् ॥ १४ ॥

## न असत्त्वाश्लेषे । १५ ।

अप्राण्याश्लेषे अद्यतन्यां सक् न भवति ।

उपाश्लिषत् जतु च काष्ठं च । असत्त्वाश्लेषे इति किम्? व्यत्यश्लिक्षन्त मिथुनानि ॥ १५ ॥

## श्रि-द्रु-स्रु-कमि-णेः ङः कर्तरि । १६ ।

एभ्यः कर्तरि अद्यतन्यां 'ङ'प्रत्ययो भवति ।

अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । अचकमत । णि—अचीकरत् । कर्तरि इति किम्? अकारिषातां कटौ मैत्रेण ॥ १६ ॥

## श्वि-धेटः वा । १७ ।

आभ्यां कर्तरि अद्यतन्यां ङो वा भवति ।

अशिश्वियत, अश्वयीत् । अदधत्, अधासीत् । कर्तरि इति किम्? अधिषातां स्तनौ वत्सेन ॥ १७ ॥

## जॄ-'स्तम्भ'आदि-श्वि-ऋदितः अङ् परस्मै । १८ ।

एभ्यः अद्यतन्याः परस्मैपदे परे अङ् भवति वा ।

अजरत्, अजारीत् । अस्तभत्, अस्तम्भीत् । अस्कभत्, अस्कभीत् । अश्वत् । अश्वयीत् । अरुधत्, अरौत्सीत् । स्तम्भू । स्कम्भू[1] । म्रुचू म्लुचू ग्रुचू ग्लुचू इति स्तम्भादिः ॥ १८ ॥

## ऌदितः । १९ ।

ऌदितः परः अद्यतन्याः परस्मैपदे परे अङ् भवति ।

अगमत् । परस्मै इति किम्? समगंस्त । पृथग्योगः नित्यार्थः ॥ १९ ॥

## द्युतादि-पुष्यादि-सर्ति-शास्तेः । २० ।

एभ्यः परः अद्यतन्याः परस्मैपदे परे अङ् भवति ।

---

१. अस्मिन्नेव सूत्रे इदम् उदाहरणम्, 'स्कम्भू' इत्येवंरूपो धातुश्च यद्यपि न वर्तते पाणिनीये, शाकटायनीये हैमे च धातुपाठे । परन्तु अयं धातुः सौत्रो ज्ञेयः । सौत्रः—सूत्रोक्तः—सूत्रे सूचितः ।

अद्युतत् । अश्वितत् । अपुषत् । अशुषत् । असरत् । अशिषत् । परस्मै इति किम्? व्यद्योतिष्ट । भूवाद्यन्तर्गणः द्युतादिः । दिवाद्यन्तर्गणः पुष्यादिः ॥ २० ॥

### वक्ति-अस्-ख्यातेः । २१ ।

परस्मै इति निवृत्तम् पृथग्वचनात् । एभ्यः कर्तरि अद्यतन्याम् अङ् भवति ।

अवोचत्, अवोचत । पर्यपास्थत । आख्यत् । पुष्यादित्वात् सिद्धे 'अस्'-ग्रहणम् आत्मनेपदार्थम् । 'तिप्' निर्देशात् यङः श्लुचि न भवति—अवावचीत् । अचाख्यासीत् ॥ २१ ॥

### ह्वा-अर्ति-लिपि-सिचः । २२ ।

एभ्यः कर्तरि अद्यतन्याम् अङ् भवति ।

आह्वत् । आरत् । अलिपत् । असिचत् ॥ २२ ॥

### वा आत्मने । २३ ।

'ह्वा' आदिभ्यः कर्तरि अद्यतन्या आत्मनेपदे वा अङ् भवति ।

आह्वत, आह्वास्त । समारत, समार्ष्ट । अलिपत, अलिप्त । असिचत, असिक्त ॥२३॥

### दीप-जन-बुध-पूरि-तायि-प्यायः ते ञिच् तलुक् च । २४ ।

एभ्यः कर्तरि अद्यतन्याः आत्मनेपदे तकारे परे ञिच् वा भवति तद्योगे च निमित्ततकारस्य लुक् ।

अदीपि, अदीपिष्ट । अजनि, अजनिष्ट । अबोधि, अबोधिष्ट । अपूरि, अपूरिष्ट । अतायि, अतायिष्ट । अप्यायि, अप्यायिष्ट । ते इति किम्? अदीपिषाताम् ॥ २४ ॥

### पदः । २५ ।

पद्यतेः कर्तरि अद्यतन्याः आत्मनेपदे ते परे ञिच् नित्यं भवति, तकारस्य लुक् ।

उदपादि ॥ २५ ॥

### कर्म-भावे । २६ ।

धातोः परे भावे कर्मणि च अद्यतन्या आत्मनेपदे तकारे परे ञिच् भवति 'त' शब्दस्य च लुक् ।

अभावि । अकारि कटः ॥ २६ ॥

**स्वर-ग्रह-दृशि-हनिभ्यः स्य-सिच्-आशीः-श्वस्तन्या वा ञिट् । २७ ।**

स्वरान्तात् ग्रहादिभ्यश्च परेषां भाव-कर्मविषयाणां स्य-सिच्-आशीः-श्वस्तनीनां ञिट् वा भवति ।

दायिष्यते । अदायिषाताम् । दायिषीष्ट । दायिता । ग्राहिष्यते । अग्राहिषाताम् । ग्राहिषीष्ट । ग्राहिता । दर्शिष्यते । अदर्शिषाताम् । दर्शिषीष्ट । दर्शिता । घानिष्यते । अघानिषाताम् । घानिषीष्ट । घानिता । पक्षे—दास्यते । ग्रहीष्यते । द्रक्ष्यते । हनिष्यते । इत्यादि । वचनभेदात् न यथासंख्यम् ॥ २७ ॥

**क्यः शिति । २८ ।**

धातोः परो भाव-कर्मविहिते शिति प्रत्यये परे क्यो भवति ।

आस्यते । क्रियते कटः । शिति इति किम् ? बभूव ॥ २८ ॥

**कर्तरि अनदादेः शप् । २९ ।**

अदादिवर्जात् धातोः परः कर्तरि विहिते शिति प्रत्यये परे शप् भवति ।

भवति । कर्तरि इति किम् ? भूयते । अनदादेः इति किम् ? अत्ति ॥ २९ ॥

**दिवादेः श्यः । ३० ।**

दिवादेः परः कर्तृविहिते शिति प्रत्यये परे श्यो भवति ।

दीव्यति । सीव्यति ॥ ३० ॥

**लषादेः वा । ३१ ।**

एभ्यः परः कर्तृविहिते शिति प्रत्यये परे श्यो वा भवति ।

लष्यति, लषति । यस्यति, यसति । लषि यसि संयसि भ्रम भ्रास भ्लास क्रम क्लम त्रुटि त्रसि इति लषादिः ॥ ३१ ॥

**कुषि-रञ्जेः व्याप्ये परस्मै च वा । ३२ ।**

कुषि-रञ्जिभ्यां व्याप्ये कर्तरि विहिते शिति प्रत्यये परे श्यो भवति तद्योगे परस्मैपदं च वा ।

कुष्यति कुष्यते वा पादः स्वयमेव । रज्यति रज्यते वा वस्त्रं स्वयमेव । व्याप्ये कर्तरि इति किम् ? कुष्णाति पादं रोगः ॥ ३२ ॥

**अक्षः वा श्नुः । ३३ ।**

अक्ष्णोतेः परः कर्तृविहिते शिति प्रत्यये श्नुः वा भवति ।

अक्ष्णोति, अक्षति ॥ ३३ ॥

**तक्षः स्वार्थे । ३४ ।**

स्वार्थः तनूकरणम् , तत्र वर्तमानात् तक्षः कर्तृविहिते शिति प्रत्यये परे श्नुः वा भवति ।

तक्ष्णोति, तक्षति । स्वार्थे इति किम् ? संतक्षति शिष्यम् ॥ ३४ ॥

**स्वादेः । ३५ ।**

' सु ' आदेः परः कर्तृविहिते शिति प्रत्यये परे श्नुः भवति ।

सुनोति । सिनोति ॥ ३५ ॥

**स्तम्भू-स्तुम्भू-स्कम्भू-स्कुम्भू-स्कोः श्ना च । ३६ ।**

एभ्यः कर्तृविहिते शिति प्रत्यये परे श्ना श्नुश्च प्रत्ययो भवति ।

स्तभ्नाति, स्तभ्नोति । स्तुभ्नाति, स्तुभ्नोति । स्कभ्नाति, स्कभ्नोति । स्कुभ्नाति, स्कुभ्नोति । स्कुनाति, स्कुनोति । 'स्कु'वर्जाः सौत्रधातवः । ऊकारः स्तब्ध्वा, स्तम्भित्वा इति एतद्विकल्पार्थः ॥ ३६ ॥

**क्र्यादेः । ३७ ।**

क्र्यादेः कर्तृविहिते शिति प्रत्यये परे श्ना भवति ।

क्रीणाति ॥ ३७ ॥

**श्नाहेः आनः व्यञ्जनात् । ३८ ।**

व्यञ्जनात् परस्य श्नायुक्तहेः ' आन ' आदेशो भवति ।

पुषाण । स्तभान । व्यञ्जनात् इति किम् ? क्रीणाहि ॥ ३८ ॥

**रुधादेः श्नम् नलुक् च । ३९ ।**

रुधादेः कर्तृविहिते शिति प्रत्यये परे श्नम् भवति तद्योगे च नकारस्य लुक् ।

रुणद्धि । हिनस्ति ॥ ३९ ॥

**कृञ्-तनादेः उः । ४० ।**

कृञः तनादेश्च परः कर्तृविहिते शिति प्रत्यये परे उः भवति ।

---

१. रुधादेः धातुसंबन्धिनः स्वरात् परः श्नम् भवति इति अध्याहार्यं ज्ञेयम् । २ यत्र मूलप्रकृतौ धातुस्थः नकारः स्यात् तत्र लुग् विधेयः यथासंभवम् । यथा ' हिंस् ' धातुः तत्र नकारस्य लोपः । अञ्ज् धातुः तत्र नकारस्य लोपे-अनक्ति । एवम् भनक्ति इत्यादि साध्यम्

करोति । तनोति । सनोति । कृञः अतनादित्वात् ग्रहणम् । तनादित्वे अन्यद अपि तनादिकार्यं स्यात्—कृतेः । कृतवान् ॥ ४० ॥

### तुदादेः शः । ४१ ।

तुदादेः कर्तृविहिते शिति प्रत्यये परे शो भवति ।

तुदति । नुदति ॥ ४२ ॥

### सृजः श्राद्धे कर्मवत् आत्मने । ४२ ।

सृजः श्राद्धवति कर्तरि कर्मवत् कार्यं भवति तच्च आत्मनेपदविषये ।

असर्जि, सृज्यते मालां धार्मिकः । श्राद्धे इति किम् ? सृजति मालां मालिकः ॥४२॥

### तपेः तपःकर्मकात् । ४३ ।

तपःकर्मकात् तपेः कर्तरि कर्मवत् कार्यं भवति आत्मनेपदविषये ।

तप्यते तपांसि मुनिः । तपिः इह 'करोति' अर्थः । तपःकर्मकात् इति किम् ? उत्तपति सुवर्णं सुवर्णकारः ॥ ४३ ॥

### कर्मणि अ'स्रु'आदिभ्यः । ४४ ।

'स्रु' प्रभृतिवर्जात् धातोः कर्मणि कर्तरि कर्मवत् कार्यं भवति आत्मनेपदविषये ।

करोति कटं चैत्रः । क्रियते अकारि, कारिषीष्ट कटः स्वयमेव । कर्मणि कर्तरि इति किम् ? ग्रामं गच्छति । साधु असिः छिनत्ति । प्रत्यासत्त्या च धातुक्रियाकालभेदे स्यात् । इह न भवति—पचति ओदनं चैत्रः राध्यति ओदनः स्वयमेव । भिद्यमानः कुशूलः पात्राणि भिनत्ति । अन्योन्यम् आश्लिष्यत । हन्ति आत्मानम् आत्मना । 'स्रवति' आदि-प्रतिषेधः किम् ? स्रवति उदकं स्वयमेव । गलति उदकं स्वयमेव 'स्रवति' आदयः प्रयो-गगम्याः ॥ ४४ ॥

### करणे क्वचित् । ४५ ।

धातोः करणे कर्तरि क्वचित् कर्मवत् कार्यं भवति आत्मनेपदविषये ।

परिवारयन्ते कण्टकाः वृक्षं स्वयमेव । क्वचित् इति किम् ? साधु असिः छिनत्ति ॥ ४५ ॥

---

१ नैतद् उदाहरणद्वयम् अत्र संगच्छते परंतु अत्र एवं वाच्यम् यत् कृञः तनादिपाठे सति 'अकृत' 'अकृथाः' इति रूपं विकल्पेन स्यात् तच्च नेष्टम् । २. एकस्य धातोः क्रियायाः कालभेदेऽपि इदं सूत्रे प्रवर्तते परंतु यत्र धातोरेव भेदः तत्र तु नेदं प्रवर्तते इति एतत्प्रदर्शनाय 'पचति' 'राध्यति' इति धातुभेदयुक्तम् उदाहरणं प्रदर्शयति ।

## न वा स्वर-दुहः ञिः । ४६ ।

स्वरान्तात् दुहेश्च कर्मणि कर्तरि ञिः वा न भवति ।

अकृत अकारि वा कटः स्वयमेव । अदुग्ध अदोहि गौः स्वयमेव । कर्तरि इति किम् ? अकारि कटः चैत्रेण । अदोहि [1]गौः बल्लवेन ॥ ४६ ॥

## रुधः । ४७ ।

रुधः कर्तरि ञिः न भवति ।

अरुद्ध गौः स्वयमेव ॥ ४७ ॥

## तपः अनुतापे च । ४८ ।

तपतेः कर्तरि अनुतापविषये च ञिः न भवति ।

अन्वतप्त कितवः स्वयमेव । अतप्त तपांसि मुनिः । अन्वतप्त पापेन कर्मणा । अनुतापे च इति किम् ? अतापि पृथ्वी राज्ञा ॥ ४८ ॥

## स्नु-श्रि-णि-आत्मनेपदाकर्मकात् । ४९ ।

स्नु-श्रिभ्याम् ण्यन्तात् आत्मनेपदविधौ अकर्मकाच्च कर्तरि ञिर्न भवति ।

प्रास्नोष्ट गौः स्वयमेव । उदशिश्रियत दण्डः स्वयमेव । अपीपचत ओदनः स्वयमेव । व्यकृत सैन्धवः स्वयमेव ॥ ४९ ॥

## भूषार्थ-सन्-'दुह'आदीनां च ञि-क्याः । ५० ।

भूषार्थेभ्यः सन्नन्तेभ्यः 'दुह' आदिभ्यः स्नु-श्रि-णि-आत्मनेपदाकर्मकेभ्यश्च कर्तरि ञिच्-ञिट्-क्या न भवन्ति ।

अबूभुषत कन्या स्वयमेव । भूषयिष्यते कन्या स्वयमेव । भूषयते कन्या स्वयमेव । अचिकीर्षिष्ट कटः स्वयमेव । चिकीर्षते वा कटः स्वयमेव । दुग्धे गौः स्वयमेव । अनंस्त दण्डः स्वयमेव । परिणममानं पलालं न भवति । अग्रन्थिष्ट । अवोचत । अकीर्ष्ट । अगीर्ष्ट स्वयमेव । स्नु-श्रि-णि-आत्मनेपदाऽकर्मकाणां ञिः उदाहृतः । क्य उदाहियते—प्रस्नुते गौः स्वयमेव । उच्छ्रयते दण्डः स्वयमेव । कारयते कटः स्वयमेव । विकुर्वते सैन्धवाः स्वयमेव ॥ ५० ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ आख्याते दशमः पादः समाप्तः ॥

---

१. गौः बत्सेन पा० ।

# कृदन्ते प्रथमः पादः

ओं नमः सर्वज्ञाय ।

### अतुम्-क्त्वा-अम् कृत् । १ ।

तुम्-क्त्वा-अम्वर्जितः 'कृत्'प्रत्ययः कर्तरि वेदितव्यः ।

कारकः । पक्ता । अतुम्-क्त्वा-अम् इति किम्? कर्तुं व्रजति । कृत्वा व्रजति । कारंकारं व्रजति । अनिर्दिष्टार्था एते प्रत्ययाः स्वस्वार्थे एव भावे वेदितव्याः ॥ १ ॥

### जन्-आपत्-आप्लावेः वा घ्यण् । २ ।

एभ्यः 'घ्यण्' प्रत्ययः कर्तरि वा वेदितव्यः ।

जन्यः । आपात्यः । आप्लाव्यः । पक्षे भाव-कर्मणोः—जन्यं चैत्रेण इत्यादि ॥ २ ॥

### भू-गः यः । ३ ।

आभ्यां परः 'य'प्रत्ययः कर्तरि वा वेदितव्यः ।

भव्यः चैत्रः पक्षे भव्यं चैत्रेण । गेयः माणवकः गाथानाम्, गेया माणवकेन गाथा, गेयं माणवकेन ॥ ३ ॥

### प्र-उपात् वचि-स्थः अनीयः । ४ ।

'प्र'पूर्वात् वचेः 'उप'पूर्वाच्च तिष्ठतेः कर्तरि 'अनीय' प्रत्ययो वा वेदितव्यः ।

प्रवचनीयः गुरुः शासनस्य । उपस्थानीयः शिष्यः गुरोः । पक्षे भाव-कर्मणोः प्रवचनीयं गुरुणा इत्यादि ॥ ४ ॥

### आरम्भे क्तः । ५ ।

आरम्भः आदिकर्म, तत्र वर्तमानात् धातोः 'क्त'प्रत्ययः कर्तरि वा वेदितव्यः ।

प्रकृतः कटं चैत्रः पक्षे प्रकृतः कटः चैत्रेण, प्रकृतं चैत्रेण ॥ ५ ॥

### शीङ्-स्था-आस्-वस-जन-रुह-भज-श्लिषः । ६ ।

एभ्यः परः 'क्त'प्रत्ययः कर्तरि वा वेदितव्यः ।

अतिशयितः गुरुं चैत्रः । उपस्थितः गुरुं चैत्रः । उपासितः गुरुं चैत्रः । अनूषितः गुरुं चैत्रः । अनुजातः माणवकः माणविकाम् । आरूढः वृक्षं चैत्रः । विभक्ताः स्वं विप्राः ।

आश्लिष्टः कन्यां चैत्रः । पक्षे भाव-कर्मणोः—अतिशयितं चैत्रेण इत्यादि । अकर्मकाः अपि धातवः सोपसर्गाः सकर्मका भवन्ति इति 'शीङ्'आदीनाम् उपादानम् ॥ ६ ॥

### 'गति'अर्थ-नित्यअकर्मकात् । ७ ।

गत्यर्थात् नित्याकर्मकाच्च कर्तरि 'क्त'प्रत्ययो वा वेदितव्यः ।

गतः ग्रामं चैत्रः । आसितः चैत्रः । पक्षे भाव-कर्मणोः—गतो ग्रामः चैत्रेण, गतं चैत्रेण । नित्यग्रहणम् अविवक्षितकर्मकव्युदासार्थम् तेन 'कृतः चैत्रः' इत्यादि न भवति । 'भुक्ताः विप्राः' 'पीताः गावः' इति मत्वर्थीयः अकारः ॥ ७ ॥

### अद्यर्थात च आधारे । ८ ।

अद्यर्थात् गत्यर्थ-नित्याकर्मकाच्च आधारे 'क्त' प्रत्ययो वा वेदितव्यः ।

इदम् एषां भुक्तम् । इदम् एषां पीतम् । इदम् एषां यातम् । इदम् एषाम् आसितम् । पक्षे भाव कर्मणोः—इदं तैः भुक्तम् इत्यादि ॥ ८ ॥

### घुर-केलिमौ कर्मकर्तरि । ९ ।

एतौ प्रत्ययौ कर्मकर्तरि वेदितव्यौ ।

घुरो वक्ष्यते । केलिमः अत एव वचनात् । भङ्गुरं काष्ठम् । छिदुरा रज्जुः । पचेलिमा माषाः । भासि-मिद्-विदां घुरः कर्तरि एव, कर्मकर्तुः असंभवात् ॥ ९ ॥

### 'भीम'आदयः अपादाने । १० ।

अपादाने कारके वाच्ये 'भीम'आदयः शब्दा वेदितव्याः ।

बिभेति अस्मात् इति भीमः । एवं भीष्मः । भयानकः । खलतिः ॥ १० ॥

### संप्रदानाच्च अन्यत्र उणादयः । ११ ।

संप्रदानात् अपादानाच्च अन्यत्र उणादयः प्रत्यया वेदितव्याः ।

करोति इति कारुः । कषितः असौ इति कषिः । ऋच्नन्ति तया इति ऋक् । भसितं तत्र इति भस्म ॥ ११ ॥

---

१. 'शीङ्' इत्यादिका ये धातवः अकर्मकाः तेभ्यः सप्तमसूत्रेणैव कर्तरि क्तः सिध्यति तथापि अकर्मका अपि सोपसर्गाः सकर्मका भवन्ति अतः न तेभ्यः सप्तमसूत्रेण कर्तरि क्तः सिध्यति अतः अत्र 'शीङ्' आदीनाम् अकर्मकाणामपि उपादानम् इति आशयः । २. 'अस्मिन्' इत्यर्थसूचकम् 'इदम्' पदम् । ३. अस्य कृत्प्रकरणस्य चतुर्थपादे पञ्चत्रिंशत्तम तथा षट्त्रिंशत्तमं सूत्रं द्रष्टव्यम् ।

### कृत् बहुलम् । १२ ।

कृत्प्रत्ययः निर्दिष्टात् अर्थात् अन्यत्रापि अर्थे बहुलं वेदितव्यः ।

पादाभ्यां ह्रियते पादहारकः । कृष्टे पच्यन्ते स्वयमेव कृष्टपच्याः शालयः । रोचते इति रुच्यो मोदको मैत्राय । गां हन्ति तस्मै आगताय दातुम् इति गोघ्नः ब्राह्मणः । स्नाति अनेन इति स्नानीयं चूर्णम् । मोहयति आत्मानम् मुह्यति अनेन इति वा मोहनीयं कर्म । अवस्राव्यते तत् इति अवस्रावणम् । राजभोजनाः शालयः । संप्रदीयते तस्मै संप्रदानम् । अपादीयते तस्मात् इति अपादानम् इत्यादिनिर्दिष्टे अर्थे कृतः नियोगतः । अन्यत्र तु यथादर्शनम् अल्पशः ॥ १२ ॥

### क्तेः प्राग् अपवादे वा उत्सर्गः असरूपः । १३ ।

इतः ऊर्ध्वं क्तेः प्राक् यः अपवादः तस्मिन् विषये उत्सर्गः असरूपः प्रत्ययो वा भवति ।

अवश्यगाव्यम् । अवश्यलवनीयम् । जेयम् । जेतव्यम् । क्तेः प्राग इति किम् ? कृतिः । चितिः । अत्र 'घञ्'आदिः न भवति । असरूपः इति किम् ? उत्पिबः । निपिबः । 'क': न भवति । न अनुबन्धकृतम् असारूप्यम् अन्यथा सरूपः एव कश्चित् न स्यात् ॥ १३ ॥

### वुणः प्राक् कृत्याः । १४ ।

'वुण्'प्रत्ययात् प्राक् विधास्यमानः कृत्प्रत्ययः कृत्यसंज्ञो वेदितव्यः । 'कृत्य'प्रदेशाः 'साप्य-अनाप्यात् कर्म-भावे कृत्य-क्त-खलर्थाः' [ आख्याते द्वितीये पादे सूत्र १ ] इत्येवमादयः ॥ १४ ॥

### तव्य-अनीयौ । १५ ।

धातोः परौ तव्य—अनीयप्रत्ययौ भवतः ।

कर्तव्यम् । करणीयम् ॥ १५ ॥

### 'ऋत्'उपान्त्यात् अनृचि-कृपि-चृतेः क्यप् । १६ ।

ऋकारोपान्त्यात् ऋचि-कृपि-चृतिवर्जात् धातोः क्यप् प्रत्ययो भवति ।

नृत्यम् । वृत्यम् । अनृचि-कृपि-चृतेः इति किम् ? अर्च्यम् । कल्प्यम् । चर्त्यम् ॥ १६ ॥

### वृषू-इ-जुषि-शासि-स्तु-एतेः । १७ ।

एभ्यः परः क्यप् प्रत्ययो भवति ।

प्रावृत्यम् । आदृत्यम् । जुष्यम् । शिष्यम् । स्तुत्यम् । 'एति' इति इण्-इकोः ग्रहणम्—इत्यम् ॥ १७ ॥

**मृज-वृष-शंस-दुह-गुह-जप-कृञः वा । १८ ।**

एभ्यः परः क्यप् प्रत्ययो भवति वा ।

मृज्यम्, मार्ग्यम् । वृष्यम्, वर्ष्यम् । शस्यम्, शंस्यम् । दुह्यम्, दोह्यम् । गुह्यम्, गोह्यम् । जप्यम्, जाप्यम् । कृत्यम्, कार्यम् ॥ १८ ॥

**समः भृञः । १९ ।**

'सं'पूर्वात् भृञः परः क्यप् प्रत्ययो भवति वा ।

संभृत्यः, संभार्यः ॥ १९ ॥

**अनाम्नि । २० ।**

भृञः परः क्यप् प्रत्ययो भवति अनाम्नि ।

भृत्यः पोष्यः इत्यर्थः । अनाम्नि इति किम् ? भार्याः नाम क्षत्रियाः । भार्या चैत्रस्य ॥ २० ॥

**पवर्ग-स्वरात् यः एत् च आतः । २१ ।**

पवर्गान्तात् स्वरान्तात् च आतः धातोः परः 'य' प्रत्ययो भवति तद्योगे च आकारस्य एकारः ।

लभ्यम् । रम्यम् । देयम् । जेयम् ॥ २१ ॥

**तकि-चति-शकि-शसि-सहि-यति-यजेः । २२ ।**

एभ्यः 'य' प्रत्ययो भवति ।

तक्यम् । चत्यम् । शक्यम् । शस्यम् । सह्यम् । यत्यम् । यज्यम् ॥ २२ ॥

**आङः चरेः अगुरौ । २३ ।**

'आङ्'पूर्वात् चरेः अगुरौ वाच्ये 'य' प्रत्ययो भवति ।

आचर्यो देशः । अगुरौ इति किम् ? **आचार्यः श्रीहेमचन्द्रः** ॥ २३ ॥

**गद-मद-यमेश्च अनुपसर्गात् । २४ ।**

'गद' आदिभ्यः चरेश्च अनुपसर्गेभ्यः 'य' प्रत्ययो भवति ।

गद्यम् । मद्यम् । यम्यम् । चर्यम् । अनुपसर्गात् इति किम् ? प्रगाद्यम् । प्रमाद्यम् । प्रयाम्यम् । विचार्यम् ॥ २४ ॥

## नाम्नः वदः क्यप् च । २५ ।

अनुपसर्गात् नाम्नः परात् वदतेः क्यप् यश्च प्रत्ययो भवति ।

सत्योद्यम्, सत्यवद्यम् । नाम्नः इति किम् ? वाद्यम् । अनुपसर्गात् इति किम् ? प्रवाद्यम् ॥ २५ ॥

## ऋवर्ण-व्यञ्जनात् घ्यण् । २६ ।

ऋवर्णान्तात् व्यञ्जनान्ताच्च घ्यण् प्रत्ययो भवति

कार्यम् । हार्यम् । पाक्यम् ॥ २६ ॥

## आसु-यु-वपि-रपि-लपि-त्रपि-डिपि-दभि-चमि-आनमः । २७ ।

एभ्यः घ्यण् प्रत्ययो भवति ।

आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । त्राप्यम् । डेप्यम् । दाम्यम् । चाम्यम् । आनाम्यम् । डिपतेः कुटादित्वात् ये एकारो न स्यात् इति उपादानम् ॥२७॥

## पाणि-समवाभ्यां सृजः । २८ ।

पाणिशब्दात् समवाच्च परात् सृजतेः परो घ्यण् प्रत्ययो भवति ।

पाणिसर्ग्या । समवसर्ग्या रज्जुः । पाणि-समवाभ्याम् इति किम् ? संसृज्यः ॥२८॥

## उवर्णात् आवश्यके । २९ ।

उवर्णान्तात् धातोः अवश्यंभावे गम्यमाने घ्यण् प्रत्ययो भवति, 'य' अपवादः ।

लाव्यम्—अवश्यं लाव्यम् । आवश्यके इति किम् ? लव्यम् । अवश्यस्तुत्यः इत्यत्र विहितत्वात् क्यप् एव ॥ २९ ॥

## 'मृषोद्य' आदयः । ३० ।

एते कृत्यप्रत्ययान्ता यथादर्शनं निपात्यन्ते ।

मृषा उद्यते क्यप् मृषोद्यम् । जेः हेतौ जित्यो हलिः । जेयम् अन्यत् । विपू-नीभ्याम् मुञ्ज-कल्कयोः—विपूयो मुञ्जः । विनीयः कल्कः । विपव्यम् विनेयम् अन्यत् । ग्रहः पद—अस्वैरि-बाह्य-अपक्ष्येषु—अवगृह्यं पदम् । गृह्यका इमे परवशा इत्यर्थः । गृह्या ग्री बहिर्भूता इत्यर्थः । "गुणगृह्या वचने विपश्चितः" [किराते सर्ग २, श्लो० ५] तत्पक्षम् आश्रिताः इत्यर्थः । अन्यत्र ग्राह्यम् ।

गोपाय्यते इति कुप्यम्–धनम् । अज्यते इति आज्यम्–घृतम् । भिनत्ति कूलम् इति भिद्यो नदः । उज्झति उदकम् इति उध्यो नदः । सिध्यन्ति अर्थाः अस्मिन् इति सिध्यः । एवम् पुष्यः नक्षत्रविशेषः । युज्यते तत् गमने युग्यम् वाहनम् । अन्यत्र गोप्यम् । आज्यम् । भेदः । उज्झः । सेधनः । पोषणः । योग्यम् । खनेः खेयम् । अनुपसर्गात् नाम्नः हन्तेः भवतेश्च भावे ब्रह्मणः हननम् ब्रह्महत्या । देवभूयं गतः–देवत्वं गतः इत्यर्थः । अन्यत्र न भवति-उपहतिः । हतिः । श्वघात्या वृषली । अनभिधानाच्च हन्तेर्भावे घ्यण् न भवति । अग्नेः चिञः–अग्निचित्या । अर्तेः स्वामि–वैश्ययोः अर्यः–अर्यः स्वामी, अर्यो वैश्यः । अन्यत्र आर्यः साधुः । उपात् सर्तेः ऋतुमत्याम्–उपसर्या वडवा प्रजने कल्या इत्यर्थः । पणेः विक्रेये–पण्यः कम्बलः । नञ्पूर्वात् वदेः गर्ह्ये अवद्यं पापम् । अन्यत्र अनुद्यम् । माङः माने घ्यण् पाय्यम् । मेयम् अन्यत् । धाय्याः काश्चित् ऋचः । धेयम् अन्यत् । 'स'पूर्वात् नियः सान्नाय्यं हविः । संनेयम् अन्यत् । निकाय्यः निवासः । निचेयम् अन्यत् । 'प्र' पूर्वात् नियः असम्मत–निष्कामयोः । प्रणाय्यः शिष्यः प्रणेयम् अन्यत् । आनाय्यः गार्हपत्यात् आनेतव्ये नित्यं जाग्रत् वा दक्षिणाग्निः । आनेयम् अन्यत् । कुण्डैः पीयते सोमः अस्मिन् इति कुण्डपाय्यः । संचीयते इति संचाय्यः । राज्ञा सूयते राजा वा सूयते अस्मिन् इति राजसूयः क्रतुः । अन्यत्र कुण्डपानः इत्यादि । परिचाय्यः, उपचाय्यः समूह्यः, चित्यः, अग्नौ एते । अन्यत्र परिचेयः इत्यादि । समूह्ये विनिपातनम्, अग्नेः अन्यत्र संपूर्वस्य ऊहेः घ्यणभावार्थम् । अमा सह वसतः अस्याम् चन्द्राऽर्कौ इति अमावस्या, अमावास्या । वसेः कर्तरि तव्ये वास्तव्यः ॥ ३० ॥

## वुण्-तृचौ । ३१ ।

धातोः वुण्-तृचौ प्रत्ययौ भवतः ।

कारकः । कर्ता ॥ ३१ ॥

## अच् । ३२ ।

धातोः परः अच् प्रत्ययो भवति ।

करः । वदः । पचः ॥ ३२ ॥

## 'लिह'आदिभ्यः । ३३ ।

एभ्यः परः अच् प्रत्ययो भवति ।

लेहः । शेषः । भारभरः । श्वपचः । बाधकबाधनार्थः योगः । 'लिह' आदयः प्रयोगगम्याः ॥ ३३ ॥

## 'इक्'उपान्त्य-प्री-कॄ-गॄ-ज्ञः कः । ३४ ।

'इक्'उपान्त्यात् 'प्री' प्रभृतिभ्यश्च परः 'क'प्रत्ययो भवति ।

विलिखः । बुधः । 'काष्ठभेदः' इत्यत्र परत्वात् अण् । प्रियः । संप्रियः । किरः । उत्किरः । गिलः । ज्ञः ॥ ३४ ॥

## उपसर्गात् आतः असंप्रसारणः । ३५ ।

उपसर्गात् परात् आकारान्तात् धातोः परः कः प्रत्ययो भवति, न च तस्मिन् संप्रसारणम् ।

प्रस्थः । सुग्लः । उपसर्गात् इति किम् ? त्राता । असंप्रसारणः इति किम् ? आह्वः । प्रह्वः । अन्यथा हि अत्र संप्रसारणं स्यात् । यथा 'जुहुवतुः' 'जुहुवुः' इति । अत्र "पूर्वे अपवादाः अनन्तरान् विधीन् बाधन्ते न उत्तरान्" [ न्यायसंग्रहे न्याय ३६ पृ० ३७ ] इति णो बाध्यते न अण्, तेन गोसंदायः वडवासंदायः इति भवत्येव ॥ ३५ ॥

## घ्रा-धेट्-पा-ध्मा-दृशः शः । ३६ ।

उपसर्गात् परेभ्यः एभ्यः परः शः प्रत्ययो भवति ।

उज्जिघ्रः । उद्धयः । उत्पिबः । विधमः । उत्पश्यः । केचित् अत्र 'उपसर्गात्' इति न अनुवर्तयन्ति : 'व्याघ्र'-'आघ्र'शब्दौ औणादिकौ ॥ ३६ ॥

## साहि-साति-वेदि-उदेजि-चेति-धारि-पारि-लिम्पि-विन्देः अनुपसर्गात् । ३७ ।

एभ्यः अनुपसर्गेभ्यः परः 'श' प्रत्ययो भवति ।

साहयः । सातयः । वेदयः । उदेजयः । चेतयः । धारयः । पारयः । लिम्पयः । विन्दः । अनुपसर्गात् इति किम् ? संसाहयिता । "मध्ये अपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" [ न्यायसंग्रहे न्याय ३७ ] इति अण् भवत्येव—छत्रधारः ॥ ३७ ॥

## सहादि-दु-नी-भू-ग्रहः णो वा । ३८ ।

सहादेः दु-नी-भू-ग्रहिभ्यश्च अनुपसर्गेभ्यः परः 'ण'प्रत्ययो भवति वा ।

सहः, साहः । रमः, रामः । दवः, दावः । नयः, नायः । भवः, भावः । ग्रहः, ग्राहः[1] । अनुपसर्गात् इति किम् ? प्रसहः । प्रदवः । प्रणयः । प्रभवः । बहुलाधिकाराच्च विषयनियमः तेन ज्योतिषि ग्रहः[2] । गृहम् गृहाः इति गृहयतेः[3] अच् ॥ ३८ ॥

---

१. आ० हेमचन्द्रस्तु एतौ शब्दौ कृत्प्रत्ययेन साधयति—५।१।५७। २. "अलचरे ग्राहः" इति शाकटायनः—४.३।११। ३ "गृहणि ग्रहणे" इति चुरादिगणस्थो धातुः ।

## आस्रु-संस्रु-श्या-तनि-व्यध-अवसा-अवहृ-अतीण्-श्वसेः । ३९ ।

एभ्यः परः 'ण' प्रत्ययो भवति ।

आस्रावः । संस्रावः । अवश्यायः । प्रतिश्यायः । तानः । उत्तानः । व्याधः । अवसायः । अवहारः । अत्यायः । प्रश्वासः । अवश्वासः ॥ ३९ ॥

## आशिषि वुन् । ४० ।

अभीष्टस्य अर्थस्य प्रार्थनम् आशीः, तस्यां गम्यमानायां धातोः 'वुन्' प्रत्ययो भवति ।

जीवतात् जीवकः । नन्दकः । नकारः "इत् च अपुंसः अनितः क्य-स्यादेः अपि" [ नामप्रकरणे षष्ठपादे सूत्र ३५ ] इति पर्युदासार्थः । जीवका । नन्दका ॥ ४० ॥

## नाम्नि तिक् । ४१ ।

आशिषि गम्यमानायां धातोः 'तिक्' प्रत्ययो भवति, समुदायश्चेत् नाम स्यात् ।

तनुतात् तन्तिः । रन्तिः । क्तप्रत्ययश्च असरूपत्वात् एव पक्षे सिद्धः इति न तद्ग्रहणम् ॥ ४१ ॥

## प्रु-सृ-ल्वः साधौ वुच् । ४२ ।

साधुत्वविशिष्टे अर्थे वर्तमानेभ्यः प्रु-सृ-लूभ्यः परः ' वुच् ' प्रत्ययो भवति ।

साधु प्रवते प्रवकः । सरकः । लवकः । साधौ इति किम् ? प्रावकः । सारकः । लावकः । चकारः 'वुण्-वुचोः अकः' [(²)] इत्यत्र सामान्यग्रहणाऽविघातार्थः ॥ ४२ ॥

## हः व्रीहि-काले टनण् । ४३ ।

' हा ' धातोः परः टनण् प्रत्ययो भवति, व्रीहौ काले च वाच्ये ।

जहति उदकम् इति हायना नाम व्रीहयः । जहाति भावान् इति हायनः संवत्सरः । टकारः उत्तरत्र ' ङी ' प्रत्ययार्थः ? णकारः वैमर्थः ॥ ४३ :

## शिल्पिनि गः । ४४ ।

शिल्पं क्रियासु कौशलम् तद्वान् शिल्पी । गायतेः शिल्पिनि कर्तरि ' टनण् ' प्रत्ययो भवति ।

गायनः । गायनी ॥ ४४ ॥

---

१ 'श्याआत्तन्व्यधआस्रुसंस्रुअवसाहृअतीण्श्वस." । ४।३।१०० । इति शाकटायने । अत्र 'आत्'पदेन आकारान्ता अपि धातवो गृह्यन्ते उदाहृयन्ते च-"धायः । ग्लायः । म्लायः" इति । हैमेऽपि ५।१।६४ सूत्रे एवमेव । अत्र नैवम् । २ यकारार्थम् इति प्रतीयते ।

## नृत्-खन-रञ्जः वुट् । ४५ ।

नृत्-खन्-रञ्ज्भ्यः शिल्पिनि कर्तरि 'वुट्' प्रत्ययो भवति।

नर्तकः । नर्तकी । खनकः । खनकी । रजकः । रजकी । लुप्तनकारनिर्देशात् एव नलुक् । शिल्पिनि इति किम्? नर्तिका ॥ ४५ ॥

## नन्द्यादिभ्यः अनः । ४६ ।

एभ्यः 'अन' प्रत्ययो भवति । नन्द्यादयः 'नन्दन'-'रमण' इत्यादिप्रातिपदिक-पाठात् अपोद्धृत्य वेदितव्याः । स च सप्रत्ययपाठः विशिष्टविषयार्थः रूपनिग्रहार्थश्च ।

नन्दनः । वाशनः । मदनः । दूषणः । साधनः । शोभनः । रोचनः । वर्धनः । अत्र ण्यन्तेभ्यः । सहनः । तपनः । दमनः । सर्वे एव एते संज्ञायाम् । दर्पणः । रमणः । संक्रन्दनः । संकर्षणः । बिभीषणः । पवनः । लवणः निपातनात् णत्वम् । जनार्दनः । मधुसूदनः । चित्तविनाशनः । अत्र वृद्धिः । कुलदमनः । अत्र अण् न भवति ॥ ४६ ॥

## ग्रहादिभ्यः णिन् । ४७ ।

एभ्यः 'णिन्' प्रत्ययो भवति । ग्रहादयः नन्द्यादिवत् नामपाठात् अपोद्धृत्य वेदितव्याः ।

ग्राही । उत्साही । उपस्थायी । मन्त्री । सम्मर्दी । अवरोधी । नेः वप-श्रु-सा-विश-रक्षः—निवापी । निश्रावी । निसायी । निवेशी । निरक्षी ।

नञः याचृ-व्याहृ-संव्याहृ-व्रज-वद-वसः—अयाची । अव्याहरी । असंव्याहारी । अव्राजी । अवादी । अवासी ॥ ४७ ॥

## नञः स्वरात् अचित्ते । ४८ ।

नञ्पूर्वात् स्वरान्तात् धातोः अचित्ते कर्तरि 'णिन्' प्रत्ययो भवति ।

अकारी स्पर्शः । अचित्ते इति किम्? अहर्ता चैत्रः । केचित् अनञः इच्छन्ति ॥४८॥

## इन् च परिभुवः । ४९ ।

'परि'पूर्वात् भवतेः इन् णिन् च प्रत्ययो भवति ।

परिभवी, परिभावी ॥ ४९ ॥

## वेः शीङ्-षिञः देशे । ५० ।

'वि'पूर्वात् शीङः षिञश्च देशे वाच्ये इन् प्रत्ययो भवति ।

विशयी, विषयी देशः । 'षिञः' इति निर्देशात् एव षत्वम् ।

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ कृति प्रथमः पादः समाप्तः ॥

---

१. सूत्रे 'रञ्ज्' धातोः 'रज्' इत्येव लुप्तनकारत्वेन निर्देशः ।

## कृदन्ते द्वितीयः पादः

**समान-अन्य-त्यदादेः गौणात् दृशेः आप्ये सक्-क्विप्-टकः । १ ।**

समानशब्दात् अन्यशब्दात् त्यदादेश्च गौणात् परात् दृशेः धातोः कर्मणि सक् क्विप् टक् इत्येते प्रत्यया भवन्ति । वचनभेदात् अयथासंख्यम् ।

समान इव दृश्यते सदृक्षः, सदृक्, सदृशः । सदृशी । अन्यादृक्षः, अन्यादृक्, अन्यादृशः । अन्यादृशी । त्यादृक्षः, त्यादृक्, त्यादृशः । त्यादृशी । समान-अन्य-त्यदादेः इति किम् ? वृक्ष इव दृश्यते । गौणात् इति किम् ? स इव पश्यति ॥ १ ॥

**कर्तुः नाम्नः णिन् । २ ।**

कर्तृवाचिनः नाम्नः गौणात् परात् धातोः णिन् प्रत्ययो भवति ।

उष्ट्रः इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । कर्तुः इति किम् ? शालीन् इव कोद्रवान् भोक्ता । गौणात् नाम्नः इति किम् ? उष्ट्रः क्रोशति ॥ २ ॥

**अजातेः शीले । ३ ।**

अजातिवाचिनः नाम्नः परात् शीलार्थात् धातोः णिन् प्रत्ययो भवति ।

उष्णभोजी । शीतभोजी । प्रत्यासारिण्यः । प्रस्थायी । अजातेः इति किम् ? शालीन् भोक्ता । शीले इति किम् ? उष्णभोजः । 'प्रभोक्ता' 'संभोक्ता' इत्यत्र अनभिधानात् न भवति । तथा च बहुलाधिकारः ॥ ३ ॥

**व्रत-आभीक्ष्ण्ये । ४ ।**

व्रतं शास्त्रीयो नियमः । आभीक्ष्ण्यं पौनःपुन्यम्, तात्पर्यम्, आसेवा वा । तयोः गम्यमानयोः नाम्नः परात् धातोः णिन् प्रत्ययो भवति ।

पार्श्वशायी । स्थण्डिलशायी । तदन्यवर्जनम् इह व्रतम् अवगम्यते । आभीक्ष्ण्ये—कषायपायिणः गान्धाराः । क्षीरपायिणः उशीनराः । 'कुल्माषखादाः' इत्यत्र बहुलाधिकारात् न भवति । अशीलार्थम् अजात्यर्थं वचनम् ॥ ४ ॥

**साधौ । ५ ।**

साधुत्वविशिष्टेऽर्थे वर्तमानात् नाम्नः परात् धातोः णिन् प्रत्ययो भवति ।

साधुकारी । साधुदायी ॥ ५ ॥

## ब्रह्मवादी । ६ ।

'ब्रह्म'कर्मणः परात् वदेः णिन् प्रत्ययो भवति ।

ब्रह्मवादिनो[2] वदन्ति । अशीलार्थम्, अजात्यर्थम्, असरूपनिवृत्त्यर्थं च वचनम् ॥ ६ ॥

## गमेः ड-ख-खड्ः । ७ ।

नाम्नः परात् गमेः धातोः पराः ड ख खड् इत्येते प्रत्यया भवन्ति ।

तुरगः । भुजगः । प्रवगः । प्लवगः । पन्नगः । अन्तगः । अनन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । सर्वत्रगः । ग्रामगः । ख—सुतंगमः । तुरंगमः । भुजंगमः । प्रवंगमः । प्लवंगमः । मितंगमः । अमितंगमा हस्तिनी । हृदयंगमा वाक् । खड्—तुरङ्गः । भुजङ्गः । प्रवङ्गः । बहुलाधिकारात् यथाप्रयोगदर्शनं व्यवस्था ॥ ७ ॥

## टः पुरः-अग्रतः-अग्रेः सर्तेः । ८ ।

एभ्यः परात् सर्तेः टः प्रत्ययो भवति ।

पुरः सरति पुरःसरः । अग्रतःसरः । अग्रम् अग्रेण वा सरति अग्रेसरः । एकारान्तत्वं सूत्रे तथानिर्देशात् । टकारः ङीप्रत्ययार्थः ॥ ८ ॥

## पूर्वात् कर्तुः । ९ ।

'पूर्व'शब्दात् कर्तुः परात् सर्तेः टः प्रत्ययो भवति ।

पूर्वः सरति पूर्वसरः ॥ ९ ॥

## भिक्षा-सेना-आदायात् चरेः । १० ।

एभ्यः परात् चरेः टः प्रत्ययो भवति ।

भिक्षाचरः । सेनाचरः । आदायचरः ॥ १० ॥

## आधारात् । ११ ।

आधारवाचिनः नाम्नः परात् चरेः टः प्रत्ययो भवति ।

कुरुषु चरति कुरुचरः । आधारात् इति किम्? कुरून् चरति ॥ ११ ॥

## शीङः अत् । १२ ।

आधारवाचिनः नाम्नः परात् शीङः अत् प्रत्ययो भवति ।

---

१. अत्र "निपात्यते" इति निर्देशः शाकटायने -४।३।१८५- स एव च समुचितः ।
२. शाकटायने तत्रैव सूत्रे 'ब्राह्मणाः' इति अत्र विशेष्यपदम् ।

खे शेते खशयः । 'गिरिशः' इति लोमादित्वात् शः ॥ १२ ॥

## 'उत्तान' आदेः कर्तुः । १३ ।

'उत्तान 'आदिभ्यः कर्तृभ्यः परात् शीङः अत् प्रत्ययो भवति ।

उत्तानशयः । अवमूर्धशयः । 'उत्तान' आदयः प्रयोगगम्याः ॥ १३ ॥

## 'पार्श्व'आदिभ्यः । १४ ।

एभ्यः परात् शीङः अत् प्रत्ययो भवति ।

पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । दिग्धसहशयः[1] । 'पार्श्व' आदयः प्रयोगगम्याः ॥ १४ ॥

## कर्मणः अण् । १५ ।

कर्मवाचिनः नाम्नः परात् धातोः अण् प्रत्ययो भवति ।

कुम्भकारः । चर्चापारः । 'ग्रामं गच्छति' 'आदित्यं पश्यति' 'हिमवन्तं शृणोति' इत्यादौ प्राप्यात् कर्मणः न भवति, अनभिधानात् । 'महान्तं कुम्भं करोति' इत्यादौ च सापेक्षत्वात् ॥ १५ ॥

## अर्हतेः अः । १६ ।

कर्मणः परात् अर्हतेः अः प्रत्ययो भवति ।

पूजार्हः । पूजार्हा ॥ १६ ॥

## किम्-यत्-तत्-बहोः कृञः अः । १७ ।

'किम्' आदिभ्यः कर्मभ्यः परात् कृञः अः प्रत्ययो भवति ।

किङ्करः । यत्करः । तत्करः । बहुकरः । 'बहुकरी' इति संख्यावचनात् उत्तरेण टः । "जातिः इदानीं किंकरी" [ ] इति हेत्वादौ टः ॥ १७ ॥

## दिवा-विभा-निशा-प्रभा-भास्-कर्तृ-नान्दी-लिपि-लिवि-बलि-चित्र-क्षेत्र-अन्त-अनन्त-आदि-कार-अरुस्-जङ्घा-बाहु-अहः-संख्या-धनुर्-भक्तात् टः । १८ ।

एभ्यः कर्मभ्यः परात् कृञः टः प्रत्ययो भवति । 'संख्या' इति अर्थ-स्वरूपग्रहणम् ।

दिवाकरः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः । कर्तृकरः । नान्दीकरः । लिपिकरः । लिविकरः । बलिकरः । चित्रकरः । क्षेत्रकरः । अन्तकरः । अनन्तकरः ।

---

१. "दिग्धेन सह शेते"—शा० ४।३।१६५ । दिग्धेन-लिप्तेन ।

आदिकरः । कारकरः । अरुष्करः । जङ्घाकरः । बाहुकरः । अहस्करः । एककरः । द्विकरः । संख्याकरः । धनुष्करः । भक्तकरः ॥ १८ ॥

## हेतु-तच्छील-अनुकूलेषु अशब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्र-पदात् । १९ ।

शब्दादिवर्जात् कर्मणः परात् कृञः हेत्वादिषु कर्तृषु टः प्रत्ययो भवति ।

यशस्करी विद्या । तच्छीले पूजाकरः । अनुकूले प्रेषणकरः । हेतु-तच्छील-अनुकूलेषु इति किम् ? कुम्भकारः । शब्दादिप्रतिषेधः किम् ? शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः । तच्छीले ताच्छीलिकश्च प्रत्ययः उदाहार्यः ॥ १९ ॥

## क्षेम-प्रिय-मद्र-भद्रात् ख-अणौ । २० ।

'क्षेम' आदिभ्यः कर्मभ्यः परात् कृञः 'ख'-'अण्' प्रत्ययौ भवतः ।

क्षेमंकरः, क्षेमकारः । प्रियंकरः, प्रियकारः । मद्रंकरः, मद्रकारः । भद्रंकरः, भद्रकारः । हेत्वादिविवक्षायाम् अपि परत्वात् इमौ एव प्रत्ययौ । 'योगक्षेमकरी लोकस्य' इति तदन्तविज्ञानाभावात् न भवेतः ॥ २० ॥

## इः स्तम्ब-शकृतः व्रीहि-वत्से । २१ ।

'स्तम्ब'-'शकृत्' शब्दाभ्यां कर्मभ्यां परात कृञः यथासंख्यं वत्से व्रीहौ च कर्तरि 'इ' प्रत्ययो भवति ।

स्तम्बकरिः व्रीहिः । शकृत्करिः वत्सः । अन्यत्र स्तम्बकारः । शकृत्कारः ॥ २१ ॥

## दृति-नाथात् पशौ हृञः । २२ ।

दृति-नाथाभ्यां कर्मभ्यां परात् हृञः पशौ कर्तरि 'इ' प्रत्ययो भवति ।

दृतिहरिः, नाथहरिः पशुः । पशौ इति किम् ? दृतिहारः । नाथहारः ॥ २२ ॥

## आङि शीले अत् । २३ ।

कर्मणः परात् शीले अर्थे वर्तमानात् हृञः आङि उपपदे अत् प्रत्ययो भवति ।

पुष्पाहरः । यस्य पुष्पाहरणे न स्वभावात् अन्यो हेतुः स एवमुच्यते । आङि इति किम् ? पुष्पाणि हर्ता । शीले इति किम् ? पुष्पाहारः । सुखाहारः इति । अशीले अनुपमे उत्तरेण अत् प्रत्ययः ॥ २३ ॥

---

१. इमौ प्रत्ययौ सूक्तौ ।

### वयः-अनुद्यमे । २४ ।

प्राणिनां कालकृता अवस्था यौवनादि वयः । उद्यमः उत्क्षेपणम् तदभावः अनुद्यमः । तयोः गम्यमानयोः कर्मणः परात् हृञः अत् प्रत्ययो भवति ।

अस्थिहरः । विषहरः मणिः । वयः-अनुद्यमे इति किम् ? भारहारः । क्रियमाणः संभाव्यमानः वा उद्यमः वयसि गम्यते इति उद्यमार्थं वयोग्रहणम् ॥ २४ ॥

### शक्ति-लाङ्गल-अङ्कुश-ऋष्टि-यष्टि-तोमर-घटात् ग्रहः । २५ ।

'शक्ति' आदिभ्यः कर्मभ्यः परात् ग्रहेः अत् प्रत्ययो भवति ।

शक्तिग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । ऋष्टिग्रहः । यष्टिग्रहः । तोमरग्रहः । घटग्रहः । "नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" [न्यायसंग्रहे न्याय १६ पृ० १६] घटीग्रहः ॥२५॥

### सूत्रात् धारणे । २६ ।

'सूत्र'शब्दात् कर्मणः परात् धारणे अर्थे वर्तमानात् ग्रहेः अत् प्रत्ययो भवति ।

सूत्रग्रहः । धारणे इति किम् ? यो हि सूत्रम् उपादत्ते स सूत्रग्राहः ॥ २६ ॥

### शीलि-कामि-भक्षि-आचरि-ईक्ष-क्षमः णः । २७ ।

कर्मणः परेभ्यः एभ्यः णः प्रत्ययो भवति ।

धर्मं शीलयति धर्मशीलः । धर्मशीला । धर्मकामः । धर्मकामा । वायुभक्षः । कल्याणाचारः । सुखप्रतीक्षः । क्लेशक्षमः । कर्मणि शीलादौ बहुव्रीहिणा अपि एते सिध्यन्ति, अण्-बाधनार्थं तु वचनम् ॥ २७ ॥

### आशिषि हनः डः । २८ ।

आशिषि गम्यमानायां कर्मणः परात् हन्तेः डः प्रत्ययो भवति ।

तिमिं वध्यात् तिमिहः ॥ २८ ॥

### क्लेश-तमसः अपात् । २९ ।

'क्लेश'-'तमः' शब्दाभ्यां परात् 'अप' पूर्वात् हन्तेः 'ड' प्रत्ययो भवति ।

क्लेशापहः । तमोऽपहः । अनाशीरर्थ आरम्भः ॥ २९ ॥

### समः ख्यः । ३० ।

कर्मणः परात् 'सं'पूर्वात् 'ख्या' धातोः 'ड' प्रत्ययो भवति ।

गोसंख्यः ॥ ३० ॥

## प्रात् दा-ज्ञः । ३१ ।

कर्मणः पराभ्यां दा-ज्ञाभ्यां परः 'ड' प्रत्ययो भवति ।

सर्वप्रदः । पथिप्रज्ञः । प्रात् इति किम् ? गोसंदायः ॥ ३१ ॥

## आतः अनुपसर्गात् अह्वा-वा-मः । ३२ ।

कर्मणः परात् अनुपसर्गात् ह्वा-वा-मावर्जितात् आकारान्तात् धातोः 'ड' प्रत्ययो भवति । अणः अपवादः ।

धनदः । तनुत्रम् । अह्वा-वा-मः इति किम् ? जिनह्वायः । तन्तुवायः । धान्यमायः ॥३२॥

## गः टक् । ३३ ।

कर्मणः परात् अनुपसर्गात् गायतेः टक् भवति । अणः अपवादः ।

वक्रगः । वक्रगी । अनुपसर्गात् इति किम् ? वक्रसंगायः ॥ ३३ ॥

## अमनुष्ये हनः । ३४ ।

कर्मणः परात् हन्तेः अमनुष्ये कर्तरि टक् प्रत्ययो भवति ।

वातघ्नं आविकं क्षीरम् । पतिघ्नी रेखा । अमनुष्ये इति किम् ? आखुघातः शूद्रः । पापघातो यतिः । 'नरघातो हस्ती' इत्यादौ अनभिधानात् न भवति ॥ ३४ ॥

## जाया-पतेः चिह्नवति । ३५ ।

जाया-पतिभ्यां कर्मभ्यां परात् हन्तेः चिह्नवति कर्तरि टक् भवति । चिह्नं लक्षणम्—शुभाऽशुभसूचकं शरीरस्थं मष-तिलकादि ।

जायाघ्नो ब्राह्मणः । पतिघ्नी कन्या । मनुष्यार्थः आरम्भः ॥ ३५ ॥

## हस्ति-बाहु-कपाटात् शक्तौ । ३६ ।

'हस्ति'आदिभ्यः कर्मभ्यः परात् हन्तेः शक्तौ गम्यमानायां टक् प्रत्ययो भवति ।

हस्तिघ्नः पुरुषः—हस्तिनं हन्तुं शक्तः इत्यर्थः । एवम् बाहुघ्नः । कपाटघ्नः चौरः । हस्ति-बाहु-कपाटात् इति किम् ? चौरघातः मनुष्यः ॥ ३६ ॥

## कुमार-शीर्षात् णिन् । ३७ ।

आभ्यां कर्मभ्यां परात् हन्तेः 'णिन्' प्रत्ययो भवति ।

कुमारघाती । शीर्षघाती । शिरःपर्यायः 'शीर्ष'शब्दः अकारान्तोऽपि अस्ति । तथा च

प्रयोगः—"शीर्षे[1] सुतं पृष्ठतः" [ ] "शीर्षोपहारादिभिः आत्मदुःखैः[2] [ ] इति । " निर्देशादेव शिरसः 'शीर्ष'भावः " इति एके ॥ ३७ ॥

### मन्यात् । ३८ ।

कर्मणः परात् मन्यतेः णिन् प्रत्ययो भवति ।

पण्डितमानी । 'श्य'निर्देशः उत्तरार्थः ॥ ३८ ॥

### कर्तुः खश् । ३९ ।

प्रत्ययार्थकर्तुः कर्मणः परात् मन्यतेः 'खश्' प्रत्ययो भवति ।

पण्डितम् आत्मानं मन्यते पण्डितंमन्यः । सर्वज्ञंमन्यः । असरूपत्वात् णिन् अपि—पण्डितमानी । कर्तुः इति किम् ? दर्शनीयमानी चैत्रस्य । शकारः श्यार्थः ॥ ३९ ॥

### एजेः । ४० ।

कर्मणः परात् एजयतेः 'खश्' प्रत्ययो भवति ।

अङ्गमेजयः ॥ ४० ॥

### वह-अभ्रात् लिहः । ४१ ।

आभ्यां कर्मभ्यां परात् लिहेः 'खश्' प्रत्ययो भवति ।

वहंलिहो गौः । अभ्रंलिहः प्रासादः ॥ ४१ ॥

### ललाट-वात-शर्धात् तप-अज-हाकः । ४२ ।

ललाट-वात-शर्धेभ्यः कर्मभ्यः यथासंख्यं तपतेः अजतेः हाकश्च परः 'खश्' प्रत्ययो भवति ।

ललाटंतपः सूर्यः । वातमजाः मृगाः । शर्धंजहाः माषाः । हाकः ककारो 'हाङ्' निवृत्त्यर्थः ॥ ४२ ॥

### विधु-अरुष्-तिलात् तुदः । ४३ ।

एभ्यः कर्मभ्यः परात् तुदेः 'खश्' प्रत्ययो भवति ।

विधुंतुदः । अरुन्तुदः । तिलन्तुदः ॥ ४३ ॥

### कूलात् उद्रुजि-वहेः । ४४ ।

---

१ 'शीर्षे स्थितं पृष्ठतः" इति मुद्रितं हैमे ५।१।८२ । २ 'शीर्षोपहारादिभिः" इति मुद्रितं शाकटायनीये-४।३।११८ ।

'कूल' शब्दात् कर्मणः परात् उत्पूर्वात् रुजेः वहेश्च परः 'खश्' प्रत्ययो भवति ।

कूलमुद्रुजः । कूलमुद्वहः ॥ ४४ ॥

### पाणेः ध्मः । ४५ ।

'पाणि'शब्दात् कर्मणः परात् धमतेः 'खश्' प्रत्ययो भवति ।

पाणिंधमः । पाणिंधमाः पन्थानः इति तद्योगात् यथा 'वृक्षा हसन्ति' इति ॥ ४५ ॥

### घटी[२]-खरी-नाडी-नासिका-वातात् धेटश्च । ४६ ।

एभ्यः कर्मभ्यः परात् धेटेः धमतेश्च परः 'खश्' प्रत्ययो भवति ।

घटिंधमः, घटिंधयः । खरिंधमः, खरिंधयः । नाडिंधमः, नाडिंधयः । नासिकंधमः, नासिकंधयः । वातंधमः, वातंधयः ॥ ४६ ॥

### शुनी-स्तनात् । ४७ ।

आभ्यां कर्मभ्यां परात् धेटः 'खश्' प्रत्ययो भवति ।

शुनिंधयः । स्तनंधयः ॥ ४७ ॥

### करीष-अभ्र-कूलात् कषः । ४८ ।

एभ्यः कर्मभ्यः परात् कषेः 'खश्' प्रत्ययो भवति ।

करीषंकषा वात्या । अभ्रंकषः प्रासादः । कूलंकषा नदी ॥ ४८ ॥

### सर्वात् सहश्च । ४९ ।

'सर्व' शब्दात् कर्मणः परात् सहेः कषेश्च 'खश्' प्रत्ययो भवति ।

सर्वंसहः । सर्वंकषः ॥ ४९ ॥

### मित-नख-परिमाणात् पचः । ५० ।

'मित' आदिभ्यः कर्मभ्यः परात् पचेः 'खश्' प्रत्ययो भवति । सर्वतः मानं परिमाणम्—प्रस्थादि ।

मितंपचा ब्राह्मणी । नखंपचा यवागूः । प्रस्थंपचा स्थाली ॥ ५० ॥

### प्रिय-वशात् वदः । ५१ ।

आभ्यां कर्मभ्यां परात् वदेः 'खश्' प्रत्ययो भवति ।

प्रियंवदः । वशंवदः ॥ ५१ ॥

---

१ पाणिंधमपुरुषयोगात् पन्था अपि पाणिंधमः इति औपचारिकं पदम् । एतस्य च सूचनाय अग्रे दृष्टान्तं दर्शयति । २ अत्र सूत्रे हैमे ५।१।१२० सूत्रे तथा शाकटायनीये ४।३।१४९। सूत्रे 'मुष्टि' शब्दः समधिको वर्तते ।

**मेघ-ऋति-भय-अभयात् कृञः खः । ५२ ।**

एभ्यः कर्मभ्यः परात् कृञः खः प्रत्ययो भवति ।

मेघंकरः । ऋतिंकरः । भयंकरः । अभयंकरः ॥ ५२ ॥

**शमः संज्ञायाम् अत् । ५३ ।**

शमः परात् धातोः संज्ञायाम् 'अत्' प्रत्ययो भवति ।

शङ्करः । शम्भवः । 'हेतु' आदिविवक्षायामपि परत्वात् अयमेव प्रत्ययः—शङ्करा नाम परिव्राजिका । संज्ञायाम् इति किम्? शङ्करी विद्या ॥ ५३ ॥

**स्थः कः । ५४ ।**

नाम्नः परात् तिष्ठतेः कः प्रत्ययो भवति ।

समस्थः । विषमस्थः । परत्वात् अयं 'शमः संज्ञायाम् अत्' [ कृत् पा० २ सू० ५३ ] इति बाधते । शंस्थो नाम कश्चित् । असरूपत्वात् क्विपः समावेशः—संस्थाः ॥ ५४ ॥

**दुहः घः च । ५५ ।**

नाम्नः परात् दुहेः कः प्रत्ययो भवति, घकारश्च अन्तादेशः ।

कामं दुग्धे कामदुघा ॥ ५५ ॥

**'विहग'आदयः । ५६ ।**

'विहग' आदयः 'डकार' आदिप्रत्ययान्ता यथादर्शनं निपात्यन्ते ।

विहायसा गच्छति विहगः, विहङ्गः, विहङ्गमः । सुग-दुर्गौ आधारे । उरसा गच्छति उरगः । फलानि गृह्णाति फलेग्रहिः । आत्मानं बिभर्ति आत्मंभरिः । ब्रह्माणं हन्ति टक् ब्रह्मघ्नः । राजानं हन्ति राजघः । पाणिम् पाणिना वा हन्ति इति पाणिघः । ताडघः । भृ-वृ-तॄ-धारि-जि-दमि-तपि-सहेः संज्ञायाम्—विश्वंभरा वसुधा । पतिंवरा कन्या । रथंतरं साम । वसुंधरा पृथ्वी । शत्रुंजयः पर्वतः । अरिन्दमः, शत्रुन्दमः, शत्रुंतपः, शत्रुंसहः एवंनामानो राजानः । संज्ञायाः अन्यत्र कुटुम्बं बिभर्ति कुटुम्बभारः । वाचंयमः व्रती । वाग्यामः अन्यः । द्विषन्तं तापयति इति द्विषन्तपः, परंतपः । अण्यन्तस्य न भवति—द्विषत्तापः, परतापः । इह न स्यात्—द्विषतीतापः । भगं दारयति इति भगन्दरो व्याधिः । पुरं दारयति इति पुरन्दरः[1] । 'पुर' शब्दात् तु न भवति—पुरदारः[2] । इरा सुरा तया माद्यति इरम्मदः । उग्रं पश्यति उग्रंपश्यः । सूर्यम् अपि न पश्यन्ति असूर्यंपश्या राजदाराः एवं नाम गुप्ता यत् अपरिहार्यदर्शनं सूर्यम् अपि न पश्यन्ति इत्यर्थः । तुन्दं परिमार्ष्टि तुन्दपरिमृजः अलसः ।

---

१. एतत् क्विबन्तस्य प्रथमैकवचनम् । २ अत्र रकारान्तः 'पुर्' शब्दः निपातनाच्च 'पुर्' इत्यस्य 'पुरं' साधनीयम् । अकारान्तात् तु 'पुर' शब्दात् 'पुरदारः' इति ।

तुन्दपरिमार्जः अन्यः । शोकापनुदः शोकस्य हर्ता । शोकापनोदः अन्यः । स्तम्बे रमते स्तम्बेरमो हस्ती । स्तम्बे रन्ता अन्यः । कर्णेजपः सूचकः । कर्णे जपिता अन्यः । मूलानि विभुजति मूलविभुजो रथः । कौ मोदते कुमुदम् । द्वाभ्यां पिबति द्विपः । धर्माय प्रददाति धर्मप्रदः । शास्त्रेण प्रजानाति शास्त्रप्रज्ञः इत्यादि ॥ ५६ ॥

**भजः विण् । ५७ ।**

नाम्नः परात् भजेः विण् प्रत्ययो भवति ।

अर्धभाक् । वकारः विण्—क्विपोः समत्वार्थः । तेन इह क्विप् न भवति ॥ ५७ ॥

**स्पृशः अनुदकात् क्विप् । ५८ ।**

'उदक' वर्जात् नाम्नः परात् स्पृशतेः 'क्विप्' प्रत्ययो भवति । घृतं स्पृशति घृतस्पृक् । 'अनुदकात्' इति 'उदक' सदृशम् अनुपसर्गनाम गृह्यते तेन इह न भवति— उपस्पृशति । अनुदकात् इति किम् ? उदकस्पर्शः ॥ ५८ ॥

**अदः अनन्नात् । ५९ ।**

'अन्न' वर्जात् नाम्नः परात् अदेः 'क्विप्' प्रत्ययो भवति ।

सस्यम् अत्ति सस्यात् । अनन्नात् इति किम् ? अन्नादः ॥ ५९ ॥

**मन् वन् क्वनिप् विच् च क्वचित् । ६० ।**

नाम्नः परात् धातोः 'मन्' आदिप्रत्यया लक्ष्यानुसारेण भवन्ति चकारात् क्विप् च ।

मन्—सुशर्मा । शर्म । घर्म । हेम । दाम । वन्—विजावा । अग्रेगावा । क्वनिप्— प्रातरित्वा । विच्—विट् । जागः । कीलालपाः । क्विप्—सत् । प्रसत् । अन्तरिक्षसत् । सूः । अण्डसूः । प्रसूः । द्विट् । मित्रद्विट् । मित्रध्रुक् । गोधुक् । युङ्[1] । अश्वयुक् । तत्त्ववित् । प्रवित् । काष्ठभित् । प्रभित् । छित् । भवच्छित् । प्रजित् । शत्रुजित् । नीः । सेनानीः । विराट् । राजराट् । ऋतुम् ऋतवे ऋतुप्रयोजनो वा यजति इति ऋत्विक् । 'क्वचित्' ग्रहणं प्रयोगा- नुसरणार्थम् तेन सर्वस्मात् धातोः एते प्रत्ययाः किन्तु यथादर्शनम् । तथा क्वचित् अनाम- पूर्वात् अपि ॥ ६० ॥

**क्रव्यात्-क्रव्यादौ आम-पक्वादौ । ६१ ।**

एतौ यथासंख्यं आमादिनि पक्वादिनि च अर्थे निपात्येते ।

क्रव्यम् अत्ति क्रव्यात् आममांसभक्षकः । क्रव्यादः पक्वमांसभक्षकः । वृत्तौ[2] एव 'क्रव्य' शब्दः पक्वमांसे वर्तते । सिद्धौ प्रत्ययौ, विषयनियमार्थं वचनम् ॥ ६१ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ कृति द्वितीयः पादः ॥

---

१ प्रथमैकवचनम्-युङ् युञ्जौ युञ्जः । २. आममांसवाची अपि 'क्रव्य' शब्दः 'क्रव्याद' इति निपातनसामर्थ्यात् वृत्तौ पक्वमांसे वर्तते अथवा कृत-विकृत शब्दस्य पक्वमांसार्थस्य पृषोदरादित्वात् 'क्रव्य' आदेशः" इति हैमे ५।१।१५१ । सूत्रे स्पष्टीकरणम् ।

## कृदन्ते तृतीयः पादः

### स्थूल-पलित-नग्न-प्रिय-अन्ध-सुभग-आढ्य-तदन्तात् अच्वेः च्व्यर्थे भुवः खिष्णु-खुकञौ । १ ।

'स्थूल' आदेः तदन्तात् च नाम्नः अच्व्यन्तात् च्व्यर्थे वर्तमानात् परात् भुवः खिष्णु-'खुकञ्' प्रत्ययौ भवतः ।

अस्थूलः स्थूलो भवति स्थूलंभविष्णुः । स्थूलंभावुकः । पलितंभविष्णुः । पलितंभावुकः । नग्नंभविष्णुः । नग्नंभावुकः । अन्धंभविष्णुः । अन्धभावुकः । सुभगंभविष्णुः । सुभगंभावुकः । आढ्यंविष्णुः । आढ्यंभावुकः । तदन्तः—अस्थूलंभविष्णुः । अस्थूलभावुकः । अच्वेः इति किम् ? स्थूलीभविता । च्व्यर्थे इति किम् ? सुभगो भविता ॥ १ ॥

### कृञः करणे खनट् । २ ।

स्थूलादिभ्यः तदन्तेभ्यः च्व्यर्थे वर्तमानेभ्यः अच्व्यन्तेभ्यः परात् कृञः करणे खनट् प्रत्ययो भवति ।

अस्थूलः स्थूलः क्रियते अनेन स्थूलंकरणं दधि । पलितंकरणं तैलम् । नग्नंकरणं द्यूतम् । प्रियंकरणो मन्त्रः । अन्धंकरणं तैलम् । सुभगंकरणं चूर्णम् । आढ्यंकरणं वित्तम् । तदन्तः—अस्थूलंकरणं परिदेवनम् इत्यादि । अच्वेः इति किम् ? स्थूलीकुर्वन्ति अनेन । अत एव प्रतिषेधात् अनट् अपि न भवति । अन्यथाभावात् 'अच्वेः' इति प्रतिषेधः व्यर्थः स्यात् । च्व्यर्थे इति किम् ? सुभगं कुर्वन्ति तैलेन, इह अनाश्रितपूर्वावस्थं सुभगकरणमात्रं विवक्षितम् ॥ २ ॥

### 'भस्म' आदयः भूते । ३ ।

'भस्म' आदयः 'मन्' आदिप्रत्ययान्ता भूते काले वेदितव्याः ।

भसितं तत् इति भस्म । वृतं तत्र इति वर्त्म । 'भस्म' आदयः प्रयोगगम्याः ॥ ३ ॥

### सु-यजोः ङ्वनिप् । ४ ।

आभ्यां भूते 'ङ्वनिप्' प्रत्ययो भवति ।

सुत्वा । यज्वा । 'वन्'-'क्वनिप्'भ्यां सिद्धौ भूते नियमार्थं वचनम् ॥ ४ ॥

### जृषः अतृ । ५ ।

जृषः भूते 'अतृ' प्रत्ययो भवति ।

जरन् ॥ ५ ॥

**सप्तम्या जनेः डः । ६ ।**

सप्तम्यन्तात् नाम्नः परात् जनेः भूते काले डः प्रत्ययो भवति ।

उपसरे जातः उपसरजः ॥ ६ ॥

**अजातेः पञ्चम्याः । ७ ।**

अजातिवाचिनः पञ्चम्यन्तात् परात् जनेः भूते डः प्रत्ययो भवति ।

बुद्धेः जातः बुद्धिजः संस्कारः । अजातेः इति किम् ? अश्वात् जातः । हस्तिनो जातः ॥ ७ ॥

**क्वचित् । ८ ।**

धातोः परः लक्ष्यानुसारेण क्वचित् डः प्रत्ययो भवति ।

किं जातेन किंजः । क्षत्रियजं युद्धम् । पुमांसम् अनुजातः पुंसानुजः । वरम् आहन्ति वराहः । परिखाता परिखा । खम् ॥ ८ ॥

**कर्मणः दृशः क्वनिप् । ९ ।**

कर्मणः परात् दृशेः भूते अर्थे वर्तमानात् 'क्वनिप्' प्रत्ययो भवति ।

परलोकदृश्वा ॥ ९ ॥

**राज-सहाभ्यां युधेः कृञः । १० ।**

आभ्यां कर्मभ्यां परात् युधेः कृञश्च भूते काले क्वनिप् प्रत्ययो भवति । वचनभेदात् न यथासंख्यम् ।

राजयुद्ध्वा । राजकृत्वा । सहयुद्ध्वा । सहकृत्वा । युधिः योधयत्यर्थे सकर्मकः । अकर्मका अपि हि धातवः ण्यर्थे वर्तमानाः सकर्मकाः । यथा "नेमिं नमन्ति" [ ] इति ॥ १० ॥

**इन् विक्रियः कुत्स्ये । ११ ।**

कर्मणः परात् 'वि'पूर्वात् क्रीणातेः भूते काले कुत्स्ये कर्तरि इन् प्रत्ययो भवति ।

तैलं विक्रीतवान् तैलविक्रयी ब्राह्मणः । कुत्स्ये इति किम् ? तैलविक्रायैः ॥ ११ ॥

**हनः णिन् । १२ ।**

---

१ "केन जातः किंजः–अनिर्ज्ञातपितृकः"-इत्यपि हैमे व्युत्पत्तिः–५।१।१७१ । २ "जन्यते इति जम्' हैमं वचनम् ;। ३. वणिक्' इति अध्याहार्यम् ।

कर्मणः परात् हन्तेः भूते काले कुत्स्ये कर्तरि णिन् प्रत्ययो भवति ।

पितृघाती । कुत्स्ये इति किम् ? चौरं हतवान् ॥ १२ ॥

**ब्रह्म-भ्रूण-वृत्रात् क्विप् । १३ ।**

'ब्रह्म' आदिभ्यः कर्मभ्यः परात् हन्तेः क्विप् एव प्रत्ययो भवति ।

ब्रह्महा । भ्रूणहा । वृत्रहा । अन्यः प्रत्ययः णिन् अण् वा न भवति ।

अपरो नियमः—ब्रह्म-भ्रूण-वृत्रात् एव हन्तेः भूते क्विप् । तेन इह न भवति—पुरुषं हतवान् । 'आखुहा बिडालः' इति अभूते ।

अन्यो नियमः—ब्रह्म-भ्रूण-वृत्रात् हन्तेः एव भूते क्विप् । इह न भवति—ब्रह्म अधीतवान् ।

पुनर्नियमः—ब्रह्म—भ्रूण—वृत्रात् हन्तेः भूते एव क्विप् । इह न भवति—ब्रह्माणं हनिष्यति ।

तन्त्रेण इमे चत्वारः योगाः "मन्"—[ कृदन्ते द्वितीयपादे सू० ६० ] इत्यादिना सिद्धे नियमार्थाः ॥ १३ ॥

**सु-कर्म-पुण्य-पाप-मन्त्रात् कृञः । १४ ।**

'सु' शब्दात् 'कर्म' आदिभ्यश्च कर्मभ्यः परात् कृञः भूते क्विप् प्रत्ययो भवति ।

सुष्ठु कृतवान् सुकृत् । कर्मकृत् । पुण्यकृत् । पापकृत् । मन्त्रकृत् । प्राग्वत् चतुर्विधो नियमः तेन प्रत्ययान्तरं न भवति । इह च न—मन्त्रम् अधीतवान् । कर्म करोति । शास्त्रं कृतवान् शास्त्रकृत् तीर्थकृत् इति च अभूते ॥ १४ ॥

**सोमात् सुञः । १५ ।**

'सोम' शब्दात् कर्मणः परात् सुञः भूते क्विप् प्रत्ययो भवति ।

सोमसुत् । अत्रापि चतुर्विधः नियमः तेन अन्यः प्रत्ययो न भवति । इह न—सुरां सुतवान् । सोमं पीतवान् । सोमं सुनोति ॥ १५ ॥

**अग्नेः चिञः । १६ ।**

'अग्नि' शब्दात् कर्मणः परात् चिनोतेः भूते क्विप् प्रत्ययो भवति ।

अग्निचित् । इहापि नियमः चतुर्विधः । तेन अन्यः प्रत्ययो न भवति । इह च न भवति—इष्टकाः चितवान् । अग्निं हुतवान् । अग्निं चिनोति । "मध्ये अपवादाः पूर्वान् विधीन् बाधन्ते न उत्तरान्" [ न्यायसंग्रहे न्याय ३७ पृ० ३७ ] इति 'अण्' आदिः एव बाध्यते न क्त-क्तवतू ॥ १६ ॥

## करणात् यजः णिन् । १७ ।

करणवाचिनः नाम्नः परात् यजेः भूते काले णिन् प्रत्ययो भवति ।

अग्निष्टोमेन इष्टवान् अग्निष्टोमयाजी । 'अग्निष्टोमयाजी अस्य पुत्रो जनिता' 'विश्वदृश्वा पुत्रः अस्य जनिता' इत्यादौ भविष्यता विशेष्येण संबध्यमानमपि 'अग्निष्टोमयाजि' आदिपदं विशेषणं भूतार्थमेव । 'अग्निष्टोमेन यक्ष्यमाणः पुत्रः अस्य जनिता' इति हि प्रयोगे अर्थान्तरमेव प्रतीयते । एवम्—भावि कृत्यम् आसीत् । भावि कृत्यं वर्तते इत्यादि ॥ १७ ॥

## वि-अभेः भुवः । १८ ।

वेः अभेश्च परात् भवतेः भूते णिन् प्रत्ययो भवति ।

विभावी । अभिभावी । भूते इति किम् ? अभिभवति ॥ १८ ॥

## क्त-क्तवतू । १९ ।

धातोः भूते अर्थे वर्तमानात् 'क्त'-क्तवतू' प्रत्ययौ भवतः ।

कृतः । कृतवान् । 'प्रकृतः कटः चैत्रेण' इत्यादौ समुदायस्य अभूतत्वे आदिकर्मणः भूतत्वम् ॥ १९ ॥

## अद्यतनी । २० ।

धातोः भूते अर्थे वर्तमानात् अद्यतनी भवति ।

अकार्षीत् ॥ २० ॥

## रात्रौ वसः अन्त्ययामाऽस्वप्तरि अद्य । २१ ।

रात्रौ भूते अर्थे वर्तमानात् वसेः धातोः 'अद्य' प्रयोगे अद्यतनी भवति, यदि रात्रेः अन्त्ययामम् अस्वप्तरि कर्तरि धात्वर्थो भवेत् ।

अमुत्र अवात्सम् । अन्त्ययामे मुहूर्तमपि स्वापे ह्यस्तनी—अमुत्र अवसम् । 'अद्य' इति प्रयोगकालनियमः तेन यत्र असौ अन्त्ययामः तस्मिन्नेव दिने यदि प्रयोगः तदा अद्यतनी न दिवसान्तरे ॥ २१ ॥

## अनद्यतने ह्यस्तनी । २२ ।

न्याय्यात् उत्थानात् आरभ्य न्याय्यं संवेशनं यावत् अद्यतनः कालः अहः उभयतः अर्धरात्रं वा । न विद्यते अद्यतनः यस्मिन् सः अनद्यतनः तस्मिन् भूते अर्थे वर्तमानात् धातोः ह्यस्तनी भवति ।

अपचत् । बहुव्रीहिपरिग्रहः किम् ? 'अद्य ह्यः वा अभुक्ष्महि' इति व्यामिश्रे भूतसामान्ये च न भवति । अद्यतनेऽपि अद्यतनः मुहूर्तादि सामान्यं वा अस्ति इति तत्रापि प्रतिषेधः । आगमाम घोषान् । अपाम पयः । "जम्बूद्वीपविदेहेऽभूत् इतः सप्तमजन्मनि" [. ] इत्यादौ भूतानद्यतनेऽपि भूतसामान्यविवक्षायाम् अद्यतनी ॥२२॥

## ख्याते दृश्ये । २३ ।

भूतानद्यतने प्रयोक्तुः दर्शनयोग्ये लोकविज्ञाते अर्थे वर्तमानात् धातोः परा ह्यस्तनी भवति ।

अदहत् अरातीन् **कुमारपालः** । दृश्ये इति किम् ? जघान कंसं किल **वासुदेवः** । ख्याते इति किम् ? चकार कटं चैत्रः । अनद्यतने इति किम् । उदगात् अद्य आदित्यः ॥ २३ ॥

## अयदि स्मृत्यर्थे भविष्यन्ती । २४ ।

स्मृत्यर्थे धातौ उपपदे सति भूतानद्यतने अर्थे वर्तमानात् धातोः भविष्यन्ती भवति 'यत्' शब्दप्रयोगाभावे ।

स्मरसि बुध्यसे अभिजानासि वा चैत्र ! **लाटदेशे** वत्स्यामः । अयदि इति किम् ? स्मरसि यद् **लाटदेशे** अवसाम ॥ २४ ॥

## साकाङ्क्षे वा । २५ ।

साकाङ्क्षे भूतानद्यतने अर्थे वर्तमानात् धातोः भविष्यन्ती वा भवति स्मृत्यर्थे धातौ उपपदे । 'अयदि' इति न अनुवर्तते तेन यदि तु परत्वात् अयमेव विकल्पः ।

स्मरसि चैत्र ! **निस्वपद्रके** वत्स्यामः तत्र मोदकान् भोक्ष्यामहे । पक्षे जानासि चैत्र ! **निस्वपद्रके** अवसाम तत्र मोदकान् अभुञ्ज्महि । अत्र वास-भोजनं लक्ष्य-लक्षणतया परस्परसाकाङ्क्षे—वासेन हि भोजनं लक्ष्यते ॥ २५ ॥

## अत्यन्तअपह्नवे परोक्षा । २६ ।

अत्यन्तअपह्नवो मूलत एव सर्वापलापः तस्मिन् गम्यमाने भूतानद्यतने वर्तमानात् धातोः परोक्षा भवति ।

किं त्वं **कलिङ्गेषु** गत्वा स्थितोऽसि ? कः **कलिङ्गान्** जगाम ? कः **कलिङ्गान्** ददर्श ? न अहं **कलिङ्गान्** जगाम । अत्यन्तग्रहणात् एकदेशापह्नवे ह्यस्तनी । न अहं **कलिङ्गेषु** अतिष्ठम् ॥ २६ ॥

## परोक्षे । २७ ।

प्रयोक्त्रा साक्षात् अनधिगतं परोक्षम् । तस्मिन् भूतानद्यतने अर्थे वर्तमानात् धातोः परोक्षा भवति ।

चकार । सुप्तः अहं किल विललाप ।

"अभूवन् तापसाः केचित् पाण्डुपत्र फलाशिनः ।

पारिव्रज्यं तदाऽऽदत्त मरीचिश्च तृषार्दितः" ॥ [ ]

इत्यादौ भूतानद्यतने परोक्षेऽपि भूतमात्रस्य भूतानद्यतनमात्रस्य च विवक्षायाम् अद्यतनी-ह्यस्तन्यौ । न हि वस्तुनि सर्वे धर्माः संभविनः अवश्यंविवक्षितव्याः । पृथग्योगः उत्तरार्थः ॥ २७ ॥

## ह-शश्वत्-पञ्चवर्षान्तःप्रच्छये ह्यस्तनी च । २८ ।

हे शश्वति च उपपदे पञ्चवर्षमध्यप्रच्छये च भूतानद्यतने परोक्षेऽर्थे वर्तमानात् धातोः ह्यस्तनी परोक्षा च भवति ।

अभिजानासि चैत्र ! ह इति ? ह अकरोत् । शश्वत् चकार । किम् अगच्छत् चैत्रः ? ह-शश्वत्-पञ्चवर्षान्तःप्रच्छये इति किम् ? जघान कंसं किल वासुदेवः । भूतानद्यतनमात्रविवक्षायां पक्षे ह्यस्तनीसिद्धौ वचनं स्मृत्यर्थे भविष्यन्तीबाधनार्थम् ॥ २८ ॥

## 'पुरा'आदौ वा अद्यतनी । २९ ।

'परोक्षा'इति निवृत्तम् । 'पुरा'आदौ उपपदे भूतानद्यतने अर्थे वर्तमानात् धातोः अद्यतनी वा भवति ।

अवात्सुः इह पुरा छात्राः पक्षे अवसन् इह पुरा छात्राः । "तदा अभाषिष्ट राघवः" [ ] अभाषत बभाषे वा । इति ह पुरा अकार्षीत् । शश्वत् पुरा अकार्षीत् । 'पुरा'योगे अद्यतनीवचनात् स्मृत्यर्थ-ह-शश्वत्-स्मेषु उपपदेषु सामान्यविवक्षायाम् अद्यतनी न भवति ॥ २९ ॥

## स्मे च वर्तमाना । ३० ।

'स्म'शब्दे पुरा च उपपदे भूतानद्यतनेऽर्थे वर्तमानात् धातोः वर्तमाना भवति ।

"पृच्छति स्म पुरोधसम्" [ ] । "वसन्ति इह पुरा छात्राः" । [ ] "अथ आह वर्णी विदितो महेश्वरैः" [ कुमारसंभवे सर्ग ५ श्लो० ६५ ] । 'स्म'-'पुरा' योगे परत्वात् वर्तमानैव—चैत्रेण स्म पुरा अधीयते ॥ ३० ॥

## ननौ पृष्टोक्तौ सति इव । ३१ ।

'अद्यतने' इति निवृत्तम् । पृष्टप्रतिवचने भूते अर्थे वर्तमानात् धातोः 'ननु'शब्दे उपपदे वर्तमाने इव प्रत्ययो भवति—वर्तमानकालविहिता वर्तमाना-शतृ-आनशो भवन्ति—इत्यर्थः ।

किम् अकार्षीः कटं चैत्र ! ? ननु करोमि भोः ! ननु कुर्वन्तम् कुर्वाणं वा मां पश्य । पृष्टोक्तौ इति किम् ? ननु अकार्षीत् कटं चैत्रः ॥ ३१ ॥

## न-न्वोः वा । ३२ ।

न-न्वोः उपपदयोः भूतेऽर्थे वर्तमानात् धातोः सति इव प्रत्ययो भवति वा ।

किम् अकार्षीः चैत्र ! ? न कुर्वन्तम् कुर्वाणं वा मां पश्य पक्षे न अकार्षम् । नु करोमि भोः ! । नु कुर्वन्तम् कुर्वाणं वा मां पश्य, नु अकार्षम् ॥ ३२ ॥

## सति वर्तमाना । ३३ ।

सन् विद्यमानः, सति अर्थे वर्तमानात् धातोः परा वर्तमाना भवति ।

पचति । पठति ॥ ३३ ॥

## द्विषः अरौ शतृ । ३४ ।

द्विषः सति अर्थे वर्तमानात् अरौ कर्तरि 'शतृ' प्रत्ययो भवति ।

द्विषन्—शत्रु इत्यर्थः । अरौ इति किम् ? पतिर्द्वेष्टा ॥ ३४ ॥

## अर्हः स्तुत्ये । ३५ ।

अर्हतेः सति अर्थे वर्तमानात् स्तुत्ये कर्तरि 'शतृ' प्रत्ययो भवति ।

अर्हन् विद्याम्-अत्र विद्यायोग्यतया प्रशंसा । स्तुत्ये इति किम् ? चौरः वधमर्हति ॥ ३५ ॥

## सुञः सत्रिणि । ३६ ।

सुञः सति अर्थे वर्तमानात् सत्रिणि कर्तरि 'शतृ' प्रत्ययो भवति ।

सुन्वन् सत्री । सत्रिणि इति किम् ? सुरां सुनोति ॥ ३६ ॥

## धारि-इङः अकृच्छ्रे । ३७ ।

अकृच्छ्रः सुखसाध्यः, तस्मिन् सति अर्थे वर्तमानात् धारेः इङश्च परः 'शतृ' प्रत्ययो भवति ।

---

१ हैमेऽपि एतद् उदाहरणम् ५।२।१६ सूत्रे । तत्रैव 'पृच्छति स्म' । 'वसन्ति' । इत्यादीनि उदाहरणानि । तथा "यावद् गिरः खे मरुतां चरन्ति" एतदपि पद्यं कुमारसंभवीयम् ।

धारयन् तर्कशास्त्रम् । अधीयन् पुण्डरीकम् । अकृच्छ्रे इति किम् ? कृच्छ्रेण धारयति । कृच्छ्रेण अधीते ॥ ३७ ॥

## पूङ्-यजः शानः । ३८ ।

आभ्यां सति अर्थे वर्तमानाभ्यां शानः प्रत्ययो भवति ।

पवमानः । यजमानः । आनशा न षष्ठीसमासः, न च यजेः अफलवति कर्तरि सः अस्ति इति वचनम् ॥ ३८ ॥

## शक्ति-वयः-शीले । ३९ ।

सति अर्थे वर्तमानात् धातोः शक्तौ वयसि शीले च गम्यमाने 'शान' प्रत्ययो भवति ।

कति इह पचमानाः—कति इह पाके समर्थाः ? इत्यर्थः । कति इह शिखण्डं वहमानाः ? यस्मिन् वयसि शिखण्डवहनम् तत् इह वयः गम्यते । कति इह मण्डयमानाः—मण्डनशीलाः ? इत्यर्थः ॥ ३९ ॥

## बुद्धि-इच्छा-पूजार्थ-ञीत्-शील्यादिभ्यः क्तः । ४० ।

बुद्ध्यर्थेभ्यः इच्छार्थेभ्यः पूजार्थेभ्यः 'ञि'अनुबन्धेभ्यः शील्यादिभ्यश्च सति अर्थे वर्तमानेभ्यः 'क्त' प्रत्ययो भवति ।

राज्ञां ज्ञातः । इच्छार्थ—राज्ञाम् इष्टः । राज्ञां मतः । राज्ञां पूजितः । राज्ञाम् अर्चितः । ञिमिदा—मिन्नः मिन्नवान् ।

शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट उद्यतः ।
संयतः शयितस्तुष्टो रुष्टो रुषित आसितः ॥

---

१. एतानि पद्यानि काशिकायाम्, शाकटायनचिन्तामणिवृत्तौ तथा हैमव्याकरणे किञ्चित् किञ्चित् क्वचिद् वा सर्वथा परिवर्तितरूपेण यथा विद्यन्ते तथा निर्दिश्यते—
काशिका —

'शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभौ अभिव्याहृत इत्यपि ॥
हृष्ट-तुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुः अमृतः पूर्ववत् स्मृतः ॥

कष्ट इति भविष्यति काले । अमृतः पूर्ववत्-वर्तमाने इत्यर्थः । तथा सुप्तः (सप्तः पाठान्तरम्)। शयितः । आशितः । लिप्तः । तृप्तः । इत्येवमादयः अपि वर्तमाने द्रष्टव्याः'' — ३।२।१८८ ।

कान्तोऽभिव्याहृतो हृष्टः तृप्तः सृप्तोऽमृतस्तथा ।
लिप्तः स्निग्धश्च दयितः इत्याद्याः सति[१] लक्षिताः ॥
कष्टं भविष्यतीत्याहुः स गम्यादिषु दृश्यताम् ॥ ४० ॥

## सं-वि-प्रात् अनाम्नि भुवो डुः । । ४१ ।

सं-वि-प्रेभ्यः परात् भवतेः सति अर्थे वर्तमानात् अनाम्नि 'डु' प्रत्ययो भवति । संभुः । विभुः । प्रभुः । अनाम्नि इति किम् ? विभुर्नाम कश्चित् ॥ ४१ ॥

## 'मितद्रु'आदयः । ४२ ।

एते 'डु' प्रत्ययान्ता निपात्यन्ते ।

मितं द्रवति मितद्रुः । शंभुः । स्वयंभुः । "सभुवः सदृशम्" [ ] "स्वयंभुवा भूतहितेन" [ श्री समन्तभद्राचार्यरचितस्वयंभुस्तोत्र श्लो० १ ] इति क्विबन्तौ । 'मितद्रु' आदयः प्रयोगगम्याः ॥ ४२ ॥

## इत्रः पुवः दैवते । ४३ ।

'पू'धातोः सवर्थवृत्तेः दैवते कर्तरि 'इत्र' प्रत्ययो भवति ।

पवित्रः अर्हन् स मां पुनातु ॥ ४३ ॥

---

शाकटायनचिन्ता०—

"शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट उद्यतः ।
संयतः शयितः तुष्टः रुष्टो रुषित आसितः ॥
कान्तोऽभिव्याहृतो हृष्टो दृप्तः तृप्त-सृप्तस्तथा ।
लिप्तः स्निग्धश्च दयितः इत्याद्याः सति लक्षिताः ॥
कष्ट भविष्यतीत्याहुः स गम्यादिषु दृश्यताम् । — ४।३।२७९ ।

हैम०—

"शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट उद्यतः ।
संयतः शयितः तुष्टः रुष्टो रुषित आशितः ॥
कान्तोऽभिव्याहृतो हृष्टः तृप्तः सृप्तः स्थितो मृतः ।
अमृतो मुदितः पूर्तः शक्तोऽशक्तः श्रान्त-विस्मितौ ॥
संरब्धा-ऽऽरब्ध-दयिता दिग्धः स्निग्धोऽवतीर्णकः ।
आरूढो मूढ आयस्तः क्षुधित-क्रान्त-व्रीडिताः ॥
मत्तश्चैव तथा क्रुद्धः श्लिष्टः सुहित इत्यपि ।
लिप्त-हसौ च विज्ञेयौ सति लमादयस्तथा" ॥ — ५।२।९२ ।

१. °ति तक्षिताः पा० । २. कष्टं भवनीत्याहुः पा० पू० ।

## संज्ञा-ऋषौ करणे । ४४ ।

'पू'धातोः संज्ञायाम् ऋषौ च करणे 'इत्र' प्रत्ययो भवति ।

ओघोपकरणं पवित्रम् । पवित्रः अयम् ऋषिः ॥ ४४ ॥

## खेन-सह-लू-धू-चर-अर्तेः । ४५ ।

एभ्यः सदर्थवृत्तिभ्यः करणे 'इत्र' प्रत्ययो भवति ।

खनित्रम् । सहित्रम् । लवित्रम् । धवित्रम् । चरित्रम् । अरित्रम् ॥ ४५ ॥

## दाप्-नी-यु-युज-सि-सिच-स्तु-तुद-मिह-नह-दंश-शस्-पतेः त्रट् । ४६ ।

एभ्यः सदर्थवृत्तिभ्यः करणे 'त्रट्' प्रत्ययो भवति ।

दाति अनेन दात्रम् । नेत्रम् । योत्रम् । योक्त्रम् । सेत्रम् । सेक्त्रम् । स्तोत्रम् । तोत्त्रम् । मेढ्रम् । नध्री । दंष्ट्रा । शस्त्रम् । पत्रम् । टकारः 'नध्री' इति ङीप्रत्ययार्थः । 'दंष्ट्रा' इति अजादित्वाद् आप् ॥ ४६ ॥

## हल-क्रोडमुखे पुवः । ४७ ।

पुवो धातोः हलमुखे क्रोडमुखे च करणे 'त्रट्' प्रत्ययो भवति ।

हलस्य पोत्रम् । सूकरस्य पोत्रम्-मुखम्-इत्यर्थः ॥ ४७ ॥

## धात्री । ४८ ।

धेटः धाञश्च कर्मणि 'त्रट्' प्रत्ययो निपात्यते ।

धयति ताम् इति धात्री—स्तनदायिनी । दधाति तां व्याधिषु इति धात्री—आमलकी ॥ ४८ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ कृति तृतीयः पादः समाप्तः ॥

---

१ "लूधूसूखनसहचरअर्तेः" ४।३।२७२। शा० अमो० । अत्र सूत्रवृत्तौ 'सवित्रम्'इति उदाहृतम् । एवमेव काशिकायाम् ३।२।१८४ । हैमेऽपि ५।२।८७ । तथापि नैतत् मलयगिरिसूत्रे उदाहरणे वा ।

## कृदन्ते चतुर्थः पादः

### शील-साधु-धर्मे तृन् । १ ।

'सति' इति वर्तते। 'शील' आदौ सति अर्थे वर्तमानात् धातोः 'तृन्' प्रत्ययो भवति।

कटं कर्ता—करणम् अस्य शीलम् इत्यर्थः। गन्ता खेलम्—साधु गच्छति इत्यर्थः। धर्मः अनुप्रवृत्त आचारः। वधूम् ऊढां मुण्डयितारः श्राविष्ठायनाः—मुण्डनम् एतेषां कुलधर्मः इत्यर्थः। 'सति' इति अधिकारः 'एष्यत्' अधिकारात् प्राक् द्रष्टव्यः ॥ १ ॥

### शॄ-हन-वृष-भू-स्था-कम-गमात् उकण् । २ ।

एभ्यः शीलादौ अर्थे 'उकण्' प्रत्ययो भवति ।

प्रशारुकः। आघातुकः। वर्षुकः। भावुकः। प्रस्थायुकः। कामुकः। आगामुकः ॥२॥

### लषि-पति-पदिभ्यः । ३ ।

एभ्यः शीलादौ अर्थे 'उकण्' प्रत्ययो भवति ।

अपलाषुकः। पातुकः। उपपादुकः। बहुवचनं शीलादिभिः सह यथासंख्या-ऽभावार्थम्। पृथग्योगः उत्तरार्थः ॥ ३ ॥

### भूषा-क्रोधार्थ-सृ-गृधि-जु-ज्वल-शुभश्च अनः । ४ ।

एभ्यः 'लष' आदिभ्यश्च शीलादौ सति अर्थे 'अन' प्रत्ययो भवति ।

भूषणः। मण्डनः। क्रोधार्थ—क्रोधनः। रोषणः। सरणः। गर्धनः। जवनः। जवतिः वेगे संस्कारे च सौत्रो धातुः। ज्वलनः। शोभनः। लषणः। पतनः। पदनः। पदेः 'अन'-वचनं सकर्मकार्थम् ॥ ४ ॥

### शब्द-चालार्थात् अकर्मकात् । ५ ।

शब्दार्थात् चालार्थात् च अकर्मकात् शीलादौ अर्थे 'अन'[1] प्रत्ययो भवति ।

शब्दनः। चलनः। कम्पनः। अकर्मकात् इति किम्? पठिता विद्याम् ॥ ५ ॥

### ङित्-इतः व्यञ्जनाद्यन्तात् । ६ ।

ङितः इदितश्च व्यञ्जनाद्यन्तात् अकर्मकात् शीलादौ अर्थे 'अन' प्रत्ययो भवति ।

---

१. 'शुच' इति काशिका ३।२।१५०। हैमेऽपि ५।२।४२। २. अनः प्रॅ पा० ।

वृतूङ्–वर्तनः । स्पर्द्धि–स्पर्धनः । व्यञ्जनाद्यन्तात् इति किम् ? एधिता । धर्ता । अकर्मकात् इति किम् ? वसिता वस्त्रम् ॥ ६ ॥

**न णिङ्-य-सूद-दीप-दीक्षः । ७ ।**

णिङन्तात् यकारान्तात् 'सूद' आदिभ्यश्च शीलादौ अर्थे 'अन' प्रत्ययो न भवति । हस्तयिता । क्नूयिता । सूदिता । दीपिता । दीक्षिता । मधुसूदनः, रिपुसूदनः इति नन्द्यादिः ॥७॥

**द्रम-क्रमः यङः । ८ ।**

आभ्यां यङन्ताभ्यां शीलादौ अर्थे 'अन' प्रत्ययो भवति ।

दन्द्रमणः । चङ्क्रमणः । 'य' इति निवृत्त्यर्थम् सकर्मकार्थं वचनम् अतः[1] लुग् हि प्रत्ययविषयभूते भवति ॥ ८ ॥

**भू-जेः ष्णुक् । ९ ।**

आभ्यां शीलादौ अर्थे 'ष्णुक्' प्रत्ययो भवति ।

भूष्णुः । जिष्णुः ॥ ९ ॥

**ग्ला-स्थः स्नुः । १० ।**

आभ्यां शीलादौ अर्थे 'स्नु' प्रत्ययो भवति ।

ग्लास्नुः । स्थास्नुः ॥ १० ॥

**वृत्-वृधू-भ्राज-सह-चर-रुच-अपत्रप-अलंकृञ्-निराकृञः इष्णुः । ११ ।**

एभ्यः शीलादौ अर्थे 'इष्णु' प्रत्ययो भवति ।

वर्तिष्णुः । वर्धिष्णुः । भ्राजिष्णुः । सहिष्णुः । चरिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । अलंकरिष्णुः । निराकरिष्णुः ॥ ११ ॥

**उदः पचि-पति-पदि-मदेः । १२ ।**

'उत्'पूर्वेभ्यः एभ्यः शीलादौ अर्थे 'इष्णु' प्रत्ययो भवति ।

उत्पचिष्णुः । उत्पतिष्णुः । उत्पदिष्णुः । उन्मदिष्णुः ॥ १२ ॥

**दुष-द्विष-द्रुह-दुह-अभ्याहन-युज-भुज-भज-रुज-रज-त्यज-अनुरुधः घिनञ् । १३ ।**

एभ्यः शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

दोषी । द्वेषी । द्रोही । दोही । अभ्याघाती । योगी । भोगी । भागी । रोगी । रागी ।

---

१. "अतः ४।३।८२। इति हि लुक् प्रत्यये विषयभूतेऽपि भवति" ५।२।४६ । इति हैमे ।

निर्देशात् एव 'न'लुक् । त्यागी । अनुरोधी । 'युज' इति युज्यते-युनक्त्योः ग्रहणम् अविशेषात् ॥ १३ ॥

### 'शम्'अष्टकात् । १४ ।

'शम्' आदिभ्यः अष्टभ्यः शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

शमी । दमी । श्रमी । भ्रमी । क्रमी । क्लमी । मादी । प्रमादी ॥ १४ ॥

### आङः यम-यस-क्रीड-मुषः । १५ ।

'आङ्'पूर्वेभ्यः 'यम्' आदिभ्यः शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

आयामी । आयासी । आक्रीडी । आमोषी । शीलादीयाः प्रायेण रूढिप्रकाराः प्रयोगानुसारेण युज्यन्ते इति उपसर्गाश्रिक्ये न भवति, एवम् अन्यत्रापि ॥१५॥

### समः सृज-पृच-ज्वरः अकर्मकात् । १६ ।

'सम्' पूर्वेभ्य एभ्यः अकर्मकभ्य शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

संसर्गी । संपर्की । सञ्वरी । अकर्मकात् इति किम् ? सपृणक्ति शाकम् ॥ १६ ॥

### वेः कत्थ-विच-स्रम्भ-कष-कस-हनः । १७ ।

'वि' पूर्वेभ्यः एभ्यः शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

विकत्थी । विवेकी । विस्रम्भी । विकाषी । विकासी । विघाती । ॥१७॥

### लषः अपात् च । १८ ।

अपात् वेः च परात् लषेः शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

अपलाषी । विलाषी । अभेः अपि केचित् इच्छन्ति—अभिलाषी ॥ १८ ॥

### अतेश्च चरेः । १९ ।

अतेः अपात् च परात् चरेः शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

अतिचारी । अपचारी । "सम्-अभि-व्यभेः अपि" [हैमं मतम् ] केचित्—संचारी । अभिचारी । व्यभिचारी ॥ १९ ॥

### प्रात् सर्ति-द्रु-मथ-वद-वसः । २० ।

'प्र'पूर्वेभ्यः एभ्यः शीलादौ अर्थे 'घिनञ्' प्रत्ययो भवति ।

---

१. घिनण् पा० पू० । २ "साध्वादयः प्रायेण" शा० लघु० ४।३।२४३ । ३. "लषः अपे च"–४।३।२४६ । इति शाकटायनीयम् । ४. "सम्-अति-अप-अभि-व्यभेः चर." ५।२।६२ । इति हैमं सूत्रम् ।

प्रसारी। प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी । "वे": अपि द्रु-सर्तिभ्याम्" [हैमं मतम् ] केचित्--विद्रावी । विसारी ॥ २० ॥

## परेः सृ-दह-मुह-वद-देवृ-देवेः । २१ ।

'परि'पूर्वेभ्यः शीलादौ अर्थे ' घिनञ्' प्रत्ययो भवति ।

परिसारी । परिदाही । परिमोही । परिवादी । परिदेवते--परिदेवी । परिदेवयति--परिदेवी ॥ २१ ॥

## क्षिप-रटः । २२ ।

'परि' पूर्वाभ्याम् आभ्यां शीलादौ सति अर्थे 'घिनञ्' प्रत्ययो भवति ।

परिक्षेपी । परिराटी । ॥ २२ ॥

## वादेश्च वुण् । २३ ।

'परि' पूर्वात् वादयतेः क्षिप-रटिभ्यां च शीलादौ अर्थे 'वुण्' प्रत्ययो भवति ।

परिवादकः । परिक्षेपकः । परिराटकः । अतः 'वुण्' वचनात् 'तृच्' आदयः शीलादिविषये असरूपत्वात् न भवन्ति ॥ २३ ॥

## क्लिश-हिंस-खाद-विनाशि-व्याभाष-असूय-निन्दः । २४ ।

एभ्यः शीलादौ अर्थे 'वुण्' प्रत्ययो भवति ।

क्लेशकः । हिंसकः । खादकः । विनाशकः । व्याभाषकः । असूयकः । निन्दकः ॥२४॥

## उपसर्गात् देवृ-देवि-क्रुशः । २५ ।

उपसर्गात् परेभ्यः एभ्यः शीलादौ सति अर्थे 'वुण्' प्रत्ययो भवति ।

आदेवकः । परिदेवकः । आदेवयति आदेवकः । परिदेवकः । आक्रोशकः । उपसर्गात् इति किम् ? देवनः । देवयिता । क्रोष्टा ॥ २५ ॥

## त्रसि-गृधि-घृषि-क्षिपः क्नुः । २६ ।

एभ्यः शीलादौ सति अर्थे 'क्नु' प्रत्ययो भवति ।

त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्णुः ॥ २६ ॥

## शदि-सदि-दा-सि-धेटः रुः । २७ ।

एभ्यः शीलादौ सति अर्थे 'रु' प्रत्ययो भवति ।

---

१. ५।२।५४ तथा ५५ हैमं सूत्रम् ।

शद्रुः । सद्रुः । दारुः । सेरुः । धारुः ॥ २७ ॥

**सन्-भिक्ष्-आशंसेः उः । २८ ।**

'सन्'अन्तात् भिक्ष्-आशंसिभ्यां च शीलादौ सति अर्थे 'उ' प्रत्ययो भवति ।

लिप्सुः । चिकीर्षुः । भिक्षुः । आशंसुः ॥ २८ ॥

**विन्दु-इच्छू । २९ ।**

एतौ 'उ' प्रत्ययान्तौ निपात्येते ।

वेत्तेः 'उ' प्रत्ययः नम्—विन्दुः । इच्छतेः इच्छुः ॥ २९ ॥

**तन्द्रा-निद्रा-शीङ्-श्रद्धा-स्पृहि-गृहि-पति-दयात् आलुः । ३० ।**

'तन्द्रा' इति 'तत्'शब्दपूर्वः द्रातिः[1] । निर्देशात् एव च दकारस्य[2] नकारः । स्पृहि-गृहि-पतयः चुरादयः । एभ्यः शीलादौ सति अर्थे 'आलु' प्रत्ययो भवति ।

तन्द्रालुः । निद्रालुः । शयालुः । श्रद्धालुः । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः ॥ ३० ॥

**कुट्टि-लुण्टि-वृञ्-जल्पि-भिक्षात् आकट् । ३१ ।**

एभ्यः शीलादौ सति अर्थे 'आकट्' प्रत्ययो भवति ।

कुट्टाकः । लुण्टाकः । वराकः । जल्पाकः । भिक्षाकः । कुट्टाकी । लुण्टाकी । वराकी । जल्पाकी । भिक्षाकी ॥ ३१ ॥

**मरक् सृ-अद्-घसः । ३२ ।**

'सृ' आदिभ्यः शीलादौ सति अर्थे 'मरक्' प्रत्ययो भवति ।

सृमरः । अद्मरः । घस्मरः ॥ ३२ ॥

**इः सहि-वहि-चलि-पापतः यङः । ३३ ।**

एभ्यः यङन्तेभ्यः परः शीलादौ सति अर्थे 'इ' प्रत्ययो भवति ।

सासहिः । वावहिः । चाचलिः । पापतिः । अत एव निर्देशात् पतेः 'नीः' न भवति ॥ ३३ ॥

**दधि-सस्रि-चक्रि-जज्ञि-नेमिः । ३४ ।**

---

१. "'निद्रा-तन्द्रा' इति नि-तत्पूर्वात् द्रायतेः" ४।३।२३१ शा० । हेमचन्द्रस्तु द्रातेः द्रायतेर्वा मन्यते अथवा तन्द्रं इति सौत्रं धातुं स्वीकरोति-५।२।३७। २ 'तद्' इत्यस्य दकारस्य ।

एते शीलादौ सति अर्थे 'इ' प्रत्ययान्ता निपात्यन्ते ।

दधातेः इः कित् द्विर्वचनं च—दधिः । सृ—सस्रिः । कृञः चक्रिः । जनेः जज्ञिः । नमेः नेमिः ॥ ३४ ॥

**भञ्जि-भासि-मिदः घुरः । ३५ ।**

एभ्यः परः शीलादौ सति अर्थे 'घुर' प्रत्ययो भवति ।

भङ्गुरं काष्ठम् । भासुरं वपुः । मेदुरः नरः ॥ ३५ ॥

**वेत्ति-च्छिदि-भिदः कित् । ३६ ।**

एभ्यः शीलादौ सति अर्थे कित् 'घुर' प्रत्ययो भवति ।

विदुरः । छिदुरः । भिदुरः ॥ ३६ ॥

**सर्ति-इण्-जि-नशेः ट्वरप् । ३७ ।**

एभ्यः परः शीलादौ सति अर्थे कित् 'ट्वरप्' प्रत्ययो भवति ।

सृत्वरः । इत्वरः । जित्वरः । नश्वरः । टकारः 'ङी'प्रत्ययार्थः । पकारः 'तक्' अर्थः ॥ ३७ ॥

**दृ-क्षि-इण्-जि-विश्रि-परिभू-वम-अभ्यम-अव्यथेः इन् । ३८ ।**

एभ्यः परः शीलादौ सति अर्थे 'इन्' प्रत्ययो भवति ।

दरी । क्षयी । अत्ययी । जयी । विश्रयी । परिभवी । वमी । अभ्यमी । अव्यथी ॥ ३८ ॥

**प्रात् सुव-जोः । ३९ ।**

'प्र'पूर्वात् सुवतेः जवतेश्च परः शीलादौ सति अर्थे 'इन्' प्रत्ययो भवति ।

प्रसवी । प्रजवी । 'सुव°' इति किम् ? सूति-सूयत्योः प्रसविता ॥ ३९ ॥

**स्था-ईश-भास-पिस-कसः वरः । ४० ।**

एभ्यः परः शीलादौ सति अर्थे 'वर' प्रत्ययो भवति ।

स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । विकस्वरः ॥ ४० ॥

**यायावरः । ४१ ।**

यातेः यङन्तस्य शीलादौ सति अर्थे 'वर' प्रत्यये 'यायावर' इति निपात्यते ।

यायावरः ॥ ४१ ॥

## नमि-कमि-कम्पि-स्मि-हिंस-अजस-दीपः रः । ४२ ।

एभ्यः परः शीलादौ सति अर्थे 'र' प्रत्ययो भवति ।

नम्रः । कम्रः । कम्प्रः । स्मेरं मुखम् । हिंस्रः । 'अजस्रम्' इति 'जसू मोक्षणे' नञ्पूर्वः 'र' प्रत्ययान्तः स्वभावात् क्रियासातत्ये वर्तते । दीप्रः ॥ ४२ ॥

## तृषि-धृषि-स्वपः नजिङ् । ४३ ।

एभ्यः परः शीलादौ सति अर्थे 'नजिङ्' प्रत्ययो भवति ।

तृष्णक् । धृष्णक् । स्वप्नक् ॥ ४३ ॥

## भीरु-भीरुक-भीलुकं च । ४४ ।

एते 'रु'-'रुक'-'लुक' प्रत्ययान्ता निपात्यन्ते ।

भीरुः । भीरुकः । भीलुकः । चकारः 'शीलादौ' इति अनुकर्षणार्थः तेन उत्तरत्र न अनुवर्त्तते ॥ ४४ ॥

## 'उण्'आदयः । ४५ ।

'बहुलम्' इति वर्तते । धातोः सति अर्थे वर्तमानात् 'उण्'आदयः प्रत्यया बहुलं भवन्ति ।

कारुः । किशारुः । 'बहुल'ग्रहणं प्रयोगानुसरणार्थम् तेन[1] येभ्यः धातुभ्यः यथा दृश्यन्ते तेभ्यः तथा भवन्तीति धात्वर्थकार्यनियमः सिद्धः ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥ ४५ ॥

## भविष्यति 'गमी'आदिः । ४६ ।

भविष्यति अर्थे 'गमी' आदिः साधुः वेदितव्यः ।

गमी । आगामी । भावी । प्रस्थायी । प्रतिबोधी । प्रयायी । परियायी । पदे सामान्य-वृत्तौ अपि अर्थप्रकरणादिना विशेषप्रतिपत्तिः भवति इति 'श्वः गमी ग्रामम्' इत्येष वाक्यार्थः ॥ ४६ ॥

## भविष्यन्ती । ४७ ।

'भविष्यति' अर्थे वर्तमानात् धातोः भविष्यन्ती भवति ।

करिष्यति । यास्यति ॥ ४७ ॥

---

१ "तेन ये येभ्यो धातुभ्यो यस्मिन्नर्थे यथा दृश्यन्ते ते तेभ्यः तस्मिन् तथा भवन्तीति धात्वर्थकार्यनियमः सिद्धो भवति"-शा० ४।३।२८०।

## परिदेवने श्वस्तनी । ४८ ।

'भविष्यति' अर्थे वर्तमानात् धातोः परिदेवने गम्यमाने श्वस्तनी भवति । परिदेवनं शोचनम् ।

इयं नु कदा गन्ता या एवं पादौ निदधाति ! ॥ ४८ ॥

## अनद्यतने । ४९ ।

नास्ति अद्यतनः यस्मिन् तस्मिन् भविष्यत्यर्थे वर्तमानात् धातोः श्वस्तनी भवति ।

श्वः गन्ता । बहुव्रीहिपरिग्रहः किम् ? अद्य श्वो वा गमिष्यति । 'श्वः करिष्यति' 'मासेन करिष्यति' इति पदं भविष्यत्सामान्ये एव, शब्दान्तरत्वे अन्यथा वाक्यार्थः[1] ॥ ४९ ॥

## पुरा-यावतोः वर्तमाना । ५० ।

भविष्यति अर्थे वर्तमानात् धातोः पुरा-यावतोः उपपदयोः वर्तमाना भवति ।

पुरा अधीते । पुरा श्वः अधीते । यावद् भुङ्क्ते । लाक्षणिकत्वात् इह न भवति— प्रत्युद्यानया पुरा मानयिष्यते 'नगरेण' इत्यर्थः । यावद् दास्यते तावद् भोक्ष्यते यत्परिमाणम् इत्यर्थः ॥ ५० ॥

## वा कदा-कर्ह्योः । ५१ ।

भविष्यदर्थात् धातोः कदा-कर्ह्योः उपपदयोः वर्तमाना भवति वा ।

कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता । कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्ता ॥ ५१ ॥

## किंवृत्ते अर्थित्वे । ५२ ।

भविष्यदर्थात् धातोः किंवृत्ते उपपदे प्रष्टुर्लिप्सायां गम्यमानायां वर्तमाना वा भवति ।

को भवतां भिक्षां ददाति, दास्यति, दाता वा । कतरः कतमो वा भिक्षां ददाति, दास्यति, दाता वा । किमः विभक्ति-डतर-डतमान्तस्य वृत्तम् किंवृत्तम् इति वैयाकरण[2]-स्मृतिः । तेन किंतराम् किंतमाम् गौः इत्यादौ न भवति । अर्थित्वे इति किम् ? कः पुरे यास्यति याता वा ॥ ५२ ॥

## अर्थ्यसिद्धौ । ५३ ।

अर्थ्यः दाता देयं वा, तस्य तस्मात् वा फलनिष्पत्तौ गम्यमानायां भविष्यदर्थात्

---

१. "कथं 'श्वो भविष्यति, मासेन गमिष्यति' ? पदार्थे भविष्यन्ती पश्चात् 'श्व'शब्देन योगः" ५।३।५। हैमं सूत्रम् । २ "वैयाकरणसमयः" इति हैमम् ५।३।९।

धातोः वर्तमाना भवति ।

योः भक्तं ददाति, दास्यति, दाता वा स स्वर्गं याति, यास्यति, याता वा ॥५३॥

### पञ्चम्यां हेतौ । ५४ ।

पञ्चम्यन्ते उपपदे पञ्चम्यन्तार्थस्य हेतौ भविष्यन्त्यर्थे वर्तमानात् धातोः वर्तमाना वा भवति ।

उपाध्यायश्चेत् आगच्छति आगमिष्यति आगन्ता वा अथ त्वं सूत्राणि अधीष्व । उपाध्यायागमनम् 'अधीष्व' इत्यस्य हेतुः ॥ ५४ ॥

### सप्तमी च और्ध्वमौहूर्तिके । ५५ ।

ऊर्ध्वं मुहूर्तात् भवम् और्ध्वमौहूर्तिकम् । पञ्चम्यन्ते उपपदे पञ्चम्यन्तार्थस्य हेतौ और्ध्वमौहूर्तिके भविष्यति अर्थे वर्तमानात् धातोः सप्तमी वर्तमाना च वा भवति ।

परं मुहूर्तात् उपाध्यायश्चेद् आगच्छेत्, आगच्छति, आगमिष्यति, आगन्ता वा अथ त्वं सूत्राणि अधीष्व ॥ ५५ ॥

### क्रियायां तदर्थायां तुम्-वुण्-भविष्यन्त्यः । ५६ ।

यस्मात् धातोः 'वुण्'आदिविधिः तदभिधेया क्रिया अर्थः प्रयोजनं यस्याः सा तदर्था, तस्यां क्रियायाम् उपपदे भविष्यदर्थात् धातोः पराः तुम् वुण्-भविष्यन्त्यः भवन्ति ।

कर्तुं व्रजति । कारकः व्रजति । 'करिष्यामि' इति व्रजति । क्रियायाम् इति किम् ? भिक्षिष्ये इत्यस्य जटाः । धावतः ते पतिष्यति दण्डः । 'पाकाय व्रजति' 'भूतये व्रजति' इत्यादौ चतुर्थ्या तादर्थ्यस्य गतत्वात् न भवति ॥ ५६ ॥

### कर्मणः अण् । ५७ ।

क्रियायां तदर्थायाम् उपपदे भविष्यदर्थात् धातोः परः 'अण्' प्रत्ययो भवति ।

कुम्भकारः व्रजति । वुण्-तुम्-भविष्यन्तीबाधनार्थं वचनम् । परत्वात् टकारादीन् अपि बाधते–गोदायो व्रजति ॥ ५८ ॥

### देशस्य अवधौ अर्वाग्भागे अद्येव । ५८ ।

देशस्य सम्बन्धिनि अवधिवाचिनि उपपदे देशस्य अर्वाग्भागे भविष्यति अर्थे वर्तमानात् धातोः अद्य इव प्रत्ययो भवति न अनद्यतनः ।

यः अयम् अध्वा गन्तव्यः आ शत्रुंजयात् तस्य यद् अवरं वलभ्याः तत्र द्विः ओदनं भोक्ष्यामहे । एष्यति इति किम् ? यः अयम् अध्वा आक्रान्तः आ शत्रुंजयात् तस्य यद् अवरं वलभ्याः तत्र द्विः ओदनम् अभुञ्ज्महि । अवधौ इति किम् ? यः अयम् अध्वा

निरवधिकः गन्तव्यः तस्य यद् अवरं वलभ्याः तत्र द्विः ओदनं भोक्तास्महे । अर्वाग्भागे इति किम्? यः अयम् अध्वा गन्तव्यः आ शत्रुंजयात् तस्य यत् परं वलभ्याः तत्र द्विः अध्येतास्महे । यद्यपि 'अद्य' इति अनुवादेन न कश्चित् प्रत्ययः विहितः तथाऽपि अद्यतने दृष्टः 'अद्यतनी'-'भविष्यन्ती'आदिः विधीयते । 'इव' शब्दः यथाविहितार्थः तेन यः यस्मिन काले विहितः स तत्र भवति इति नियमो लभ्यते ॥ ५८ ॥

## कालस्य अनहोरात्राणाम् । ५९ ।

कालस्य सबन्धिनि अवधिवाचिनि उपपदे कालस्यैव अर्वाग्भागवर्तिनि भविष्यति अर्थे वर्तमानात् धातोः अद्य इव प्रत्ययो भवति, न चेत् सः अर्वाग्भागः अहोरात्राणां संबन्धी भवति ।

आगामिनः संवत्सरस्य आग्रहायण्याः अवरस्मिन् जिनपूजां करिष्यामि । अनहोरात्राणाम् इति किम्? आगामिनः मासस्य यद् वा त्रिंशद्रात्रस्य अवरस्मिन् पञ्चदशरात्रे यद्वा अर्धमासे द्विः सूत्रम् अध्येतास्महे ॥ ३९ ॥

## परे वा । ६० ।

कालस्य संबन्धिनि अवधिवाचिनि उपपदे कालस्यैव परभागवर्तिनि भविष्यन्त्यर्थे वर्तमानात् धातोः अद्य इव प्रत्ययो भवति, न चेत् स परभागः अहोरात्राणां संबन्धी भवति ।

आगामिनः संवत्सरस्य आग्रहायण्याः परस्तात् द्विः अध्येष्यामहे, अध्येतास्महे वा । अनहोरात्राणाम् इति किम्? आगामिनः मासस्य परस्मिन् पञ्चदशरात्रे द्विः सूत्रम् अध्येतास्महे । कालस्य इति किम्? आ शत्रुंजयात् गन्तव्ये अस्मिन् अध्वनि परस्तात् वलभ्याः द्विः ओदनं भोक्तास्महे ॥ ६० ॥

## भूते प्रबन्ध-आसत्त्योः । ६१ ।

प्रबन्धः अव्यवच्छित्तिः । आसत्तिः कालतः तुल्यजातीयेन कालेन अव्यवधानम् । तयोः गम्यमानयोः भविष्यति भूते च अर्थे वर्तमानात् धातोः अद्य इव प्रत्ययो भवति ।

यावज्जीवम् अन्नं दास्यति । यावज्जीवम् अन्नं अदात् दत्तवान् वा । आगामिन्यां पौर्णमास्यां गुरुपूजा भविष्यति एतस्याम् अतिक्रान्तायां पौर्णमास्याम् अभूत् भूता । 'अपि'

---

१ अत्र द्वयोरपि आदर्शयोः मूलसूत्रे 'अपि' शब्दः नास्ति तथापि अनेन "'अपि' शब्दः" इत्यादिना निर्देशेन कल्प्यते यत् सूत्रे 'अपि शब्देन भाव्यम् । अस्य सूत्रस्य स्थाने शाकटायने 'अद्येव आसन्न-अविच्छित्त्योः" ४।४।१०५। इति सूत्रम् । तथा हैमे "नानद्यतनः प्रबन्ध-आसत्त्योः" ५।४।५। इति सूत्रं दृश्यते । परन्तु तत्र न कतरस्मिन् अपि सूत्रे 'अपि'-शब्दचर्चा प्रतिभाति ।

शब्दः भूत-भविष्यतोः उत्तरत्र समुदायेन अनुवृत्त्यर्थः ॥ ६१ ॥

**सप्तमीहेतवे अनिष्पत्तौ क्रियातिपत्तिः । ६२ ।**

सप्तम्या निमित्तं हेतु-फलादिसामग्री, तस्मिन् निष्पत्तिरहिते भूते भविष्यति च अर्थे वर्तमानात् धातोः क्रियातिपत्तिर्भवति ।

यदि स गुरून् उपासिष्यत शास्त्रान्तम् अगमिष्यत्—हेतुभूतं गुरूपासनम् फलभूतं च शास्त्रान्तगमनम् सप्तम्या निमित्तं भविष्यदनिष्पत्तिकमुपलभ्य एवंप्रयोगः। भूते—दृष्टः मया भवतः पुत्रः अन्नार्थी चङ्क्रम्यमाणः अपरश्च अतिथ्यर्थी यदि स तेन दृष्टः अभविष्यत् अपि अभोक्ष्यत उत अभोक्ष्यत, न तु दृष्टः अन्येन पथा गतः । अत्र बाढार्थौ अपि-उत-शब्दौ सप्तम्या निमित्तम् ॥ ६२ ॥

**वा उतात् प्राग् भूते । ६३ ।**

'उत' संशब्दनात् प्राग् वक्ष्यमाणे सप्तम्या निमित्ते भूते अनिष्पत्तौ वर्तमानात् धातोः क्रियातिपत्तिर्वा भवति ।

कथं नाम धार्मिकोऽपि सन् भवान् पापम् आसेविष्यत धिग् गर्हामहे पक्षे कथं सेवेत ? । उतात् प्राग् इति किम् ? कालः यद् अभोक्ष्यत भवान् । भूते इति किम् ? भविष्यति नित्यमेव ॥ ६३ ॥

**गर्हे अपि-जात्वोः वर्तमाना । ६४ ।**

'अपि'-'जातु'शब्दयोः उपपदयोः गर्हे गम्यमाने धातोर्वर्तमाना भवति ।

अपि तत्र भवान् भूतानि हिनस्ति धिग् गर्हामहे । कालसामान्ये इयं वर्तमाना परत्वात् विशेषकालविहितान् प्रत्ययान् बाधते । एवम् उत्तरत्र अपि ॥ ६४ ॥

**कथमि वा सप्तमी च । ६५ ।**

'कथम्' शब्दे उपपदे गर्हे गम्यमाने धातोः सप्तमी वर्तमाना च वा भवति, पक्षे यथाप्राप्तम् ।

कथं तत्रभवान् विवेकी परयुवतिं संभाषेत, संभाषते वा, पक्षे संभाषिष्यते, संभाषिता, समभाषिष्ट, समभाषत, संबभाषे । अत्र सप्तम्याः निमित्तमस्ति इति अनिष्पत्तौ क्रियातिपत्तिः—कथं तत्रभवान् परयुवतिं समभाषिष्यत ॥ ६५ ॥

**किंवृत्ते सप्तमी-भविष्यन्त्यौ । ६६ ।**

---

१. भविष्यति काले इति भावः ।

किंवृत्ते उपपदे गर्हे गम्यमाने धातोः परे सप्तमी-भविष्यन्त्यौ भवतः ।

किं तत्रभवान् परधनम् अदत्तं गृह्णीयात्, ग्रहीष्यति वा। कतरो नाम कतमो नाम वा तत्रभवान् परधनम् अदत्तं गृह्णीत, ग्रहीष्यति वा । अत्रापि सप्तम्या निमित्तमस्ति इति अनिष्पत्तौ क्रियातिपत्तिः—किं तत्रभवान् परधनम् अदत्तम् अग्रहीष्यत् ॥ ६६ ॥

## अन्यत्र अपि अमर्ष-अश्रद्धे । ६७ ।

अमर्षः अक्षमा । अश्रद्धा असंभावना । किंवृत्तात् अन्यस्मिन् किंवृत्ते च उपपदे अमर्ष-अश्रद्धयोः गम्यमानयोः धातोः सप्तमी-भविष्यन्त्यौ भवतः । वचनभेदात् अयथासंख्यम् ।

अमर्षे किंवृत्ते—न क्षमे न मर्षयामि किं तत्रभवान् अनृतं ब्रूयात् वक्ष्यति वा । अमर्षे अकिंवृत्ते—न क्षमे तत्रभवान् अनृतं ब्रूयात् वक्ष्यति वा । अश्रद्धायां किंवृत्ते—न श्रद्दधे किं तत्रभवान् अनृतं भाषेत भाषिष्यते वा । अकिंवृत्ते अश्रद्धायाम्—न श्रद्दधे तत्र-भवान् अनृतं भाषेत, भाषिष्यते वा । अन्यत्र अपि इति किम् ? अर्थात् प्रकरणात् वा अमर्ष-अश्रद्धयोः गम्यमानयोः निरुपपदात् धातोर्मा भूत् । अत्रापि सप्तम्या निमित्तमस्ति इति अनिष्पत्तौ क्रियातिपत्तिः—न क्षमे न श्रद्दधे तत्रभवान् अनृतम् अभाषिष्यत ॥ ६७ ॥

## किंकिल-'अस्ति'अर्थयोः भविष्यन्ती । ६८ ।

किंकिले 'अस्ति'अर्थे च उपपदे अमर्ष-अश्रद्धयोः गम्यमानयोः धातोः भविष्यन्ती भवति ।

न क्षमे न श्रद्दधे किंकिल नाम तत्रभवान् पापं सेविष्यते । अस्ति नाम भवति नाम तत्रभवान् पापं सेविष्यते ॥ ६८ ॥

## यत्-यदि-यदा-जातौ सप्तमी । ६९ ।

'यत्' शब्दादिषु उपपदेषु अमर्ष-अश्रद्धयोः गम्यमानयोः धातोः सप्तमी भवति ।

न क्षमे न श्रद्दधे यत् तत्रभवान् पापं सेवेत । एवम्—यदि यदा जातु वा भवान् पापं सेवेत । अत्र सप्तम्या निमित्तम् अस्ति इति अनिष्पत्तौ क्रियातिपत्तिः—यत् तत्रभवान् अकल्पम् असेविष्यत ॥ ६९ ॥

## गर्हे च यच्च-यत्रे । ७० ।

'यच्च'-'यत्र'शब्दयोः उपपदयोः गर्हे अक्षमा-अश्रद्धयोश्च गम्यमानयोः धातोः सप्तमी भवति ।

धिग् गर्हामहे यच्च यत्र वा तत्रभवान् पापं सेवेत । न क्षमे न श्रद्दधे यच्च यत्र वा तत्रभवान् आक्रोशेत् । अत्र सप्तम्या निमित्तमस्ति इति अनिष्पत्तौ क्रियातिपत्तिः—यच्च यत्र भवान् आक्रोक्ष्यत् ॥ ७० ॥

## चित्रे । ७१ ।

चित्रम् आश्चर्यम् तस्मिन् गम्यमाने यच्च-यत्रयोः उपपदयोः धातोः सप्तमी भवति ।

चित्रम् यच्च यत्र वा तत्रभवान् मूलगुणान् अपनयेत् । अनिष्पत्तौ क्रियातिपत्तिः–आश्चर्यम् यच्च यत्र वा तत्रभवान् मूलगुणान् अपानेष्यत् । पृथग्योगः उत्तरार्थः ॥ ७१ ॥

## शेषे भविष्यन्ती अयदौ । ७२ ।

'यच्च'-'यत्र'भ्याम् अन्यस्मिन् 'यदि'शब्दवर्जिते उपपदे चित्रे गम्यमाने धातोः भविष्यन्ती भवति ।

आश्चर्यम् अन्धो नाम पर्वतम् आरोक्ष्यति । शेषे इति किम्? 'यच्च'-'यत्र'योः सप्तमी एव, अयदौ पूर्वयोगः सावकाशः, 'यदि'अभावे तु 'यच्च'-'यत्र'योरपि परत्वात् अयमेव विधिः स्यात् इति 'शेष'ग्रहणम् । अयदौ इति किम्? चित्रम् यदि स भुञ्जीत । अत्र अश्रद्धा अपि अस्ति इति सप्तमी ॥ ७२ ॥

## उत-अप्योः बाढे सप्तमी । ७३ ।

'बाढ'अर्थयोः 'उत'-'अपि'शब्दयोः धातोः सप्तमी भवति ।

उत कुर्यात् । अपि कुर्यात्–बाढं करिष्यति इत्यर्थः । बाढे इति किम्? उत पतिष्यति दण्डः? अत्र प्रश्नोऽर्थः । अपिधास्यति द्वारम् । अत्र प्रस्थानम् अर्थः । अनिष्पत्तौ क्रियातिपत्तिः–उत अभोक्ष्यत ॥ ७३ ॥

## अर्थात् शक्तिसंभावने । ७४ ।

शब्दप्रयोगाभावे अर्थात् एव केवलात् शक्तिसंभावने गम्यमाने धातोः सप्तमी भवति ।

अपि शिरसा पर्वतं भिन्द्यात् । अपि मासम् उपवसेत्–संभाव्यते एतत्–शक्तः असौ इत्यर्थः । शक्तिग्रहणं किम्? निदेशस्थो मे चैत्रः प्रायेण गमिष्यति । अर्थात् इति किम्? शक्तः चैत्रः धर्मं करिष्यति । अत्रापि अनिष्पत्तौ क्रियातिपत्तिः–अपि शिरसा पर्वतम् अभेत्स्यत् ॥ ७४ ॥

## श्रद्धाधातौ अयदि वा । ७५ ।

'श्रद्धा'धातौ उपपदे अर्थात् शक्तिसंभावने धातोः सप्तमी वा भवति 'यत्'शब्द-प्रयोगाभावे ।

श्रद्धे संभावयामि भुञ्जीत भवान् पक्षे भोक्ष्यते, अभुक्त । अयदि इति किम्? श्रद्धे यत् भुञ्जीत भवान् । अनिष्पत्तौ क्रियातिपत्तिः–संभावयामि अभोक्ष्यत भवान् ॥७५॥

## इच्छार्थात् वर्तमाने । ७६ ।

'इच्छा'अर्थात् धातोः वर्तमाने काले सप्तमी वा भवति ।

इच्छेत्, इच्छति । उश्यात्, वष्टि । ' गर्हे अपि-जात्वोः'–[ कृ० पा० ४ सू० ६४ ] इत्यादौ अपि परत्वात् अयमेव विकल्पः । 'भूते अपि च–' [ कृ० पा० ४ सू० ६१ ] इति वचनात् अत्र क्रियातिपत्तिर्न भवति ॥ ७६ ॥

## भविष्यति फलहेतौ । ७७ ।

हेतु-फलभूते च भविष्यति अर्थे वर्तमानात् धातोः सप्तमी वा भवति ।

यदि गुरून् उपासीत शास्त्रान्तं गच्छेत् । यदि गुरून् उपासिष्यते शास्त्रान्तं गमिष्यति । भविष्यति इति किम् ? दक्षिणेन चेत् याति न शकटं पर्याभवति । अनिष्पत्तौ क्रियातिपत्तिः–दक्षिणेन चेत् अयास्यत् न शकटं पर्याभविष्यत् ॥ ७७ ॥

## अकच्चिति कामाविष्कारे । ७८ ।

कामस्य आविष्कारे प्रवेदने धातोः सप्तमी भवति 'कच्चित्'शब्दाप्रयोगे ।

अभियोगः[1] मे भुञ्जीत भवान् । इच्छा मे भुञ्जीत भवान् । कामाविष्कारे इति किम् ? इच्छन् करोति । अकच्चिति इति किम् ? कच्चित् जीवति मे माता[2] ॥ ७८ ॥

## सप्तमी-पञ्चम्यौ इच्छार्थे । ७९ ।

इच्छार्थे उपपदे कामाविष्कारे गम्यमाने धातोः सप्तमी-पञ्चम्यौ भवतः ।

इच्छामि कामो मे भुञ्जीत भवान् । कामाविष्कारे इति किम् ? इच्छन् करोति । अत्र अतिपत्तौ परत्वात् पञ्चम्या क्रियातिपत्तिर्बाध्यते । एवम् उत्तरत्राऽपि ॥ ७९ ॥

## विधि-निमन्त्रण-आमन्त्रण-अधीष्ट-संप्रश्न-प्रार्थने । ८० ।

विधिः नियमः "अज्ञातज्ञापनम्" इति एके । निमन्त्रणम् यत् नियोगतः कर्तव्यम्, "क्रियासु आभिमुख्यकरणम्" इति एके । आमन्त्रणम् यत् कामचारतः कर्तव्यम् "कर्तव्येषु अनुज्ञापनम्" इति एके । अधीष्टम् सत्कारपूर्विका व्यापारणा । संप्रश्नः बुभुत्साऽऽवेदनम् । प्रार्थनम् याच्ञा । एषु प्रत्ययार्थविशेषणेषु धातोः सप्तमी-पञ्चम्यौ भवतः ।

कटं कुर्यात् करोतु वा । निमन्त्रणे–संध्यासु नियमं कुर्यात् करोतु वा । आमन्त्रणे–इह आसीत आस्ताम् वा । अधीष्टे–तत्त्वं नः प्रसीदेयुः पादाः प्रसीदन्तु वा । संप्रश्ने–किन्नु

---

१. "अभिप्रायः" ४।४।१२४ । शा० ।

२. कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता ।
मारविद ! त्वां पृच्छामि कच्चिज्जीवति पार्वती" ॥ काशिका–३।३।१५३।

खलु भोः ! व्याकरणम् अधीयीय अध्ययै वा उत छन्दांसि ? । प्रार्थने—सिद्धान्तम् अधीयीय अध्ययै वा ॥ ८० ॥

**प्रैष-अनुज्ञा-अवसरे कृत्य-पञ्चम्यौ । ८१ ।**

'प्रैष'आदिषु गम्यमानेषु धातोः कृत्य-पञ्चम्यौ भवतः ।

भवता खलु कटः कार्यः कर्तव्यः, कटं करोतु भवान् । भवान् हि प्रेषितः अनुज्ञातः, अवसरो वा भवतः कटकरणे ॥ ८१ ॥

**सप्तमी च ऊर्ध्वे मुहूर्तात् । ८२ ।**

'प्रैष'आदिषु गम्यमानेषु मुहूर्ताद् ऊर्ध्वं वर्तमानेऽर्थे वर्तमानात् धातोः सप्तमी भवति कृत्य-पञ्चम्यौ च ।

ऊर्ध्वं मुहूर्तात् भवान् कटं कुर्यात् करोतु वा, भवता खलु कटः कर्तव्यः करणीयः । भवान् हि प्रेषितः अनुज्ञातः अवसरो वा भवतः कटकरणे ॥ ८२ ॥

**स्मे पञ्चमी । ८३ ।**

'प्रैष'आदिषु गम्यमानेषु 'स्म'शब्दे उपपदे ऊर्ध्वमौहूर्तिके अर्थे वर्तमानात् धातोः पञ्चमी भवति । कृत्य-सप्तमीअपवादः ।

ऊर्ध्वं मुहूर्तात् कटं करोतु स्म ॥ ८३ ॥

**अधीष्टे । ८४ ।**

पृथग्योगात् 'ऊर्ध्वं मुहूर्तात्' इति निवृत्तम् । 'स्म'शब्दे उपपदे अधीष्टे गम्यमाने धातोः पञ्चमी भवति ।

अङ्ग स्म राजन् ! अणुव्रतानि रक्ष ॥ ८४ ॥

**समर्थ-अस्त्यर्थ-रभ-लभ-शक-घट-अर्ह-ग्ला-ज्ञा-सह-घृष-क्रमे तुम् । ८५ ।**

'समर्थ'अर्थे, 'अस्ति'अर्थे 'रभ'आदौ च उपपदे धातोः तुम् प्रत्ययो भवति ।

समर्थः भोक्तुम् । पर्याप्तः भोक्तुम् । अस्ति भोक्तुम् । भवति भोक्तुम् । रभते भोक्तुम् । लभते भोक्तुम् । शक्नोति भोक्तुम् । घटते भोक्तुम् । अर्हति भोक्तुम् । ग्लायति भोक्तुम् । जानाति भोक्तुम् । सहते भोक्तुम् । धृष्णोति भोक्तुम् । क्रमते भोक्तुम् । 'शक'ग्रहणं समर्थार्थम् । 'शक्यमेव कर्तुम्' इति हि सौकर्यं प्रतीयते । 'शक्त्या अनुभुज्यते' इत्यादौ अनभिधानात् न भवति ॥ ८५ ॥

**काल-वेला-समये अवसरे वा । ८६ ।**

'काल'आदिषु उपपदेषु अवसरे गम्यमाने धातोः तुम् प्रत्ययो भवति। प्राप्तकालता–निमित्तभूतकालोपनतिः–अवसरः ।

कालो भोक्तुम् । वेला भोक्तुम् । समयः भोक्तुम् । अवसरे इति किम् ? "कालः पचति भूतानि" [ महाभारते आदिपर्वणि अध्याय १ श्लो० २७३, २७५ पृ० ७११ ]॥ ८६ ॥

## यदि सप्तमी । ८७ ।

'यत्'शब्दप्रयोगे 'काल'आदिषु उपपदेषु अवसरे गम्यमाने धातोः सप्तमी भवति ।

कालः यद् भुञ्जीत भवान् । वेला यद् भुञ्जीत भवान् । समयः यद् भुञ्जीत भवान् ॥ ८७ ॥

## वर्तमानसमीपे वर्तमानवत् वा । ८८ ।

वर्तमानस्य समीपे भूते भविष्यति च अर्थे वर्तमानात् धातोः वर्तमाने इव प्रत्ययो भवति वा ।

कदा चैत्र ! आगतोऽसि ? अयम् आगच्छामि, आगच्छन्तमेव मां विद्धि, अयम् आगामुकः अस्मि, पक्षे अयम् आगमम् । कदा चैत्र ! आगमिष्यसि ? अयम् आगच्छामि, आगच्छन्तमेव विद्धि, पक्षे अयम् आगमिष्यामि ॥ ८८ ॥

## भूतवत् च आशंस्ये । ८९ ।

आप्तुम् इष्टम् आशंस्यम्, तस्मिन् अर्थे वर्तमानात् धातोः वर्तमानवत् भूतवत् च प्रत्ययो भवति वा । आशंस्यस्य भविष्यत्वात् अयम् अतिदेशः ।

उपाध्यायश्चेत् आगच्छति, आगमत्, आगतः पक्षे आगमिष्यति, आगन्ता वा युक्ताः अधीमहे, अध्यगीष्महि । एतद् अधीतम् पक्षे अध्येष्यामहे, अध्येतास्महे । सामान्यस्य अतिदेशः अयम् न विशेषस्य इति परोक्षा-ह्यस्तन्यौ न भवतः । आशंस्ये इति किम् ? उपाध्यायः आगमिष्यति । इह कूपः अस्ति, कूपः अभूत्, कूपः अभवत्, कूपो बभूव, कूपो भविष्यति, कूपो भविता इति तत्कालसत्तापेक्षाः प्रत्ययाः ॥ ८९ ॥

## क्षिप्र-आशंसार्थयोः भविष्यन्ती-सप्तम्यौ । ९० ।

क्षिप्र-आशंसार्थयोः उपपदयोः आशंस्यार्थात् धातोः यथासंख्यं भविष्यन्ती-सप्तम्यौ भवतः ।

---

१. अयं श्लोकः संपूर्णः एवम्—
'कालः पचति भूतानि कालः संहरति प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥'

उपाध्यायश्चेत् आगच्छति, आगमत्, आगमिष्यत्, आगन्ता वा क्षिप्रम् आशु सिद्धान्तम् अध्येष्यामहे । आशंसार्थे—उपाध्यायश्चेत् आगच्छति, आगमत्, आगमिष्यति आशंसे संभावये युक्तम् अधीयीय। द्वयोः उपपदयोः सप्तमी एव पाठतः परत्वात्—आशंसे क्षिप्रम् अधीयीय ॥ ९० ॥

## अर्हे तृच्-सप्तम्यौ । ९१ ।

अर्हे कर्तरि धातोः तृच्-सप्तम्यौ भवतः ।

कन्यायाः वोढा, कन्यां वहेत् भवान् एनाम् अर्हति ॥ ९१ ॥

## कृत्यः । ९२ ।

अर्हे कर्तरि धातोः कृत्यप्रत्ययो भवति ।

भवता खलु कन्या वोढव्या ॥ ९२ ॥

## णिन् च आवश्यक-आधमर्ण्ये । ९३ ।

आवश्यक-आधमर्ण्ययोः गम्यमानयोः णिन् प्रत्ययो भवति कृत्यप्रत्ययश्च । आवश्यकम् अवश्यंभावः । ऋणे अधमः अधमर्णः तद्भावः आधमर्ण्यम् ।

कारी । हारी । अवश्यंकारी । अवश्यंहारी । मयूरव्यंसकादित्वात् समासः । अवश्यकारी । 'अवश्य'शब्दो हि अकारान्तोऽपि अस्ति । अवश्यंभव्यः। आधमर्ण्ये—कारी । अवश्यंगेयो गाथानाम् ॥ ९३ ॥

## आशीः आशिषि । ९४ ।

आशिषि गम्यमानायां धातोः आशीर्भवति ।

जीयात् ॥ ९४ ॥

## पञ्चमी । ९५ ।

आशिषि गम्यमानायां धातोः पञ्चमी भवति ।

जयतात् ॥ ९५ ॥

## कृत्यश्च शक्तौ । ९६ ।

शक्तौ च गम्यमानायां धातोः कृत्यः पञ्चमी च भवति ।

भवता खलु भारो वाह्यः, भवान् खलु भारं वहेत्[1] भवान् हि शक्तः ॥ ९६ ॥

---

१. 'वहेत्' इति निर्देशेन ज्ञायते यत् अनेन सूत्रेण सप्तमी विधेया न तु पञ्चमी परन्तु वृत्तौ तु पञ्चमी एव निर्दिष्टा । अत्र हैमव्याकरणे ५।४।३५ सूत्रे तथा शाकटायनव्याकरणे ४।४।१३५ सूत्रे सप्तमी एव विहिता ततः तेषां मते 'वहेत्' इति साधु पदम् । मलयगिरिः अत्र सूत्रे 'वहेत्' इति सप्तम्यन्तम् उदाहरति परन्तु पञ्चमीं विदधाति इति वैचित्र्यम् । संभवति अत्र लिपिकारप्रमादः ।

## माङि अद्यतनी । ९७ ।

माङि उपपदे धातोः अद्यतनी भवति ।

मा कार्षीत् ॥ ९७ ॥

## स्मेन ह्यस्तनी च । ९८ ।

स्मेन सह माङि उपपदे धातोः ह्यस्तनी अद्यतनी च भवति ।

मा स्म करोत् । मा स्म कार्षीत् ॥ ९८ ॥

## भृश-आभीक्ष्ण्ये पञ्चमी तस्मिन् तथार्थे । ९९ ।

भृशे आभीक्ष्ण्ये च अर्थे वर्तमानात् धातोः पञ्चमी भवति तस्मिन् धातौ यथाविधः अर्थः पञ्चम्यन्तस्य तथार्थे उपपदे ।

लुनीहि लुनीहि इत्येव अयं लुनाति, लुनीतः लुनन्ति । लुनासि, लुनीथः, लुनीथ । लुनामि, लुनीवः, लुनीमः । अलावीत् । लविष्यति । अधीष्व अधीष्व इत्येव अयम् अधीते, अधीयाते इत्यादि । तस्मिन् इति किम्? लुनीहि लुनीहि इत्येव अयं छिनत्ति मा भूत् । तथार्थे इति किम्? लुनीहि लुनीहि इत्येव लूयते चैत्रेण इति मा भूत् ॥ ९९ ॥

## प्रचये वा सामान्यार्थे । १०० ।

प्रचयः स्वतः साधनभेदेन वा भिद्यमानस्य धात्वर्थस्य अनेकस्य एकत्र समुच्चयः । सामान्यार्थे धातौ उपपदे प्रचये गम्यमाने धातोः पञ्चमी भवति ।

व्रीहीन् वप लुनीहि पुनीहि इत्येव आयतते यत्यते वा पक्षे व्रीहीन् वपति लुनाति पुनाति इत्येव यतते यत्यते वा । ग्रामम् अट वनम् अट गिरिम् अट इत्येव अटति घटते अट्यते वा पक्षे ग्रामम् अटति वनम् अटति गिरिम् अटति इत्यादि । सामान्यार्थे इति किम्? निरुपपदः सर्वविशेषोपपदो वा प्रयोगो मा भूत् ॥ १०० ॥

## हिः एतयोः । १०१ ।

एतयोः अनन्तरसूत्रद्वयविहितयोः पञ्चम्योः स्थाने हिः आदेशो भवति ।

लुनीहि लुनीहि इत्येव अयं लुनाति इत्यादि ॥ १०१ ॥

## तस्य वा । १०२ ।

एतयोः पञ्चम्योः तकारस्य हिः आदेशो वा भवति ।

लुनीहि लुनीहि इत्येव लुनीथ पक्षे लुनीत लुनीत इत्येव यूयं लुनीथ ॥ १०२ ॥

### ध्वमः स्वः । १०३ ।

एतयोः पञ्चम्योः संबन्धिनोः ध्वमः 'स्य' आदेशो भवति वा ।

अधीष्व अधीष्व इत्येव यूयम् अधीध्वे, अधीध्वम् अधीध्वम् इत्येव यूयम् अधीध्वे ॥ १०३ ॥

### आत्मने । १०४ ।

एतयोः पञ्चम्योः संबन्धिनः आत्मनेपदस्य 'स्व' आदेशो भवति ।

अधीष्व अधीष्व इत्येव अयम् अधीते, अधीयाते इत्यादि ॥ १०४ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ कृति चतुर्थः पादः समाप्तः ॥

## कृदन्ते पञ्चमः पादः

### पद-रुजः घञ् । १ ।

आभ्यां घञ् प्रत्ययो भवति ।

पद्यते पादः । रोगः ।

'वेशः' 'स्पर्शः' इति लिहादिअचि सिद्धम् ॥ १ ॥

### सर्तेः व्याधि-स्थिर-मत्स्य-बले । २ ।

सर्तेः 'व्याधि'आदिषु कर्तृषु घञ् प्रत्ययो भवति ।

चन्दनस्य सारः—अवयवसंश्लेषं गतः संहतः चिरस्थायी पदार्थः सारः। अतीसारो व्याधिः । विसारो मत्स्यः । सारो बलम् ॥ २ ॥

### अकर्तरि । ३ ।

कर्तुः अन्यस्मिन् 'कर्म'आदौ कारके भावे च धातोः घञ् प्रत्ययो भवति ।

प्रास्यन्ति तम् इति प्रासः । दास्यते तस्मै दासः । पचनं पाकः । 'कृतः कटः' 'हृतः भारः' इत्यादौ अनभिधानात् न भवति। कर्तुः पर्युदासात् इह भावः धात्वर्थात् अन्यः सिद्धताख्यः लिङ्ग-संख्यायोगी द्रष्टव्यः ॥ ३ ॥

### वि-उपाभ्याम् शीङः क्रमे । ४ ।

वेः उपात् च परात् क्रमविषयात् शीङः अकर्तरि घञ् प्रत्ययो भवति ।

तव विशायः । तव राजोपशायः—क्रमप्राप्तशयनम् एवमुच्यते । अन्ये "शयितुं पर्यायः" [काशिका ३।३।३९] इति आहुः । क्रमे इति किम् ? विशयः । उपशयः ॥४॥

### परेः इण् । ५ ।

'परि'पूर्वात् इणः क्रमविषयार्थात् अकर्तरि घञ् प्रत्ययो भवति ।

तव भोक्तुं पर्यायः—क्रमेण पदार्थानां क्रियाभिसंबन्धः पर्यायः । क्रमे इति किम् ? पर्यायः—कालस्य अतिपातः इत्यर्थः ॥ ५ ॥

---

१. स्रुः व्याधि-स्थिर०—पू० । 'स्रुः स्थिर-व्याधि-मत्स्य-बले'—इति शाकटायनीयम् ४।४।२।

२. सूत्रनिर्देशानुसारेण इदमुदाहरणं प्रथमं भवेत् ।

३. "व्युपयोः शेतेः पर्याये" इति शाकटायनीयम् सूत्रम्—४।४।४ ।

## नेः अभ्रेषे । ६ ।

'नि'पूर्वात् इणः अभ्रेषविषयात् अकर्तरि घञ् प्रत्ययो भवति । भ्रेषः स्वरूपात् प्रच्युतिः तदभावः अभ्रेषः ।

एषः अत्र न्यायः—एतद् अत्र साधु इत्यर्थः । अभ्रेषे इति किम् ? न्ययं गतः पापः ॥ ६ ॥

## वृञः धान्ये । ७ ।

'नि'पूर्वात् वृञः अकर्तरि घञ् प्रत्ययो भवति, प्रत्ययान्तं चेत् धान्यविषयं नाम स्यात् ।

नीवारो नाम व्रीहिः । धान्ये इति किम् ? निवरा कन्या ॥ ७ ॥

## उत्-नेः किरः । ८ ।

उदः नेश्च परात् किरतेः धान्यविषयात् अकर्तरि घञ् प्रत्ययो भवति ।

उत्कारः । निकारः अन्नस्य । धान्ये इति किम् ? पुष्पोत्करः ॥ ८ ॥

## गिरतेः । ९ ।

पृथग्योगात् 'धान्ये'इति निवृत्तम् । उत्-निभ्यां परात् गिरतेः अकर्तरि घञ् प्रत्ययो भवति ।

उद्गारः । निगारः । उत्-नेः इति किम् ? गरः । संगरः ॥ ९ ॥

## वेः क्षु-स्रोः । १० ।

'वि'पूर्वाभ्याम् आभ्याम् अकर्तरि घञ् प्रत्ययो भवति ।

विक्षावः । विस्रावः ॥ १० ॥

## स्त्रः अशब्दे प्रथने । ११ ।

'वि'पूर्वात् अशब्दविषये प्रथने वर्तमानात् स्त्रः धातोः अकर्तरि घञ् प्रत्ययो भवति ।

विस्तारः पटस्य । अशब्दे इति किम् ? अहो! द्वादशाङ्गस्य विस्तरः । प्रथने इति किम् ? विस्तरः तृणस्य ॥ ११ ॥

## छन्दोनाम्नि । १२ ।

छन्दोनामविषयात् स्त्रः धातोः अकर्तरि घञ् प्रत्ययो भवति ।

विष्टारपङ्क्तिः ॥ १२ ॥

## प्रात् अयज्ञे । १३ ।

अयज्ञविषयात् 'प्र'पूर्वात् स्त्रः अकर्तरि घञ् प्रत्ययो भवति ।

मणिप्रस्तारः । अयज्ञे इति किम्? बर्हिःप्रस्तरः ॥ १३ ॥

### द्रु-स्तु-स्रोः । १४ ।

'प्र'पूर्वेभ्यः एभ्यः अकर्तरि घञ् प्रत्ययो भवति ।

प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रात् इति किम्? द्रवः । स्तवः । स्रवः ॥ १४ ॥

### ग्रहः लिप्सायाम् । १५ ।

'प्र'पूर्वात् ग्रहः अकर्तरि लिप्सायां गम्यमानायां घञ् प्रत्ययो भवति ।

पात्रप्रग्राहेण चरति पिण्डपातार्थी भिक्षुः । लिप्सायाम् इति किम्? मनसः प्रग्रहः ॥ १५ ॥

### नि-अवाभ्याम् शापे । १६ ।

शापे गम्यमाने 'नि'-'अवा'भ्यां परात् ग्रहः अकर्तरि घञ् प्रत्ययो भवति ।

निग्राहः अवग्राहः ते जाल्म! भूयात् । शापे इति किम्? निग्रहः चौरस्य । अवग्रहः पापस्य ॥ १६ ॥

### परेः यज्ञे । १७ ।

'परि'पूर्वात् ग्रहः अकर्तरि यज्ञविषये घञ् प्रत्ययो भवति ।

उत्तरपरिग्राहः । अधरपरिग्राहः । यज्ञे इति किम्? अपरः परिग्रहः ॥ १७ ॥

### समः स्तोः । १८ ।

'सम्'पूर्वात् स्तौतेः अकर्तरि घञ् प्रत्ययो भवति ।

संस्तावः छन्दोगानाम्—यत्र देशे छन्दोगाः समेत्य स्तुवन्ति स देशः संस्तावः । यज्ञे इति किम्? संस्तवः अन्यदृष्टेः[1] ॥ १८ ॥

### यु-द्रु-दोः । १९ ।

'सम्'पूर्वेभ्यः एभ्यः अकर्तरि घञ् प्रत्ययो भवति ।

संयावः । संद्रावः । संदावः । समः इति किम्? यवः । द्रवः । दवः ॥ १९ ॥

### मुष्टौ ग्रहः । २० ।

'सम्'पूर्वात् ग्रहः अकर्तरि मुष्टिविषये घञ् प्रत्ययो भवति । मुष्टिः अङ्गुलिसन्निवेशः न परिमाणम्, तत्र 'माने' [कृ० पञ्चमपाद सू० २९] इत्येव सिद्धत्वात् ।

अहो ! मल्लस्य संग्राहः ॥ २० ॥

---

१. अन्यदर्शनस्य–अन्यधर्मीयसंप्रदायस्य ।

## उदः । २१ ।

उदः परात् ग्रहः अकर्तरि घञ् प्रत्ययो भवति ।

उद्ग्राहः । उदः इति किम् ? ग्रहः । विग्रहः ॥ २१ ॥

## पू-द्रु-यौतेः । २२ ।

'उत्'पूर्वेभ्यः एभ्यः अकर्तरि घञ् प्रत्ययो भवति ।

उत्पावः । उद्द्रावः । उद्यावः ॥ २२ ॥

## निर्-अभेः पू-ल्वोः । २३ ।

'निर्'-'अभि'पूर्वाभ्यां पू-लूभ्याम् अकर्तरि घञ् प्रत्ययो भवति ।

निष्पावः । अभिलावः ॥ २३ ॥

## नियः अवात् । २४ ।

'अव'पूर्वात् नियः अकर्तरि घञ् प्रत्ययो भवति ।

अवनायः ॥ २४ ॥

## परेः द्यूते । २५ ।

'परि'पूर्वात् नियः द्यूतविषयात् अकर्तरि घञ् प्रत्ययो भवति ।

परिणायेन शारीन् हन्ति । द्यूते इति किम् ? परिणयः कन्यायाः ॥ २५ ॥

## भुवः अवज्ञाने वा । २६ ।

'परि'पूर्वात् भवतेः 'अवज्ञा'अर्थात् अकर्तरि घञ् प्रत्ययो वा भवति ।

परिभावः परिभवः चैत्रस्य । अवज्ञाने इति किम् ? समन्तात् भवः परिभवः ॥२६॥

## श्रः वायु-वर्ण-निवृते । २७ ।

'शॄ'धातोः अकर्तरि वायौ वर्णे निवृते च घञ् प्रत्ययो भवति ।

शारः वायुः । शारः वर्णः —शबलः । निशारः निवृतम्—प्रावरणम् इत्यर्थः । वायु-वर्ण-निवृते इति किम् ? शरः ॥ २७ ॥

## इङः । २८ ।

इङः अकर्तरि घञ् प्रत्ययो भवति ।

---

१. यद्यपि पा० पू० पुस्तकयोः अयमेव पाठः परन्तु यथासंख्यार्थं 'पू-ल्वः' इति पाठः उचितः । वृत्तौ उदाहरणानि यथासंख्यं दर्शितानि, अत एव इय संभावना । हैमे यथासंख्यं स्वीकृतम् ५।३।२१ सूत्रे । शाकटायनेऽपि ४।४।६ सूत्रे, अतः विचारणीय दृश्यते ।

अध्यायः । उपेत्य अधीयते अस्मात् इति उपाध्यायः । 'उपाध्यायी' इति 'बहु'-आदिषु 'उपाध्याय'शब्दपाठात् अपादाने स्त्रियां 'क्ति'बाधया घञ् ङी च वा भवति ॥२८॥

## माने । २९ ।

मानम् इयत्ता सा च संख्या परिमाणं च । तत्र वर्तमानात् धातोः अकर्तरि घञ् प्रत्ययो भवति । एकः निघासः । द्वौ निघासौ । एकः तन्दुलनिश्चायः ॥ २९ ॥

## चिति-उपसमाधान-आवास-देहे चिञः कश्च आदेः । ३० ।

चीयते इति चितिः—यज्ञे अग्न्याधारः । विप्रकीर्णानाम् उपरि उपरि राशिभावेन करणम् उपसमाधानम् । आवासः निवासः । देहः शरीरम् । एषु अर्थेषु चिञः अकर्तरि घञ् प्रत्ययो भवति, आदेश्च कः ।

आकायम् अग्निं विचिन्वीत । गोमयनिकायः । ऋषिनिकायः । कायः शरीरम् ॥३०॥

## संघे अनुपरौ । ३१ ।

न विद्यते कस्यचित् किञ्चिद् उपरि यस्मिन् तस्मिन् संघे वाच्ये चिञः अकर्तरि घञ् प्रत्ययो भवति । आदेश्च कः ।

वैयाकरणनिकायः । संघे इति किम् ? सारसमुच्चयः । अनुपरौ इति किम् ? शूकरनिचयः—शूकराः उपरि उपरि चीयन्ते इत्यर्थः ॥ ३१ ॥

## हस्तप्राप्ये अनुदः अस्तेये । ३२ ।

हस्तेन उपायान्तरनिरपेक्षं यत् तु प्राप्तुं शक्यं तद्विषयात् चिनोतेः अन्'उत्'पूर्वात् अकर्तरि घञ् प्रत्ययो भवति, न चेत् स धात्वर्थः स्तेयविषयः स्यात् । 'हस्तप्राप्ये' इति च प्रत्यासत्तिः उच्यते तेन तन्मात्रविधानम् ।

पुष्पप्रचायः गुल्मात् । हस्तप्राप्ये इति किम् ? पुष्पप्रचयं करोति तरुशिखरे । अस्तेये इति किम् ? पुष्पप्रचयं करोति स्तेयेन । अनुदः इति किम् ? पुष्पोच्चयः । 'हस्त-प्राप्यम्' इति मानम् अपि उच्यते तत्र नियमार्थं चेदं विज्ञेयम् 'अस्तेये एव' इति, तेन मानेऽपि स्तेये 'पुष्पाणां प्रचयः' इत्येव भवति ॥ ३२ ॥

## रोः उपसर्गात् । ३३ ।

उपसर्गपूर्वात् रौतेः अकर्तरि घञ् प्रत्ययो भवति ।

संरावः । उपसर्गात् इति किम् ? रवः ॥ ३३ ॥

## भू-श्रोः अल् । ३४ ।

उपसर्गपूर्वाभ्याम् आभ्याम् अकर्तरि अल् प्रत्ययो भवति ।

प्रभवः । संश्रयः । उपसर्गात् इति किम् ? भावः । श्रायः ॥ ३४ ॥

**अदः । ३५ ।**

उपसर्गपूर्वात् अदेः अकर्तरि अल् प्रत्ययो भवति ।

विघसः ॥ ३५ ॥

**नेः णश्च । ३६ ।**

'नि'पूर्वात् अदेः अकर्तरि अल् चकारात् णश्च प्रत्ययो भवति ।

निघसः । न्यादः ॥ ३६ ॥

**नद्-गद्-पठ-क्वण-स्वनः वा । ३७ ।**

'नि'पूर्वेभ्यः एभ्यः अकर्तरि अल् प्रत्ययो भवति वा ।

निनदः, निनादः । निगदः, निगादः । निपठः, निपाठः । निक्वणः, निक्वाणः । निस्वनः, निस्वानः ॥ ३७ ॥

**यमः सम्-नि-वि-उपात् । ३८ ।**

सम्-नि-वि-उपेभ्यः परात् यमेः अकर्तरि अल् प्रत्ययो भवति वा ।

संयमः, सयामः । नियमः, नियामः । वियमः, वियामः । उपयमः, उपयामः ॥ ३८ ॥

**वैणे क्वणः । ३९ ।**

वैणार्थात् क्वणतेः अकर्तरि अल् प्रत्ययो वा भवति ।

प्रक्वणः प्रक्वाणः वीणायाः । वैणे इति किम् ? प्रक्वणः शृङ्खलस्य ॥ ३९ ॥

**आङः रु-प्लोः । ४० ।**

'आङ्'पूर्वाभ्यां रु-प्लुभ्याम् अकर्तरि अल् प्रत्ययो वा भवति ।

आरवः, आरावः । आप्लवः । आप्लावः । आङः इति किम् ? आरवः। विप्लवः ॥ ४० ॥

**वर्षविघ्ने अवात् ग्रहः । ४१ ।**

'अव'पूर्वात् ग्रहेः अकर्तरि वर्षप्रतिबन्धे वाच्ये अल् प्रत्ययो भवति वा ।

अवग्रहः अवग्राहः । वर्षविघ्ने इति किम् ? अवग्रहः पदस्य ॥ ४१ ॥

**प्रात् युग्य-तुलासूत्रे । ४२ ।**

'प्र'पूर्वात् ग्रहः अकर्तरि युग्यसूत्रे तुलासूत्रे च वाच्ये अल् प्रत्ययो वा भवति ।

प्रग्रहः, प्रग्राहः ॥ ४२ ॥

## वृणोतेः वले । ४३ ।

'प्र'पूर्वात् वृणोतेः वले वाच्ये अकर्तरि अल् प्रत्ययो वा भवति ।

प्रवरः, प्रवारः । वले इति किम् ? प्रवरः यतिः ॥ ४३ ॥

## उदः नी-श्रिभ्यः । ४४ ।

उदः पराभ्याम् आभ्याम् अकर्तरि अल् प्रत्ययो वा भवति ।

उन्नयः, उन्नायः । उच्छ्रयः, उच्छ्रायः ॥ ४४ ॥

## समश्च अजः पशौ । ४५ ।

'वा' इति निवृत्तम् । समः उदश्च परात् अजेः अकर्तरि अल् प्रत्ययो भवति पशुविषयश्च धात्वर्थः स्यात् ।

समजः पशूनाम्, उदजः पशूनाम्—प्रेरणम्—इत्यर्थः । समश्च इति किम् ? व्याजः पशूनाम् । पशौ इति किम् ? समाजः । उदाजः ॥ ४५ ॥

## ऋत्-इवर्ण-उवर्णात् । ४६ ।

ऋकारान्तात् इवर्णान्तात् उवर्णान्तात् च धातोः अकर्तरि अल् प्रत्ययो भवति ।

ऋ—करः । चयः । क्रयः । स्तवः । लवः ॥ ४६ ॥

## वश-रण-गमि-वृ-दृ-ग्रहः । ४७ ।

एभ्यः अकर्तरि अल् प्रत्ययो भवति ।

वशः । रणः । गमः । वरः । दरः । ग्रहः ॥ ४७ ॥

## सर्ति-ग्लह-पणः प्रजन-अक्ष-इयत्त्वे । ४८ ।

सर्ति-ग्लह-पणिभ्यः यथासंख्यम् प्रजनविषये अक्षविषये च धात्वर्थे इयत्तायां च गम्यमानायाम् अकर्तरि अल् प्रत्ययो भवति ।

गवाम् उपसरः—प्रजनः गर्भग्रहणम् तदर्थं स्त्रीगवीषु पुंगवानाम् उपसरणम् एवम् उच्यते । अक्षस्य ग्लहः—ग्रहणम्-इत्यर्थः । ग्रहे लत्वम् सूत्रे तथानिर्देशात् । मूलकपणः मूलकस्य इयत्तापरिच्छिन्नः संव्यवहार्यः मुष्टिः । प्रजन-अक्ष इयत्त्वे इति किम् ? उपसारः । ग्राहः । पाणः ॥ ४८ ॥

## प्रमद-संमदौ हर्षे । ४९ ।

एतौ 'अल्'अन्तौ हर्षे निपात्येते ।

प्रमदः । सम्मदः । हर्षे इति किम् ? प्रमादः । संमादः । निपातनात् उपसर्गान्तराऽऽधिक्ये न भवति । प्रसम्मादः । अभिसम्मादः ॥ ४९ ॥

### उप-अभि-नि-विभ्यः ह्वः वश्च उत् । ५० ।

एभ्यः परात् ह्वयतेः अकर्तरि अल् प्रत्ययो भवति, तद्योगे च 'वा'शब्दस्य उकारः ।

उपहवः । अभिहवः । निहवः । विहवः । उप-अभि-नि-विभ्यः इति किम् ? संह्वायः ॥ ५० ॥

### आङः युद्धे । ५१ ।

आङः परात् ह्वयतेः अल् प्रत्ययो भवति, तद्योगे च 'वा'शब्दस्य उकारः ।

आहवः युद्धम् । युद्धे इति किम् ? आह्वायः—आह्वानम् ॥ ५१ ॥

### निपानम् आहावः । ५२ ।

निपानम् पश्वादिपानार्थम् उदकाधारः तस्मिन् वाच्ये 'आङ्'पूर्वात् ह्वयतेः अकर्तरि अल् प्रत्ययो भवति, 'हाव'आदेशश्च निपात्यते ।

आहावः पशूनाम् । निपानम् इति किम् ? आह्वायः—आह्वानम् ॥ ५२ ॥

### भावे अनुपसर्गात् । ५३ ।

अनुपसर्गात् ह्वयतेः अकर्तरि भावे अल् प्रत्ययो भवति, तद्योगे च 'वा'शब्दस्य उकारः ।

हवः । भावे इति किम् ? ह्वायः । अनुपसर्गात् इति किम् ? आह्वायः ॥ ५३ ॥

### हनः वा वधश्च । ५४ ।

अनुपसर्गात् हन्तेः अल् प्रत्ययो वा भवति, तद्योगे च हनः 'वध'आदेशः ।

वधः । घातः ॥ ५४ ॥

### नी-क्वण-यम-हस-स्वनः । ५५ ।

एभ्यः अनुपसर्गेभ्यः अकर्तरि वा अल् प्रत्ययो भवति ।

नयः, नायः । क्वणः, क्वाणः । यमः, यामः । हसः, हासः । स्वनः, स्वानः । अनुपसर्गात् इति किम् ? प्रणयः । प्रक्वाणः ॥ ५५ ॥

### व्यध-जप-मदः । ५६ ।

एभ्यः अनुपसर्गेभ्यः अकर्तरि अल् प्रत्ययो भवति ।

व्यधः । जपः । मदः । अनुपसर्गात् इति किम् ? प्रव्याधः । उपजापः । उन्मादः ॥ ५६ ॥

## विच्छेः नङ् । ५७ ।

विच्छेः अकर्तरि नङ् प्रत्ययो भवति ।

विश्नः ॥ ५७ ॥

## यति-यजि-रक्षि-स्वपि-प्रच्छः नः । ५८ ।

एभ्यः अकर्तरि नः प्रत्ययो भवति ।

यत्नः । यज्ञः । रक्ष्णः । स्वप्नः । प्रश्नः ॥ ५८ ॥

## उपसर्गात् दः किः । ५९ ।

उपसर्गपूर्वात् 'दा'संज्ञकात् धातोः अकर्तरि 'कि'प्रत्ययो भवति ।

जलधिः । वालधिः ॥ ५९ ॥

## अन्तर्द्धिः । ६० ।

'अन्तः'शब्दात् धाञः अकर्तरि 'कि'प्रत्ययो भवति ।

अन्तर्द्धिः ॥ ६० ॥

## 'टु'इतः अथुः । ६१ ।

'टु'इत्येतदितः धातोः अकर्तरि अथुः प्रत्ययो भवति ।

वेपथुः । श्वयथुः । क्षवथुः ॥ ६१ ॥

## 'डु'इतः त्रिमक् तत्कृते । ६२ ।

'तेन—धात्वर्थेन—कृतम्' इति अस्मिन् अर्थे 'डु'इत्येतदितः धातोः त्रिमक् प्रत्ययो भवति ।

कृत्रिमम् । याचित्रिमम् ॥ ६२ ॥

## व्याप्तौ भावे अन-ञिन् । ६३ ।

व्याप्तिः क्रियया स्वसंबन्धिनः साकल्येन अभिसंबन्धः, तस्यां गम्यमानायां धातोः अकर्तरि भावे 'अन ञिन्' प्रत्ययौ भवतः ।

संकुटनम् । सांकौटिनम् एषाम् । व्याप्तौ इति किम् ? संकोटः । 'अन'ग्रहणात् 'असरूपः' [कृ० प्र० पादे सू० १३] इति 'घञ्'आदिर्न भवति ॥ ६३ ॥

**चित्-चिन्ति-पूजि-कथि-कुम्बि-चर्चि-श्रद्धा-अन्तर्द्धः अङ् स्त्रियाम् । ६४ ।**

चितः 'चिन्ति'आदिभ्यश्च अकर्तरि स्त्रियाम् अङ् प्रत्ययो भवति ।

जृष्—जरा । क्षिप्—क्षिया । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । श्रद्धा । अन्तर्द्धा । 'अः प्रत्ययात्' [कृ० पा० ५ सू० ६७] इत्येव सिद्धे 'चिन्ति'आदिग्रहणम् 'अन' बाधनार्थम्[1] । केचित् 'भीषि'आदिग्रहणम् अत्र कुर्वन्ति तत् न अन्येषां सम्मतम्[2] ॥ ६४ ॥

**उपसर्गात् अः । ६५**

उपसर्गपूर्वात् आकारान्तात् धातोः अकर्तरि स्त्रियाम् अङ् प्रत्ययो भवति ।

उपदा । उपधा । उपसर्गात् इति किम् ? दत्तिः ॥ ६५ ॥

**'भिदा'आदयः । ६६ ।**

'बहुलम्' इति वर्तते । 'भिदा'आदयः 'अङ्'अन्ता बहुलम् अकर्तरि स्त्रियाम् साधवः वेदितव्याः ।

भिदा विदारणे, भित्तिः अन्या । छिदा द्वैधीकरणम्, छित्तिः अन्या । विदा विचारणे, वित्तिः अन्या । आरा शस्त्रम्, अर्तिः अन्या । धारा जलपतने, धृतिः अन्या । गुहा गिरि—ओषध्योः । गूढिः अन्या । एवम् अन्ये अपि । यत् लक्षणेन अनुत्पन्नं तत् सर्वं निपातनात् सिद्धम् ॥ ६६ ॥

**अः प्रत्ययात् । ६७ ।**

प्रत्ययान्तात् धातोः स्त्रियाम् अकर्तरि 'अ'प्रत्ययो भवति । गोपाया । तितिक्षा । दोला । चित्-चिन्ति'०[कृ० पा० ५ सू० ६४] इत्यादिना एकयोगम् अकृत्वा प्रत्ययान्तात् 'अ'प्रत्ययवचनम् 'वा अन-अकस्य' [समास प्रकरणे (?)] इति प्रतिषेधार्थम् ॥ ६७ ॥

**क्तेटः गुरोः व्यञ्जनात् । ६८ ।**

क्ते इट् यस्मात् तस्मात् गुरुमतः व्यञ्जनान्तात् अकर्तरि स्त्रियाम् 'अ'प्रत्ययो भवति ।

कुण्डा । हुण्डा । शिक्षा । भिक्षा । ईहा । ऊहा । चेष्टा । ईडा । सेवा । गुरोः इति किम् ? निपठितिः । निगृहीतिः ॥ ६८ ॥

**जागुः यश्च । ६९ ।**

जागर्तेः अकर्तरि स्त्रियाम् यः अकारश्च प्रत्ययो भवति ।

---

१. 'अस्य सूत्रस्य तथा समुपस्थितमस्य सूत्रस्य एकयोगेन कार्यं सिद्धं' इति भावः ।

२. आ० हेमचन्द्रः अत्र सूत्रे "भीषि-भूषि-चिन्ति-पूजि-कथि-" ५।३।१०९। इत्यादिना 'भीषि'आदिकस्य ग्रहणं करोति ।

जागर्या । जागरा ॥ ६९ ॥

### परेः सृ-चरः । ७० ।

'परि'पूर्वाभ्यां सृ-चरिभ्याम् अकर्तरि स्त्रियां 'य'प्रत्ययो भवति ।

परिसर्या । परिचर्या ॥ ७० ॥

### अधेश्च अनः अनिच्छायाम् इषः वा । ७१ ।

परेः अधेश्च परात् इषः अनिच्छार्थात् अकर्तरि स्त्रियाम् 'अन'प्रत्ययो वा भवति ।

पर्येषणा । अध्येषणा । परीष्टिः । अधीष्टिः ॥ ७१ ॥

### णि-वेत्ति-आस-श्रन्थ-घट्ट-वन्देश्च । ७२ ।

ण्यन्तात्, 'वेत्ति'आदिभ्यः, अनिच्छार्थात् इषेश्च अकर्तरि स्त्रियाम् 'अन'प्रत्ययो भवति ।

कारणा । कामना । वेदना । आसना । श्रन्थना । घट्टना । वन्दना । एषणा । 'वेत्ति'इति 'तिप्'निर्देशात् अन्यविदि प्रतिषेधः ॥ ७२ ॥

### ग्ला-ज्या-हः निः । ७३ ।

एभ्यः अकर्तरि स्त्रियां निः प्रत्ययो भवति ।

ग्लानिः । ज्यानिः । हानिः ॥ ७३ ॥

### प्रश्न-आख्याने वा इञ् । ७४ ।

धातोः अकर्तरि स्त्रियाम् प्रश्ने आख्याने च गम्यमाने वा इञ् प्रत्ययो भवति ।

[प्रश्ने] कां कारिम् का कारिकाम् कां क्रियाम् कां कृतिम् कां कृत्याम् अकार्षीः ? [आख्याने] सर्वां कारिम् सर्वां कारिकाम् सर्वां क्रियाम् सर्वां कृतिम् सर्वां कृत्याम् अकार्षम् ॥७४॥

### अर्ह-ऋण-पर्याय-उत्पत्तौ च णुच् । ७५ ।

'अर्ह'आदिषु प्रश्न-आख्यानयोश्च गम्यमानयोः धातोः अकर्तरि स्त्रियां णुच् प्रत्ययो भवति ।

अर्हति भवान् इक्षुभक्षिकाम् । ऋणे—इक्षुभक्षिकां मे धारयसि । पर्याये—भवतः शायिका । उत्पत्तौ—इक्षुभक्षिका मे उदपादि[2] ॥ ७५ ॥

---

१. एवम् "गणिम्, गणिकाम्, गणनाम्। पाचिम् पाचिकाम् पचिम्। पाठिम्, पाठिकाम्, पठिसिम्"-(शाकटा-४।४।८६) उदाहरणानि ज्ञेयानि ।

२. "कां कारिकाम् अकार्षीः ? सर्वां कारिकाम् अकार्षम्" (हैम-५।३।१२०) इति उदाहरणद्वयं यथासंख्यं प्रश्ने आख्याने चात्र बोध्यम् ।

**नाम्नि । ७६ ।**

धातोः अकर्तरि स्त्रियां नाम्नि वुञ् प्रत्ययो भवति ।

प्रच्छर्दिका, प्रवाहिका एवंनामानो व्याधयः । उद्दालपुष्पभञ्जिका एवंनामा क्रीडा । बहुलाधिकारात् 'अरोचकः' इत्यादौ पुंसि अपि भवति ॥ ७६ ॥

**भावे । ७७ ।**

धातोः अकर्तरि भावे स्त्रियां वुञ् प्रत्ययो भवति ।

आसिका । शायिका ॥ ७७ ॥

**गा-पा-पचः क्तिः । ७८ ।**

'गा'आदिभ्यः अकर्तरि भावे स्त्रियां 'क्ति'प्रत्ययो भवति ।

संगीतिः । प्रपीतिः । पक्तिः ॥ ७८ ॥

**स्थः वा । ७९ ।**

'स्था'धातोः अकर्तरि भावे स्त्रियां 'क्ति'प्रत्ययो वा भवति ।

प्रस्थितिः पक्षे आस्था, व्यवस्था ॥ ७९ ॥

**व्यतिहारे ञः अन्-'ईह'-आदेः । ८० ।**

व्यतिहारः परस्य कृतप्रतिकृतम्, तद्विषयार्थात् धातोः 'ईह'आदिवर्जात् अकर्तरि भावे स्त्रियां 'ञ'प्रत्ययो भवति वा ।

व्यावक्रोशी । व्यावलेखी । 'ञ-ञिनः अण्' [ (?) ] इति 'अण्'अन्तस्य प्रयोगः । पक्षे व्याकृष्टिः । अन्'ईह'आदेः इति किम् ? व्यतीहा । व्यतीक्षा । स्त्रियाम् इति किम् ? व्यतिपाकः वर्तते ॥ ८० ॥

**णि-उक्षः । ८१ ।**

ण्यन्तात् उक्षेश्च व्यतिहारविषयात् अकर्तरि स्त्रियां भावे 'ञ' प्रत्ययो भवति ।

व्यातिचारी । व्यात्युक्षी । नित्यार्थः योगः ॥ ८१ ॥

**आसि-अटि-व्रज-यजः क्यप् । ८२ ।**

एभ्यः अकर्तरि भावे स्त्रियां क्यप् प्रत्ययो भवति ।

आस्या । अट्या । व्रज्या । इज्या ॥ ८२ ॥

**भृञः नाम्नि । ८३ ।**

भृञः अकर्तरि भावे स्त्रियां नाम्नि क्यप् प्रत्ययो भवति ।

भृत्या । नाम्नि इति किम् ? भृतिः । भावे इति किम् ? भार्या ॥ ८३ ॥

**समज-निषद्-निपत-निपद्-मन-विद्-इण्-सुञ्-शीङः । ८४ ।**

एभ्यः अकर्तरि स्त्रियां क्यप् प्रत्ययो भवति ।

समज्या । निषद्या । निपत्या । निपद्या । मन्या । विद्या । इत्या । सुत्या । शय्या । मतिः । समितिः । आसुतिः इति बहुलाधिकारात् ॥ ८४ ॥

**कृञः वा शश्च । ८५ ।**

कृञः अकर्तरि स्त्रियां क्यप् शश्च प्रत्ययो भवति ।

क्रिया । कृत्या । पक्षे कृतिः ॥ ८५ ॥

**क्तिः । ८६ ।**

धातोः अकर्तरि स्त्रियां 'क्ति'प्रत्ययो भवति ।

सृष्टिः । दृष्टिः । कृतिः । वृत्तिः । स्त्रियाम् इति किम् ? सर्गः । चयः ॥ ८६ ॥

**स्तु-स्रु-यज्-इषः करणे । ८७ ।**

एभ्यः अकर्तरि करणे स्त्रियां 'क्ति'प्रत्ययो भवति ।

स्तुतिः । स्रुतिः । यजेः इष्टिः । इषेः अपि इष्टिः ॥ ८७ ॥

**'लभ्'आदिभ्यः । ८८ ।**

एभ्यः अकर्तरि स्त्रियां 'क्ति'प्रत्ययो भवति ।

लब्धिः । निकुचितिः । अर्देः अर्तिः । षित्वात् अङ् अपि भवति—लम्भा ॥ ८८ ॥

**'संपद्' आदिभ्यः क्विप् च । ८९ ।**

'संपद्'आदिभ्यः अकर्तरि स्त्रियां क्विप् क्तिश्च प्रत्ययो भवति ।

संपत्, संपत्तिः । विपत्, विपत्तिः । आपत्, आपत्तिः । संवित्, संवित्तिः । 'संपत्'आदयः प्रयोगगम्याः ॥ ८९ ॥

**साति-हेति-यूति-जूति-कीर्ति-अटाट्या-मृगया-इच्छा-याञ्चा-कृपाः । ९० ।**

एते स्त्रियाम् अकर्तरि निपात्यन्ते ।

सातेः क्तौ इत्वाभावः सातिः । हन्तेः हिनोतेर्वा'हे'भावः हेतिः । यौतेः जवतेश्च दीर्घत्वम्-यूतिः । जूतिः । कीर्तयतेः कीर्तिः । अटतेः यः द्वित्वम्-अटाट्या । मृगयतेः इच्छतेश्च शे शपि च यत्वाभावे मृगया । इच्छा । याचेः नः याञ्चा । कृपेः अङ् संप्रसारणं वा-कृपा ॥ ९० ॥

**नञः अनिः शापे । ९१ ।**

नञः परात् धातोः शापे गम्यमाने अकर्तरि स्त्रियाम् अनिः प्रत्ययो भवति ।

अकरणिस्ते जाल्म ! भूयात् । अप्रयाणिस्ते जाल्म ! भूयात् । नञः इति किम् ? हतिस्ते जाल्म ! भूयात् । शापे इति किम् ? अकृतिः कटस्य ॥ ९१ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने वृत्तौ कृति पञ्चमः पादः समाप्तः ॥

## कृदन्ते षष्ठः पादः

### क्लीबे भावे क्तः । १ ।

धातोः क्लीबे भावे 'क्त'प्रत्ययो भवति ।

हसितम् । शयितम् ॥ १ ॥

### अनट् । २ ।

क्लीबे भावे अनट् प्रत्ययो भवति ।

हसनम् । शयनम् ॥ २ ॥

### 'रमि'आदिभ्यः कर्तरि । ३ ।

एभ्यः कर्तरि 'अनट्' प्रत्ययो भवति ।

रमणी । कमनी ॥ ३ ॥

### करण-आधारे । ४ ।

धातोः करणे आधारे च अनट् प्रत्ययो भवति ।

इध्मव्रश्चनः । पलाशशातनः । आधारे—सक्तुधानी । 'पयःपानं सुखम्' 'ओदन-भोजनं सुखम्' इत्यत्र 'पयसः पानम्' इति असमासोऽपि दृश्यते इति "कर्मणा येन संस्पर्शात् कर्तुः शरीरसुखम्" [काशिका ३।३।११६] इति न आरभ्यते ॥ ४ ॥

### पुंनाम्नि घः । ५ ।

धातोः करणे आधारे च पुंनाम्नि 'घ' प्रत्ययो भवति ।

प्रच्छदः । उरच्छदः । आधारे—आकरः । आलवः । 'पुं'ग्रहणम् किम् ? विचयनी । बहुलाधिकारात् इह न भवति । दोहनः । प्रसाधनः ॥ ५ ॥

### गोचर-संचर-कष-आकष-बक-भग-खल-वह-व्रज-व्यज-आपण-निगमम् । ६ ।

एते करण-आधारयोः पुंनाम्नि निपात्यन्ते । गावः चरन्ति अस्मिन् इति गोचरः ।

---

१ पाणिनीयतन्त्रे 'पयःपानम्' इत्यादिकानां नित्यसमासरूपाणां प्रयोगाणां निष्पत्त्यै ३।३।११६ "कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्" इति सूत्रं निर्मितम् । आचार्यमलयगिरिस्तु कथयति—नैते नित्यसमासरूपाः अतः ते अनेनैव सेत्स्यन्ति ।

संचरः । कषः । आकषः । बकः । भगः । खलः । वहः । व्रजः । व्यजः । आपणः । निगमः ॥ ६ ॥

**व्यञ्जनात् घञ् । ७ ।**

व्यञ्जनान्तात् धातोः करण-आधारयोः पुंनाम्नि घञ् प्रत्ययो भवति ।

लेखः । वेगः । आरामः । प्रासादः । बहुलाधिकारात् इह न भवति—दोहनः ॥७॥

**तॄ-स्तॄः अवात् । ८ ।**

अवात् पराभ्याम् आभ्यां करण-आधारयोः पुंनाम्नि घञ् प्रत्ययो भवति ।

अवतारः । अवस्तारः ॥ ८ ॥

**समश्च हृ : । ९ ।**

समः अवात् च परात् हृञः करण-आधारयोः पुंनाम्नि घञ् प्रत्ययो भवति ।

संहारः । अवहारः ॥ ९ ॥

**दार-जार-अध्याय-न्याय-उथाव-आनाय-आधार-अवायाः । १० ।**

एते करण-आधारयोः पुंनाम्नि घञ्प्रत्यया निपात्यन्ते ।

दाराः । जारः । अध्यायः । न्यायः । उथावः । आनायः । आधारः । अवायः ॥ १० ॥

**उदङ्कः अतोये । ११ ।**

'उत्'पूर्वात् अ[illegible]-आधारयोः पुंनाम्नि घञ् निपात्[illegible]विषयश्चेत् धात्वर्थो न स्यात् ।

तैलोदङ्कः । घृतोदङ्कः । अतोये इति किम्? उदकोदञ्चनः ॥ ११ ॥

**खनः ड-डर-इक-इकवक-घाश्च । १२ ।**

खनेः करण-आधारयोः पुंनाम्नि 'ड'आदयः प्रत्यया भवन्ति, चकारात् घञ् च ।

आखः । आखरः । आखनिकः । आखनिकवकः । आखनः । आखानः ॥ १२ ॥

**इ-कि-श्तिपः स्वरूप-अर्थे । १३ ।**

धातोः स्वरूपे अर्थे च इ-कि-श्तिपः प्रत्यया भवन्ति ।

भञ्जिः । क्षुधिः । वेत्तिः । अर्थे-यजेः अङ्गानि । भुजिः क्रियते ॥ १३ ॥

**दुः-सु-ईषतः कृच्छ्र-अकृच्छ्राऽर्थे खल् । १४ ।**

कृच्छ्रवृत्तेः दुरः अकृच्छ्रवृत्तिभ्यां सु-ईषद्भ्यां परात् धातोः खल् प्रत्ययो भवति ।

दुःशयम् सुशयम् ईषच्छयं भवता । दुष्करः सुकरः ईषत्करः कटो भवता । कृच्छ्र-अकृच्छ्रे इति किम् ? ईषल्लभ्यम्-अल्पं लभ्यम् इत्यर्थः ॥ १४ ॥

## कर्तृ-आप्यात् भू-कृञः 'च्वि'अर्थे । १५ ।

'कृच्छ्र'-'अकृच्छ्र'अर्थेभ्यः दुः-सु-ईषद्भ्यः परात् कर्तृवाचिनः कर्मवाचिनश्च 'च्वि'अर्थे वर्तमानात् यथासंख्यं परात् भवतेः कृञश्च परः खल् प्रत्ययो भवति ।

दुराढ्यंभवम् स्वाढ्यंभवम् ईषदाढ्यंभवं भवता । दुराढ्यंकरः स्वाढ्यंकरः ईषदाढ्यंकरः चैत्रः भवता । च्वौ इति किम् ? दुःखेन आढ्यः क्रियते ॥ १५ ॥

## आतः अनः । १६ ।

'कृच्छ्र'-'अकृच्छ्र'अर्थेभ्यः दुः-सु-ईषद्भ्यः परात् आकारान्तात् धातोः 'अन'प्रत्ययो भवति ।

दुर्ग्लानम् सुग्लानम् ईषद्ग्लानम् भवता । दुर्दाना सुदाना ईषद्दाना गौः ॥ १६ ॥

## धृषि-मृषि-युधि-शासू-दृशः । १७ ।

'कृच्छ्र-'अकृच्छ्र'अर्थेभ्यः दुः-सु-ईषद्भ्यः परेभ्य एभ्यः 'अन' प्रत्ययो भवति ।

दुर्धर्षणः । दुर्मर्षणः । दुर्योधनः । सुयोधनः । दुःशासनः । दुर्दर्शनः । योगविभागात् अयम् अनित्यः ज्ञेयः । तेन इदम् उपपन्नम्–"दुर्दर्शो हि राजा कार्याकार्यविपर्यासम् आसन्नैः कार्यते" [कौटिलीयअर्थशास्त्रे अधि० १ । अध्या० १९ । प्रकरण १६ पृ० ३८ पङ्क्ति—१८–१९ ] इत्यादि ॥ १७ ॥

## वा निषेधे अलम्-खल्वोः क्त्वा । १८ ।

निषेधार्थयोः अलम् खल्वोः उपपदयोः धातोः क्त्वा प्रत्ययो भवति ।

अलं कृत्वा । अलं बाले ! रुदित्वा । अलं बाले ! रुदितेन । अनेकद्वीपा हि वसुमती, महान् प्रयोगविषयः, नियतविषयाश्च शब्दाः भवन्ति इति क्त्वाविषये 'खलु'शब्दः निषेधार्थः द्रष्टव्यः । निषेधे इति किम् ? अलंकारः । सिद्धं खलु ॥ १८ ॥

## पर-अवरे । १९ ।

परे अवरे च गम्यमाने धातोः क्त्वा प्रत्ययो वा भवति ।

१. श्रीशामशास्त्रिसंपादितम् कौटि० अर्थशास्त्रम् अत्र ग्राह्यम् । एतद् वाक्यं राजप्रणिधि-प्रकरणे विद्यते ।

पर्वतम् अतिक्रम्य नदी। नदीम् अप्राप्य पर्वतः । नदी-पर्वतयोः पर-अपरत्वमात्रेण व्यवस्थामात्रं प्रतीयते, न 'अस्ति' 'प्राप्यते' इति द्वितीया क्रिया इति वचनम् । पक्षे पर्वतातिक्रमेण नदी । नद्यप्राप्त्या पर्वतः ॥ १९ ॥

## मेङः तुल्यकर्तृके । २० ।

तुल्यः धात्वर्थान्तरेण कर्ता यस्य तस्मिन् अर्थे वर्तमानात् मेङः धातोः क्त्वा प्रत्ययो वा भवति ।

अपमित्य याचते, पक्षे अपमातुं याचते । प्राक्काले प्राप्ते अप्राक्काले अयं क्त्वा अत एव मेङः क्त्वायां याचेः क्त्वा न भवति ॥ २० ॥

## प्राक्काले । २१ ।

अपरकालेन तुल्यकर्तृके प्राक्काले अर्थे वर्तमानात् धातोः क्त्वा प्रत्ययो वा भवति ।

भुक्त्वा व्रजति । आसित्वा भुङ्क्ते । पक्षे आस्यते भोक्तुम् । मुखं व्यादाय स्वपिति, अक्षिणी निमील्य हसति इति व्यादानादिउत्तरकालभाविस्वापाद्यपेक्षया प्रत्ययः—व्यादाय हि उत्तरकालं स्वपिति, निमील्य हसति। 'यत्[भुज्यते]ततः गच्छति' इति[भुज्यते] पदं न प्राक्काले, यत् तद्भ्यां च क्रमप्रतीतिः । 'यद् भुक्त्वा व्रजति अधीते एव ततः परम्' इति 'व्रज्या'अपेक्षया प्राक्काले क्त्वा, यत् तद्भ्यां तु व्रज्या-अध्ययनयोः क्रमप्रतीतिः । 'प्राक्काले' इति एतत् उत्तरत्र अवस्थितम् अधिकृतं वेदितव्यम्। अभिधानतश्च व्यवस्था ॥२१॥

## अभीक्ष्णे ख्णम् । २२ ।

अभीक्ष्णे अपरकालेन तुल्यकर्तृके प्राक्काले अर्थे वर्तमानात् धातोः ख्णम् प्रत्ययो वा भवति ।

भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति । 'पुनः पुनः यद् भुज्यते[भुज्यते] ततः व्रजति' इति यत्-तद्भ्यां क्रमस्य प्रतीतिः, 'पुनः पुनः'इत्यतः आभीक्ष्ण्यस्य, 'भुंज्यते' इति द्विरुक्त्या अत्राऽविच्छेदः प्रतीयते, न आभीक्ष्ण्य-प्राक्कालौ ॥ २२ ॥

## पूर्व-अग्रे-प्रथमे । २३ ।

एषु उपपदेषु परकालेन तुल्यकर्तृके प्राक्काले अर्थे वर्तमानात् धातोः ख्णम् प्रत्ययो भवति वा ।

---

१. ' 'यद् भुज्यते ततो गच्छति,' 'यद् अधीते ततः शेते' इत्यत्र 'भुज्यते' 'अधीते' इति न पदं प्राक्काले, यत्-तद्भ्यां क्रमप्रतीतेः इति न भवति''–४।४।१४४ स्वा० अ० ।

२. ' भुज्यते भुज्यते इति च द्विरुक्तौ अविच्छेदः प्रतीयते '–४।४।१४५ स्वा० अ० ।

पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति । अग्रे भोजम्, अग्रे भुक्त्वा । प्रथमं भोजम्, प्रथमं भुक्त्वा व्रजति । 'पूर्वं यतः भुज्यते ततः व्रजति'इति 'पूर्व'शब्दः अत्र प्राक्काले न [उप ?]पदम् । पूर्वं भुक्त्वा ततः व्रजति इति व्रज्यापेक्षे प्राक्काले क्त्वा । तच्छब्दापेक्षे 'पूर्व'-शब्दः ॥ २३ ॥

## अन्यथा-एवम्-कथम्-इत्थमः कृञः अनर्थकात् । २४ ।

'अन्यथा'आदिभ्यः परात् तुल्यकर्तृकार्थात् कृञः अनर्थकात् ख्णम् प्रत्ययो वा भवति । आनर्थक्यं करोतेः 'अन्यथा'आदिभ्यः पृथगर्थाभावात् । यत्र हि भुज्यादौ 'अन्यथा'-आदयः प्रकारम् आचक्षते तत्र कृञ् अपि 'इति'विशेष्यमाणः तमेव प्रकारम् आचष्टे ।

अन्यथाकारं भुङ्क्ते । एवंकारं भुङ्क्ते । कथंकारं भुङ्क्ते । इत्थंकारं भुङ्क्ते । पक्षे अन्यथा कृत्वा इत्यादि । अनर्थकात् इति किम् ? अन्यथा कृत्वा शिरः भुङ्क्ते—'अन्यथा'शब्दः शिरःप्रकारे कृञश्च शिरः कर्म तत् न कृञा विना भवति ॥ २४ ॥

## यथा-तथात् ईर्ष्याप्रत्युक्तौ । २५ ।

यथा-तथाभ्यां परात् कृञः तुल्यकर्तृके अनर्थकात् परः ख्णम् प्रत्ययो वा भवति, ईर्ष्यया प्रतिवचने ।

कथं भोक्ष्यसे ? इति पृष्टः असूयया तं प्रति आह—यथाकारम् अहं भोक्ष्ये तथा त्वं द्रक्ष्यसि ॥ २५ ॥

## आप्यात् आक्रोशे । २६ ।

आप्यात् परात् तुल्यकर्तृकात् 'कृञ्' धातोः ख्णम् प्रत्ययो वा भवति आक्रोशे गम्यमाने ।

चौरंकारम् आक्रोशति—'चौरः असि'इति आक्रोशति इत्यर्थः । आक्रोशे इति किम् ? चौरं कृत्वा हेतुभिः कथयति ॥ २६ ॥

## 'स्वादु'अर्थात् अदीर्घात् । २७ ।

['स्वादु'अर्थात् अदीर्घात्] आप्यात् परात् तुल्यकर्तृकार्थात् कृञः ख्णम् प्रत्ययो वा भवति ।

स्वादुंकारं भुङ्क्ते । मृष्टंकारं भुङ्क्ते । पक्षे स्वादुं कृत्वा । अदीर्घात् इति किम् ? स्वाद्वीं कृत्वा यवागूं भुङ्क्ते ॥ २७ ॥

---

१. " व्यापारान्तरापेक्षे 'पूर्व' शब्दः " ४।४।१४५ शा० अ० ।

२. पृष्टे अ०—पृ० । ३. अतः पू० प्रतिः विच्छिन्ना अतः इत आरभ्य केवलं पा० प्रतिः प्रमाणम् ।

## विदि-दृशिभ्यः कार्त्स्न्ये णम् । २८ ।

आप्यात् पराभ्यां विदि-दृशिभ्यां तुल्यकर्तृके प्राक्काले अर्थे वर्तमानाभ्यां, कार्त्स्न्ये गम्यमाने णम् प्रत्ययो वा भवति ।

अतिथिवेदं भोजयति । कन्यादर्शं वरयति । बहुवचनात् 'विचति'वर्जाः त्रयः अपि विदयः गृह्यन्ते, विचतिस्तु अकर्मकः । कार्त्स्न्ये इति किम् ? अतिथिं विदित्वा भोजयति ॥ २८ ॥

## यावतः जीव-विन्दात् । २९ ।

'यावत्'शब्दात् आप्यात् पराभ्याम् [जीव विन्द इति]आभ्यां तुल्यकर्तृकाभ्यां परः णम् प्रत्ययो वा भवति [ कार्त्स्न्ये गम्यमाने ] ।

यावज्जीवम् अधीते—यावत् जीवति तावत् अधीते इत्यर्थः । यावद्वेदं गृह्णाति—यावद् लभते तावत् सर्वं गृह्णाति इत्यर्थः ॥ २९ ॥

## चर्म-उदरात् पूरेः । ३० ।

चर्मन्-उदराभ्यां कर्मभ्यां पूरयतेः प्राक्काले तुल्यकर्तृके अर्थे णम् वा भवति ।

चर्मपूरम् आस्ते, चर्म पूरयित्वा आस्ते इत्यर्थः । उदरपूरं शेते—उदरं पूरयित्वा शेते इत्यर्थः ॥ ३० ॥

## वृष्टीयत्त्वे अस्य 'ऊ'लुग् वा । ३१ ।

आप्यात् परात् पूरयतेः वृष्टीयत्त्वे गम्यमाने णम् प्रत्ययो वा भवति, अस्य च पूरेः ऊकारस्य वा लुक् ।

गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः । 'गोष्पदप्रम्' इति प्रादेः अडा कैन च क्रियाविशेषणं सिध्यति, 'गोष्पदपूरम्'इति अणि । एवम् 'यावज्जीवम्' इत्यादयोऽपि । तत्र सूत्रेणम् 'गोष्पदप्रतराम्' इत्यादिअर्थम् अन्यथा 'गोष्पदप्रतरम्' इत्याद्येव स्यात् ॥ ३१ ॥

## 'चेल'अर्थात् क्नोपेः । ३२ ।

'चेल'अर्थात् आप्यात् परात् क्नोपयतेः तुल्यकर्तृकार्थात् णम् प्रत्ययो भवति वा ।

चेलक्नोपं वृष्टो देवः—यावता चेलं समुन्नं भवति तावता वृष्टः इत्यर्थः ॥ ३२ ॥

---

१. 'प्रा' इत्यादिधातोः अर्थात् 'गोष्पदप्रम्' इति प्रयोगः 'प्रा' इत्यस्मात् धातोः प्रत्ययेन । २. 'अड्' प्रत्ययेन 'क' प्रत्ययेन च—इत्यर्थः । ३. गोष्पदं पूरयति इति गोष्पदपूरम् इति प्रयोगः अणि प्रत्यये सति सिध्यति इति आशयः । ४. 'णम्'प्रत्ययान्तस्य अव्ययत्वेन तराम् तमाम् आद्यर्थम् 'प्रम्' इत्येवम् अनुस्वारश्रवणार्थं च 'णम्' विधानम् ।

## त्वरायां पञ्चम्याम् । ३३ ।

त्वरायां गम्यमानायां पञ्चम्यन्तेन योगे तुल्यकर्तृकात् धातोः परः णम् वा भवति ।

शय्योत्थायं शय्याया उत्थाय धावति—एवंनाम त्वरा यावत् अन्यद् विहाय शयनात् उत्थानमात्रापेक्षो धावति। त्वरायाम् इति किम् ? आसनात् उत्थाय धावति ॥३३॥

## द्वितीयया । ३४ ।

त्वरायां गम्यमानायां द्वितीयान्तेन योगे तुल्यकर्तृकार्थात् धातोः णम् प्रत्ययो वा भवति ।

लोष्टग्राहम् लोष्टान् ग्राहं युध्यन्ते । योगविभाग उत्तरार्थः ॥ ३४ ॥

## ग्रह-आदिशः नाम्ना । ३५ ।

'नाम'शब्देन योगे तुल्यकर्तृकार्थात् ग्रहेः आदिशश्च परः णम् प्रत्ययो वा भवति ।

नामग्राहम् नामनी ग्राहम आचष्टे । नामआदेशम् नामानि आदेशं दत्ते । पक्षे नाम गृहीत्वा आचष्टे ॥ ३५ ॥

## विशि-पति-पदि-स्कन्दः वीप्सा-आभीक्ष्ण्ये । ३६ ।

'विश'आदिभ्यः द्वितीयान्तेन योगे वीप्सायाम् आभीक्ष्ण्ये च गम्यमाने णम् प्रत्ययो वा भवति ।

गेहंगेहम् अनुप्रवेशम् गेहानुप्रवेशम् आस्ते । गेहम् अनुप्रवेशम् अनुप्रवेशम् गेहानुप्रवेशम् आस्ते । गेहंगेहम् अनुप्रपातम् गेहानुप्रपातम् आस्ते । गेहम् अनुप्रपातम् अनुप्रपातम् गेहानुप्रपातम् आस्ते । गेहंगेहम् अनुप्रपादम् गेहानुप्रपादम् आस्ते । गेहम् अनुप्रपादम् अनुप्रपादम् गेहानुप्रपादम् आस्ते । गेहगेहम अवस्कन्दम् गेहावस्कन्दम् आस्ते । गेहम् अवस्कन्दम् अवस्कन्दम् गेहावस्कन्दम् आस्ते । असमासे द्विर्वचनम्, समासे समासः तत्र रूढः इति न भवति । वीप्सायां द्रव्यस्य । आभीक्ष्ण्ये क्रियायाः । आभीक्ष्ण्ये 'णम्'वचनं समासार्थम् ख्णमि हि स न स्यात् । पक्षे गेहंगेहम् अनुप्रविश्य आस्ते । गेहम् अनुप्रविश्य अनुप्रविश्य आस्ते ॥ ३६ ॥

## स्वाङ्गेन अध्रुव-परिक्लेश्येन । ३७ ।

यस्मिन् छिन्ने भिन्ने वा प्राणी न म्रियते तद् अध्रुवम्, सर्वतः बाध्यमानं परिक्लेश्यम् । स्वाङ्गेन अध्रुवेण परिक्लेश्येन द्वितीयान्तेन योगे धातोः तुल्यकर्तृकार्थात् परः णम् प्रत्ययो भवति वा ।

१. द्विर्वचनम् ।

अक्षिणी निकाणं [अक्षिनिकाणं] जल्पति । परिक्लेश्येन—उरःप्रतिपेषं उरांसि प्रतिपेषं युध्यन्ते । पक्षे—अक्षिणी निकाण्य जल्पति । उरांसि प्रतिपिष्य युध्यन्ते । स्वाङ्गेन इति किम् ? गड्डुम् उपपीड्य तिष्ठति । अध्रुव-परिक्लेश्येन इति किम् ? शिरः उत्क्षिप्य वक्ति ॥३७॥

## कालेन तृषि-अस्वः क्रियान्तरे । ३८ ।

क्रियाम् अन्तरयति इति क्रियान्तरः—व्यवधायकतया क्रियामध्यवर्ती तस्मिन् अर्थे वर्तमाने तृषेः अस्यतेश्च कालवाचिना द्वितीयान्तेन णम् प्रत्ययो वा भवति ।

द्व्यहतर्षं गावः पिबन्ति, द्व्यहं तर्षं गावः पिबन्ति । द्व्यहात्यासं गावः पिबन्ति, द्व्यहम् अत्यासं गावः पिबन्ति । तृषि-अस्वः इति किम् ? द्व्यहम् उपोष्य भुङ्क्ते । कालेन इति किम् ? योजनं तर्षित्वा गावः पिबन्ति । क्रियान्तरे इति किम् ? अहः अत्यस्य इषून् गतः ॥३८॥

## तृतीयया उपदंशः । ३९ ।

'उप'पूर्वात् दंशेः तुल्यकर्तृकार्थात् तृतीयान्तेन योगे णम् प्रत्ययो वा भवति ।

मूलकेन उपदंशं मूलकोपदंशं भुङ्क्ते । पक्षे मूलकेन उपदश्य भुङ्क्ते । मूलकम् उपदंशेः कर्म भुजेस्तु करणम् ॥ ३९ ॥

## हिंसार्थात् तुल्याप्यात् । ४० ।

येन धात्वन्तरेण तुल्यकर्तृकः तेन तुल्याप्यात् धातोः हिंसार्थात् तृतीयान्तेन योगे णम् प्रत्ययो वा भवति ।

दण्डेन उपघातं दण्डोपघातं गाः कलयति । पक्षे दण्डेन उपहत्य गाः कलयति । हिंसार्थात् इति किम् ? चन्दनेन अनुलिप्य चैत्रं परिधापयति । तुल्याप्यात् इति किम् ? दण्डेन आहत्य चौरं गोपालकः गाः खेटयति ॥ ४० ॥

## सप्तम्या अपि च उपात् पीड-रुध-कर्षः । ४१ ।

सप्तम्या अपि शब्दात् तृतीयया च योगे उपात् परेभ्यः 'पीड'आदिभ्यः तुल्य-कर्तृकार्थेभ्यः णम् प्रत्ययो वा भवति ।

पार्श्वोपपीडम् पार्श्वयोः उपपीडं शेते । व्रजोपरोधम् व्रजेन उपरोधं गाः स्थापयति । पाण्युपकर्षम् पाणौ उपकर्षम् पाणिना उपकर्षं धानाः गृह्णाति । उपात् इति किम् ? पार्श्वेन निपीड्य तिष्ठति । 'च'शब्दः उत्तरत्र उभयोः अनुकर्षणार्थः ॥ ४१ ॥

## प्रमाण-समासत्त्योः । ४२ ।

आयाममानं प्रमाणम् । समासत्तिः सरम्भपूर्वकः सन्निकर्षः । तयोः गम्यमानयोः तृतीयान्तेन साम्यन्तेन च योगे तुल्यकर्तृकार्थात् धातोः णम् प्रत्ययो वा भवति ।

द्व्यङ्गुलोत्कर्षम् द्व्यङ्गुले उत्कर्षम् द्व्यङ्गुलेन उत्कर्षम् गण्डिकाः छिनत्ति । समासत्तौ—केशग्राहम् केशेषु ग्राहम् केशैः ग्राहम् युध्यन्ते । पक्षे द्व्यङ्गुलेन उत्कृष्य गण्डिकाः छिनत्ति । केशैः गृहीत्वा युध्यन्ते ॥ ४२ ॥

## कर्तुः जीव-पुरुषात् नश-वहेः तस्मिन् । ४३ ।

'जीव'शब्दात् 'पुरुष'शब्दात् च परात् यथासंख्यं नशेः वहेश्च तस्मिन् धातौ उपपदे णम् प्रत्ययो वा भवति ।

जीवनाशं नश्यति—जीवन् नश्यति इत्यर्थः । पुरुषवाहं वहति—प्रेष्यो भूत्वा पुरुषो वहति इत्यर्थः पक्षे यथायोगं घञादयः । जीवस्य नाशं नश्यति । प्रकृति-उपपदयोस्तु क्रियाभेदात् प्राक्कालता नास्ति इति न 'क्त्वा'प्रसङ्गः । कर्तुः इति किम् ? जीवेन नष्टः । पुरुषं वहति ॥ ४३ ॥

## ऊर्ध्वात् पूरि-शुषेः । ४४ ।

'ऊर्ध्व'शब्दात् कर्तुः परात् पूरेः शुषेश्च तस्मिन् धातौ उपपदे णम् वा भवति ।

ऊर्ध्वपूरं पूर्यते । ऊर्ध्वशोषं शुष्यति—ऊर्ध्वं शुष्यति इत्यर्थः ॥ ४४ ॥

## कर्मणश्च उपमाने । ४५ ।

कर्मणः कर्तुः परात् धातोः तस्मिन् धातौ उपपदे णम् प्रत्ययो वा भवति उपमाने गम्यमाने ।

घृतनिधायं निहितः—घृतम् इव इत्यर्थः । नास्तिकनाशं नष्टः—नास्तिक इव नष्टः ॥ ४५ ॥

## शुष्क-चूर्ण-रूक्षात् पिषः । ४६ ।

'शुष्क'आदिभ्यः परात् पिषेः तस्मिन् एव धातौ उपपदे णम् प्रत्ययो वा भवति ।

शुष्कपेषं पिनष्टि—शुष्कं पिनष्टि इत्यर्थः । एवम् चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ॥ ४६ ॥

## कृञ्-ग्रहः अकृत-जीवात् । ४७ ।

'अकृत'-'जीव'शब्दाभ्यां परात् यथासंख्यं कृञः ग्रहेश्च तस्मिन् एव धातौ उपपदे णम् प्रत्ययो वा भवति ।

अकृतकारं करोति—अकृतं करोति इत्यर्थः । जीवग्राहं गृह्णाति—जीवं गृह्णाति इत्यर्थः ॥ ४७ ॥

## निमूलात् कषः । ४८ ।

'निमूल'शब्दात् कर्मणः परात् कषेः तस्मिन् धातौ उपपदे णम् प्रत्ययो वा भवति । निमूलकाषं कषति ॥ ४८ ॥

## समूलात् हनश्च । ४९ ।

समूलात् कर्मणः परात् हन्तेः कषेश्च तस्मिन् एव धातौ उपपदे णम् प्रत्ययो वा भवति ।

समूलघातं हन्ति—समूलं हन्ति इत्यर्थः । समूलकाषं कषति ॥ ४९ ॥

## करणात् । ५० ।

करणवाचिनः परात् हन्तेः तस्मिन् धातौ उपपदे णम् प्रत्ययो वा भवति ।

पाणिघातं हन्ति—पाणिना हन्ति इत्यर्थः । हिंसार्थात् अपि परत्वात् अयमेव विधिः । अस्मिन् समासः नित्यः । स एव धातुः उपपदं भवति—असिघातं हन्ति शत्रून् ॥ ५० ॥

## स्व-स्नेहनार्थात् पुष-पिषः । ५१ ।

'स्व'अर्थात् 'स्नेहन'अर्थात् च यथासंख्यं पुषः पिषेश्च परः णम् प्रत्ययो वा भवति तस्मिन् एव धातौ उपपदे ।

स्वपोषं पुष्णाति । आत्मपोषं पुष्णाति । मातृपोषं पुष्णाति । रैपोषं पुष्णाति । उदपेषं पिनष्टि । घृतपेषं पिनष्टि । क्षीरपेषं पिनष्टि ॥ ५१ ॥

## 'हस्त'अर्थात् ग्रह-वर्ति-वृतः । ५२ ।

'हस्त'अर्थात् करणात् परेभ्यः 'ग्रह'आदिभ्यः तेषु एव धातुषु उपपदेषु णम् प्रत्ययो वा भवति ।

हस्तग्राहं गृह्णाति । हस्तवर्तं वर्तते[1] । एवम् करग्राहम् इत्यादि ॥ ५२ ॥

## बन्धेः नाम्नि । ५३ ।

बन्ध इति प्रकृतिः नामविशेषणं च । बन्धेः नाम—संज्ञा—तद्विषयात् करणात् परात् बन्धेः तस्मिन् एव धातौ उपपदे णम् वा भवति ।

अट्टालिकाबन्धं बद्धः । 'अट्टालिका'आदीनि बन्धनैनामधेयानि तैर्बन्धनैर्बद्धः । अन्ये प्रत्ययान्तोपाधेः मन्यन्ते प्रत्ययान्तं च नाम भवति, तेषां मते 'अट्टालिकाबन्धम्' इत्यादीनि बन्धननामानि ॥ ५३ ॥

---

१. अतः पूर्वम् 'हस्तवर्तं वर्तयति' इति ज्ञेयम् ।

२ विशेषप्रकारकबन्धननामधेयानि ।

**आधारात् । ५४ ।**

आधारवाचिनः परात् बन्धेः तस्मिन् एव धातौ उपपदे णम् वा भवति ।

चक्रबन्धं बद्धः—चक्रे बद्धः इत्यर्थः । 'ग्रामे बद्धः' इत्यादि बहुलाधिकारात् ॥५४॥

**कृञः अव्ययेन अनिष्टोक्तौ क्त्वा-णमौ । ५५ ।**

अव्ययेन योगे तुल्यकर्तृकार्थात् कृञः अनिष्टोक्तौ गम्यमानायां क्त्वा-णमौ वा भवतः ।

ब्राह्मण ! पुत्रः ते जातः किं तर्हि वृषल ! नीचैः कारम्, नीचैः वृषल ! कारम्, वृषल ! नीचैःकृत्य, नीचैः वृषल ! कृत्वा आचक्षे । उच्चैर्नाम प्रियम् आख्येयम् । ब्राह्मण ! कन्या ते गर्भिणी जाता किं तर्हि वृषल ! उच्चैः कारम् उच्चैः वृषल ! कारम्, वृषल ! उच्चैःकृत्य, उच्चैः वृषल ! कृत्वा आचक्षे । नीचैर्नाम अप्रियम् आख्येयम् । अनिष्टोक्तौ इति किम् ? उच्चैः कृत्वा आचष्टे—ब्राह्मण ! पुत्रस्ते जातः । अव्ययेन इति किम् ? ब्राह्मण ! पुत्रस्ते जातः किं तर्हि वृषल ! मन्दं कृत्वा कथयसि । 'क्त्वा'ग्रहणं समासार्थम् ॥ ५५ ॥

**तिर्यचा अपवर्गे । ५६ ।**

अपवर्गः समाप्तिः, "समाप्तिपूर्वकः पारः" इति एके । "त्यागः" इति अन्ये । तस्मिन् गम्यमाने तिर्यचा अव्ययेन योगे तुल्यकर्तृकार्थात् कृञः क्त्वा-णमौ वा भवतः ।

तिर्यक्कृत्वा, तिर्यक्कृत्य, तिर्यक्कारम् आस्ते । अपवर्गे इति किम् ? तिर्यक् कृत्वा काष्ठं गतः ॥ ५६ ॥

**भुवः अन्वचा आनुलोम्ये । ५७ ।**

अन्वचा अव्ययेन योगे तुल्यकर्तृकार्थात् भवतेः क्त्वा-णमौ वा भवतः ।

अन्वग्भूत्वा, अन्वग्भूय, अन्वग्भावं तिष्ठति ॥ ५७ ॥

**तूष्णीमा । ५८ ।**

तूष्णीमा अव्ययेन योगे तुल्यकर्तृकार्थात् भवतेः क्त्वा-णमौ वा भवतः ।

तूष्णीं भूत्वा, तूष्णींभूय, तूष्णींभावं तिष्ठन्ति ॥ ५८ ॥

**स्वाङ्गतः-च्व्यर्थ-धाऽर्थ-नाना-विना कृञश्च । ५९ ।**

तसन्तेन स्वाङ्गेन, च्व्यर्थवृत्तिभिः धाऽर्थप्रत्ययान्तैः अव्ययैः नाना-विनाभ्यां च योगे तुल्यकर्तृकार्थात् भवतेः कृञश्च परौ क्त्वा-णमौ वा भवतः ।

मुखतः भूत्वा, मुखतोभूय, मुखतोभावम् आस्ते । नाना भूत्वा, नानाभूय, नानाभावं

१. प्रत्ययाभावः ।

२. आ० हेमचन्द्रः सर्वान् अर्थान् स्वीकरोति–५।४।८५।

गतः । विना भूत्वा, विनाभूय, विनाभावं गतः । अद्विधाभूतः द्विधा भूत्वा, द्विधाभूय, द्विधाभावं गतः । एकधा भूत्वा, एकधाभूय, एकधाभावं गतः । ऐकध्यं भूत्वा, ऐकध्यंभूय, ऐकध्यंभावं गतः । एवं मुखतः कृत्वा, मुखतःकृत्य, मुखतःकारं शेते इत्यादि। 'च्व्यर्थे' इति किम्? नाना कृत्वा भक्ष्याणि भुङ्क्ते ॥ ५९ ॥

## आप्यात् इच्छार्थे तुम्-सप्तम्यौ । ६० ।

आप्यभूतात् धातोः तुल्यकर्तृकात् इच्छार्थे धातौ उपपदे तुम्-सप्तम्यौ भवतः ।

भोक्तुम् इच्छति, भुञ्जीय इति इच्छति । आप्यात् इति किम्? इच्छन् करोति । इच्छार्थे इति किम्? भोजकः याति ॥ ६० ॥

## 'घ्यण्'आदिः अ'तिव्'आदिः कृत् सिद्धः । ६१ ।

'तिव्'आदिवर्जितः 'घ्यण्'आदिः प्रत्ययः कृत् सिद्धः वेदितव्यः । कृत्प्रदेशाः 'अतुम्-त्वा-अम् कृत्' [कृत् प्रथमपाद १ सूत्र] इत्येवम् आदयः ॥ ६१ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासनवृत्तौ कृति षष्ठः पादः समाप्तः ॥

॥ कृदन्तप्रकरणं समाप्तम् ॥

॥ तद्धिते प्रथमः पादः खण्डितः ॥

# तद्धिते द्वितीयः पादः

[ द्व्यादेः गुणात् मूल्यक्रेये मयट् । १ ।

द्व्यादेः गुणवृत्तेः संख्याशब्दात् 'तद् अस्य' इत्यर्थे मयट् भवति, स चेत् षष्ठ्यर्थः

---

१ अस्य श्रीमलयगिरिशब्दानुशासनस्य द्वौ एव आदर्शौ लिखितपुस्तके-लभ्येते । एक पूनास्थितभाण्डारकरप्राच्यविद्यामन्दिरस्य, अन्य गुजरदेशान्तर्गतपाटणस्थितश्रीहेमचन्द्राचार्यजैनज्ञान-मन्दिरस्य । तत्र यः पूनासत्कः आदर्शः स आदिभागात् त्रुटितः अन्तभागेऽपि त्रुटितः एतस्मिन् आदर्शे कृत्प्रकरणपर्यन्त एव भागो लभ्यते ततः परं तद्धितप्रकरणं न लभ्यते अर्थात् पूनासत्के आदर्शे आदितः एव तद्धितप्रकरण न लभ्यते ।

यश्च पाटणसत्कः आदर्शः तत्र तद्धितप्रकरण तु विद्यते परन्तु तत् आदित एव खण्डितम् मध्ये मध्येऽपि खण्डितम् अन्ते तु विशेषतः खण्डितम् ।

अस्य व्याकरणस्य प्रथमप्रकरणात् आरभ्य कृत्प्रकरण यावत् प्रतिप्रकरणं समाप्तौ केवल पादस्य एव निर्देश कृत न क्वापि अध्यायस्य परन्तु अस्मिन् तद्धितप्रकरणे एकस्मिन् समाप्ति-सूचके उल्लेखे अध्यायेन सह पादस्यापि निर्देशः कृत ।

श्रीमलयगिरिणा तद्धितप्रकरणे प्रतिप्रकरण ये समाप्तिसूचका उल्लेखा विहिताः ते एवम् —

' १ इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्धिते द्वितीयाध्याये द्वितीयः पादः समाप्तः ।
२ इति श्रीमलय . तद्धिते अष्टम
३ ,, ,, , नवमः पादः समाप्तः
४ ,, , . दशमः पादः समाप्तः

एषु तद्धितप्रकरणसंबन्धिषु चतुर्षु निर्देशेषु प्रथमे एव निर्देशे अध्यायेन सह पादस्यापि निर्देशः विहितः अन्येषु - प्रथमेतरेषु उल्लेखेषु केवल पादस्यैव निर्देश कृत अतः न कल्पयितु शक्यम् यत् आचार्यहेमचन्द्रवत् श्रीमलयगिरिणाऽपि अस्मिन् तद्धितप्रकरणे केवले अध्यायानाम् अध्यायान्तर्गतपादानां च योजना कृता वा न-इति, यतः अनेन प्रस्तुतव्याकरणविभागे एक निर्देश विहाय अन्यत्र सर्वत्र समाप्तिसूचकेषु निर्देशेषु ' पादः समाप्तः ' ' पादः समाप्तः ' इत्येवमेव निर्देशः कृतः ।

अन्यच्च तद्धितप्रकरणसूचकेभ्यः एतेभ्यो निर्देशेभ्यः स्पष्टं ज्ञायते यत् अस्मिन् प्रकरणे प्रथमः समग्रोऽपि अध्यायो नोपलभ्यते ।

द्वितीयेऽपि अध्याये केवल द्वितीयः अष्टमः नवमः दशमः एते एव पादाः उपलभ्यन्ते अन्ये तृतीयाद् आरभ्य सप्तमपर्यन्ताः पादा नष्टाः यच्च दशमपादानन्तरमपि यत् प्रकरणं समुपलभ्यते तत् खण्डितम् ततः पश्चात् किमपि भवेत् वा न इति न ज्ञातु शक्यम् ।
दशमपादानन्तरस्य प्रकरणस्य खण्डितत्वेन ज्ञायते यत् तद्धिते मलयगिरीय व्याकरणम् इदं न संपूर्णं संप्राप्यते ।

तद्धितप्रकरणे यत् यत् यत्र खण्डितम् तत् तत् सर्वत्र तत्र शाकटायन-सिद्धहेमादिव्याकरणानां सहायतया [ ] इत्याकारके चिह्न सुसंहित कृतम् इति ।

सूत्राणाम् अङ्का अपि संपादकेन स्वबुद्धया विहिताः । पुस्तकस्य खण्डितत्वेन न तत्र क्रमशः संपूर्णा अङ्का लब्धा इति ।

मूल्यम् क्रेयं वा भवति । द्वौ गुणौ एषां मूल्यभूतानां यवानाम् ]

द्विमया यवा उदश्वितः मूल्यम् । एवं च त्रिमयाः । चतुर्मयाः । द्वौ गुणौ यस्य उदश्वितः क्रेयस्य द्विमयम् उदश्वित् यवानां क्रेयम् । एवम् त्रिमयम् । चतुर्मयम् । गुणात् इति किम् ? उदश्वितः त्रयाणां भागानां द्वौ भागौ यवानां मूल्यभूतानाम् ॥ १ ॥

……………………………………………[1]

## संजातम् 'तारका'आदिभ्यः इतः । २ ।

'तद् अस्य' इति वर्तते । 'तद्' इति प्रथमान्तेभ्यः 'तारका'आदिभ्यः 'अस्य'इति षष्ठ्यर्थे 'इत'प्रत्ययो भवति, तत् चेत् प्रथमान्तं संजातं स्यात् ।

तारकाः संजाताः अस्य तारकितं नभः । पुष्पितः तरुः । तारका पुष्प इत्यादि। बहुवचनम् आकृतिगणताद्योतनार्थम् ॥ २ ॥

## गर्भात् अप्राणिनि । ३ ।

'गर्भ'शब्दात् 'तद् अस्य संजातम्' इत्यस्मिन्नर्थे 'इत'प्रत्ययो भवति, चेत् स षष्ठ्यर्थः प्राणी न स्यात् ।

गर्भितः व्रीहिः । अप्राणिनि इति किम् ? गर्भिणी गौः ॥ ३ ॥

## क्षेत्रे अन्यस्मिन् नाश्ये इयः । ४ ।

'क्षेत्र'शब्दात् निर्देशात् एव सप्तम्यन्तात् अन्योपाधिकात् नाश्ये अर्थे 'इय'प्रत्ययो भवति ।

अन्यस्मिन् जन्मान्तरसंबन्धिनि क्षेत्रे शरीरे नाश्यः क्षेत्रियः—असाध्यः—व्याधिः । क्षेत्रियं विषम् तद्धि शरीरात् अन्यस्मिन् परशरीरे संक्रमय्य किञ्चित् नाश्यं भवति । क्षेत्रियाणि तृणानि तानि हि सस्यक्षेत्रे अन्यस्मिन् उत्पन्नानि नाश्यानि भवन्ति । क्षेत्रियः पारदारिकः, स हि परदारेषु क्षेत्रात् अन्यस्मिन् क्षेत्रे विनाश्यो [निग्राह्यो] भवति, दाराश्च क्षेत्रम् ॥ ४ ॥

## छन्दः 'अधीते' श्रोत्रश्चास्य वा । ५ ।

'छन्दस्'शब्दात् 'अधीते'इत्यस्मिन्नर्थे 'इय'प्रत्ययो वा भवति, तद्योगे च अस्य 'श्रोत्र'आदेशो भवति ।

छन्दः अधीते श्रोत्रियः, छान्दसः ॥ ५ ॥

---

१. खण्डितम् ।

## इन्द्रियम् । ६ ।

'इन्द्र'शब्दाद् 'इय'प्रत्ययो निपात्यते, निपातनं रूढ्यर्थम् ।

इन्द्रः आत्मा तस्य लिङ्गम् इदम् आवरणक्षय-उपशमजम्, तेन जुष्टम् दत्तं वा इन्द्रियम् ॥ ६ ॥

## पूर्वम् अनेन सादेश्च इन् । ७ ।

'पूर्वम्'इति क्रियाविशेषणात् 'पूर्व'शब्दात् केवलात् सादेश्च 'अनेन'इति तृतीयार्थे कर्तरि 'इन्'प्रत्ययो भवति ।

पूर्वम् अनेन पूर्वी कटम् । 'अनेन'इति कर्ता क्रियामन्तरेण न इति 'कृतम्' इत्यादिका काचित् क्रिया अपेक्ष्यते, विशेषाधिगमस्तु अर्थ प्रकरणादिना । सादेः-[कृतं पूर्वम् अनेन कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम । पीतपूर्वी सुराम् ॥ ७ ॥

## [ शाकट-शाकिनौ क्षेत्रे । ८ ।

'तस्य' इति वर्तते । धान्यादीनाम् उत्पत्त्याधारभूः क्षेत्रम् । 'तस्य' इति षष्ठ्यन्तात् क्षेत्रे अर्थे शाकट-शाकिनौ प्रत्ययौ भवतः ।

इक्षूणां क्षेत्रम् इक्षु]शाकटम् । इक्षुशाकिनम् ॥ ८ ॥

## धान्येभ्यः ईनञ् । ९ ।

'धान्य' अर्थेभ्य. षष्ठ्यन्तेभ्यः क्षेत्रे अर्थे ईनञ् प्रत्ययो भवति ।

मौद्गीनम् । कौद्रवीणम् ॥ ९ ॥

## व्रीहि-शालिभ्याम् एय । १० ।

आभ्यां क्षेत्रे वाच्ये एयञ् प्रत्ययो भवति ।

व्रैहेयम् । शालेयम् ॥ १० ॥

## यव-यवक-षष्टिकेभ्यः यः । ११ ।

एभ्यः क्षेत्रे वाच्ये 'य' प्रत्ययो भवति ।

यव्यम् । यवक्यम । षष्टिक्यम् ॥ ११ ॥

## वा अणु-माषाभ्याम् । १२ ।

आभ्यां षष्ठ्यन्ताभ्यां क्षेत्रेवाच्ये वा 'य' प्रत्ययो भवति ।

अणव्यम्, आणवीनम् । माष्यम्, माषीणम् ॥ १२ ॥

---

१. 'पीतपूर्वी पयः'' इति हैमम्-७।१।१६७। २ ''षष्टिरात्रेण पच्यमाना व्रीहयः षष्टिकाः'' ३।३।२७। शा० अ० । ७।१।७८। हैमम् । भाषायाम्-साठी चोखा । ३. ''व्रीहिभेदः अणुः-'' (अमर० द्वितीयकाण्डे वैश्यव० श्लो० २०)

### भङ्गा-उमा-तिलात् । १३ ।

एभ्यः षष्ठ्यन्तेभ्यः क्षेत्रे वाच्ये वा 'य' प्रत्ययो भवति ।

भङ्ग्यम्, भाङ्गीनम् । उम्यम्, औमीनम् । तिल्यम्, तैलीनम् ॥ १३ ॥

### अलाब्वाश्च रजसि कटः । १४ ।

'अलाबू' शब्दात् भङ्गा-उमा-तिलेभ्यश्च रजसि वाच्ये 'कट' प्रत्ययो भवति ।

अलाबूनां रजः अलाबूकटम् । भङ्गाकटम् । उमाकटम् । तिलकटम् ॥ १४ ॥

### 'पिलु' आदेः कुणः पाके । १५ ।

'पीलु' आदेः 'तस्य' इति षण्ठ्यन्तात् पाके अर्थे 'कुण' प्रत्ययो भवति ।

पीलूनां पाकः पीलुकुणः । कर्कन्धुकुणः । पीलु कर्कन्धु इत्यादि ॥ १५ ॥

### 'कर्ण' आदि-पक्षात् जाह-ति मूले । १६ ।

'कर्ण'आदेः 'पक्ष'शब्दात् च षष्ठ्यन्तात् मूले अर्थे यथासंख्यं 'जाह'-'ति' प्रत्ययौ भवतः ।

कर्णस्य मूलम् कर्णजाहम् । अक्षिजाहम् । कर्ण अक्षि इत्यादि । पक्षस्य मूलम् पक्षतिः ॥ १६ ॥

### [द्रोः य] भव्ये[1] । १७ ।

'द्रु'शब्दात् तुल्ये भव्ये अर्थे 'य'[2] प्रत्ययो भवति । विशिष्टेष्टपरिणामेन भवति इति भव्यम् ।

द्रुतुल्यं द्रव्यम्-कार्षापणम् । यथा—द्रु अग्रन्थि अजिह्मम् दारु उपकल्प्यमान-विशिष्टेष्टरूपं भवति तथा इदं कार्षापणं विनियुज्यमानं विशिष्टेष्टमालादिउपभोगफलम् । भव्ये इति किम्? द्रुणः तुल्यः ॥ १७ ॥

### संज्ञा-प्रतिकृत्योः कः । १८ ।

'तस्य' इति षष्ठ्यन्तात् तुल्ये अर्थे संज्ञायाम् प्रतिकृतौ च विषये 'क' प्रत्ययो भवति । प्रतिकृतिः काष्ठादिमयं प्रतिबिम्बम् ।

---

१. षोडशतमे सूत्रे 'आह-ति' इत्येवं द्वौ प्रत्ययौ विहितौ, तथासति सप्तदशतमे सूत्रे 'य' प्रत्ययस्य 'तुल्य'अर्थस्य च अनुवर्तनं कस्मात्? अतः 'तुल्य'इति पदस्य तथा 'य' प्रत्ययस्य च अनुवर्तनादेव कल्पयितुं शक्यम्, यत् अनयोः सूत्रयोर्मध्ये खण्डितं वर्तते । २. 'द्रु' शब्दस्य षष्ठ्यन्तम् ।

अश्वकः । अश्वकं रूपम् । संज्ञा-प्रतिकृत्योः इति किम् ? गोः तुल्यः गवयः ॥ १८ ॥

## न नृ-पूजार्थ-ध्वज-चित्रे । १९ ।

नरि पूजार्थे ध्वजे चित्रे कर्मणि च वाच्ये 'क' प्रत्ययो न भवति ।

चञ्चातुल्यः चञ्चा ना । पूजार्थे—अर्हन् । शिवः । स्कन्दः । पूजनार्थाः प्रतिकृतयः । सिंहो ध्वजः । चित्रकर्मणि—दुर्योधनः ॥ १९ ॥

## अपण्ये जीवने । २० ।

जीव्यते येन तस्मिन् अपण्ये 'क' प्रत्ययो न भवति ।

वासुदेवतुल्यः वासुदेवः । शिवः । स्कन्दः । जीविकार्था एताः प्रतिकृतयः । अपण्ये इति किम् ? हस्तिकान् विक्रीणीते ॥ २० ॥

## 'देवपथ'आदिभ्यः । २१ ।

एभ्यः तुल्ये अर्थे संज्ञा-प्रतिकृत्योः कः न भवति ।

देवपथतुल्यः देवपथः । वारिपथः इत्यादि ॥ २१ ॥

## भावे त्व-तलौ । २२ ।

'तस्य' इति षष्ठ्यन्तात् भावे वाच्ये 'त्व'-'तल्' प्रत्ययौ भवतः । भवतः अस्मात् अभिधान–प्रत्ययौ इति भावः–शब्दप्रवृत्तिनिमित्तम् ।

गोता, गोत्वम् अत्र सामान्यम् । शुक्लत्वम् शुक्लता पटस्य, अत्र गुणः । शुक्लत्वम् शुक्लता रूपस्य, अत्र गुणसामान्यम् । राजपुरुषत्वम् राजपुरुषता, कारकत्वम् कारकता, औपगवत्वम् औपगवता—अत्र संबन्धः । समास-कृत्-तद्धितेषु अपि रूढिशब्देषु जात्यभिधानमेव—कृष्णसर्पत्वम् कृष्णसर्पता । कुम्भकारत्वम् कुम्भकारता । हस्तित्वम् हस्तिता । धवखदिरत्वम् इति संघातः । यदृच्छाशब्देषु अपि शब्दस्वरूपं संज्ञा-संज्ञिसंबन्धः बालकिशोराद्यवस्थानुगतं वा वस्तुरूपम्-डित्थत्वम् डित्थता । चैत्रत्वम्, चैत्रता । भवनम् भूतिः भावः इति प्रकृत्यर्थौ अभिन्नौ वा सत्ता प्रत्ययार्थः । पृथक्त्वम् पृथक्ता । नानात्वम् नानाता ।वृत्तौ 'पृथग्' आदिशब्दाः 'पृथग्भूत' आदिअर्थे वर्तन्ते इति प्रत्ययः । विग्रहस्तु 'पृथग्भूतस्य भावः' इत्यादि ॥ २२ ॥

## नञ्तत्पुरुषात् अबुधादेः । २३ ।

प्राक् 'त्वे'प्रत्ययात् नञ्तत्पुरुषात् 'अबुध'आद्यन्तात् त्व-तलौ एव भवतः इति अधिकृतं वेदितव्यम् ।

अशुक्लत्वम्, अशुक्लता । 'अशौक्ल्यम्' 'अकार्ष्ण्यम्' इति 'ट्यण्'अन्तेन समासः । अपतित्वम्, अपतिता । 'अनाधिपत्यम्' 'अगाणपत्यम्' इति 'ट्यण्' अन्तेन समासः । अस्थविरत्वम्, अस्थविरता । 'अस्थाविरम्' इति 'अण्'अन्तेन समासः । अहायनत्वम्, अहायनता । 'अहैहायनम्' इति 'अण्'अन्तेन समासः । अरमणीयत्वम्, अरमणीयता । 'अरामणीयकम्' इति 'वुञ्' अन्तेन समासः । अन्यथा सर्वत्र नञः वृद्धिः स्यात् । अबुधादेः इति किम्? आबुध्यम् । आचतुर्यम् । बुध चतुर इत्यादि ॥ २३ ॥

## 'पृथु'आदेः वा इमन् । २४ ।

'पृथु'आदिभ्यः भावे वाच्ये इमन् प्रत्ययो भवति वा । 'प्राक्त्वात्' इति वचनात् त्व-तलौ, 'वा' वचनात् तु अन्योऽपि प्राप्तः ।

प्रथिमा, पृथुत्वम्, पृथुता, पार्थवम् । पृथु मृदु इत्यादि ॥ २४ ॥

## वर्ण-'दृढ'आदिभ्यः ट्यण् च । २५ ।

वर्ण[विशेषवाचिभ्यः 'दृढ'आदिभ्यश्च तस्य भावे इमन् ट्यण् च वा भवतः ।

शुक्लस्य भावः शुक्लिमा, शौक्ल्यम्, शुक्लत्वम्, शुक्लता । कृष्णिमा, कार्ष्ण्यम्, कृष्णत्वम्, कृष्णता । कद्रिमा, काद्रव्यम्, कद्रुत्वम्, कद्रुता । शितिमा, शैत्यम्, शितित्वम्, शितिता, शैतम् । 'वा'वचनात् 'इक्' अन्तस्य पाक्षरूप्यम् । 'दृढ'आदिभ्यः— द्रढिमा, दार्ढ्यम्, दृढत्वम्, दृढता । परिव्रढिमा, पारिवृढ्यम्, परिवृढत्वम्, परिवृढता । सम्मतिमा, साम्मत्यम्, सम्मतित्वम्, सम्मतिता, साम्मतम् । टकारः 'ङी' अर्थः । आर्हन्ती । औचिती । सामग्री । शैली] ॥ २५ ॥

## ['पति'-'राज'अन्त-गुणाङ्ग-'राज'आदिभ्यः कृत्ये च । २६ ।

'पति'अन्त-'राज'अन्त-गुणाङ्ग-'राज'आदिभ्यः 'तस्य' इति षष्ठ्यन्तेभ्यः कृत्ये कर्तव्ये, कर्मणि-क्रियायाम् भावे च ट्यण् भवति ।

---

१. अत्र "प्राक् 'त्व'प्रत्ययात्" इति कुतः अनुवर्तनीयम्? अस्मात् सूत्रात् पूर्वम् "प्राक् त्वात् अपृथ्वादेः" इति शाकटायनीयम् सूत्रं वर्तते - ३।३।६। शा० अ०। हैमेऽपि एवमेव— ७।१।७७। अतः अत्र इदं सूत्रं त्यक्तं हैमम्। अत्र अस्यैव पादस्य ३९–एकोनचत्वारिंशत्तमं सूत्रं समनुसंधेयम् । २. 'बुध'आदिअन्तवर्जितात् अर्थात् 'बुध'आदयः शब्दा नञ्तत्पुरुषे अन्ते न स्युः इति भावः ।

'पति'अन्तेभ्यः—अधिपतेः भावः कृत्यम् वा आधिपत्यम् । प्राजापत्यम् । सैनापत्यम् । अधिपतित्वम्, अधिपतिता ।

'राज'अन्तेभ्यः—आधिराज्यम् । यौवराज्यम् । अधिराजत्वम्, अधिराजता ।

गुणः अङ्गं निमित्तं येषां प्रवृत्तेः ते गुणाङ्गाः—गुणद्वारेण गुणिनि वर्तमानाः—मौढ्यम्, मूढत्वम्, मूढता ।

'राज'आदिभ्यः—राज्यम्, राजत्वम्, राजता । काव्यम्, कविता, कवित्वम् । ब्राह्मण्यम्, ब्राह्मणत्वम्, ब्राह्मणता ॥ २६ ॥

## सहायात् वा । २७ ।

'सहाय'शब्दात् तस्य भावे कृत्ये च टघण् वा भवति ।

सहायस्य भावः कृत्यं वा साहाय्यम्, साहायकम्, सहायत्वम्, सहायता ॥२७॥

## वयः-प्राणिजातेः अञ् । २८ ।

'वयः'वचनात् प्राणिजातिवचनात् च तस्य भावे कर्मणि च वाच्ये अञ् प्रत्ययो भवति ।

कौमारम्, कुमारत्वम्, कुमारता ।

आश्वम्, अश्वत्वम्, अश्वता । जातिग्रहणं किम्? चैत्रत्वम्, चैत्रता ॥ २८ ॥

## 'युव'आदि-'हायन'अन्तात् अण् । २९ ।

'युव'आदेः 'हायन'अन्तात् च तस्य भावे कर्मणि च वाच्ये अण् प्रत्ययो भवति ।

यौवनम्, युवत्वम्, युवता । युवन् स्थविर इत्यादि । द्वैहायनम्, द्विहायनत्वम्, द्विहायनता ॥ २९ ॥

## 'लघु'आदेः इकः । ३० ।

'लघु'पूर्वः यः इक् तदन्तात् तस्य भावे कर्मणि च अर्थे अण् प्रत्ययो भवति ।

शौचम्, शुचित्वम्, शुचिता । 'तैतवम्' इत्यत्र यद्यपि 'तितउ' इति अव्यवहित-'लघु'आदि 'इक्'अन्तं भवति तथापि नैकम् उदाहरणं लक्षणारम्भं प्रयोजयति इति 'शुचि' आदिभ्यः अपि भवति । 'लघु'आदेः इति किम्? पाण्डुत्वम् । इकः इति किम्? घटत्वम् ॥ ३० ॥

## हृदय-पुरुषात् असमासे । ३१ ।

आभ्याम् असमासविषयाभ्यां तस्य भावे कर्मणि च वाच्ये अण् प्रत्ययो भवति।

हार्दम्, हृदयत्वम्, हृदयता। पौरुषम्, पुरुषत्वम्, पुरुषता। असमासे इति किम्? परमहृदयत्वम्। 'परमहार्दम्' 'परमपौरुषम्' इति मा भूत्। अत एव निषेधात् सापेक्षात् अपि भावप्रत्ययः, तेन काकस्य कार्ष्ण्यम् इत्यादि सिद्धम्॥ ३१॥

## श्रोत्रियात् यलुक् च। ३२।

'श्रोत्रिय'शब्दात् तस्य भावे कर्मणि च वाच्ये अण् प्रत्ययो भवति, तद्योगे च 'य'लुक्।

श्रौत्रम्, श्रोत्रियत्वम्, श्रोत्रियता॥ ३२॥

## कपि-ज्ञातेः एयण्। ३३।

आभ्यां तस्य भावे कर्मणि च वाच्ये एयण् प्रत्ययो भवति।

कापेयम्। ज्ञातेयम्। कपित्वम्। ज्ञातित्वम्। कपिता। ज्ञातिता॥ ३३॥

## 'य'उपान्त्यात् गुरूपोत्तमात् वुञ्। ३४।

त्रिप्रभृतीनाम् अन्त्यम् उत्तमम्, तत्समीपम् उपोत्तमम्, तद् गुरुः यस्य तस्मात् 'य'उपान्त्यात् तस्य भावे कर्मणि च वाच्ये वुञ् प्रत्ययो भवति।

रामणीयकम्, रमणीयत्वम्, रमणीयता। आचार्यकम्। 'गुरु'ग्रहणात् अनेकव्यञ्जनव्यवधानेऽपि भवति। गुरुग्रहणम् हि दीर्घ-संयोगपरार्थम् अन्यथा 'दीर्घोपोत्तमात्' इत्येव उच्येत। गुरूपोत्तमात् इति किम्? क्षत्रियत्वम्। कायत्वम्॥ ३४॥

## 'चोर'आदेः। ३५।

एभ्यः तस्य भावे कर्मणि च वाच्ये वुञ् प्रत्ययो भवति।

चौरिका। चौरत्वम्, चौरता। एवम्—सैतिका इत्यादि॥ ३५॥

## द्वन्द्वात् लित्। ३६।

द्वन्द्वात् समासात् तस्य भावे कर्मणि च वाच्ये वुञ् भवति स च लित्।

शैष्योपाध्यायिका, शिष्योपाध्यायत्वम्, शिष्योपाध्यायता॥ ३६॥

## गोत्र-चरणाभ्यां श्लाघा-अत्याकार-प्राप्ति-अवाये। ३७।

गोत्रवाचिनः चरणवाचिनश्च परः तस्य भावे कर्मणि च वाच्ये वुञ् प्रत्ययो भवति 'श्लाघा' आदिविषये। अत्याकारः अधिक्षेपः। अवायः निश्चयः।

गार्ग्यस्य भावः कर्म वा गार्गिका तया श्लाघते, अत्याकुरुते, प्राप्नोति, अवगतवान्। चरणात्–काठिकया श्लाघते। 'श्लाघा' आदि० इति किम्? अन्यत्र गार्गम्। काठम्॥ ३७॥

[ होत्राभ्यः ईयः ]। ३८।

होत्रा ऋत्विग्विशेषः। तदर्थात् तस्य भावे कर्मणि च वाच्ये 'इय' प्रत्ययो भवति।

अच्छावाकीयम्, अच्छावाकत्वम्, अच्छावाकता। बहुवचनं स्वरूपमात्रव्युदासार्थम्॥ ३८॥

ब्रह्मणः त्वः। ३९।

'ब्रह्मन्'शब्दात् ऋत्विग्विशेषवाचिनः तस्य भावे कर्मणि च वाच्ये 'त्व' प्रत्ययो भवति।

ब्रह्मणः भावः ब्रह्मत्वम्। होत्राभ्यः इति किम्? ब्राह्मणपर्याये ब्रह्मत्वम्, ब्रह्मता॥ ३९॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्धिते द्वितीयाध्याये द्वितीयः पादः समाप्तः॥

---

१. पूर्वस्मात् सूत्रात् 'होत्राभ्यः' इति अनुवर्तनीयम्। "'होत्राभ्यः' इति वर्तते" ३।३।२३। का० अ०।

। तृतीयात् पादात् आरभ्य षष्ठपर्यन्ताः पादाः खण्डिताः ।

# तद्धिते सप्तमः पादः

## गम्ये अह्ना एकेन अश्वात् ईनञ्। १।

'तस्य' इति वर्तते। 'तस्य' इति षष्ठ्यन्तात् 'अश्व' शब्दात् एकेन अह्ना गम्ये अर्थे ईनञ् प्रत्ययो भवति।

अश्वस्य एकेन अह्ना गम्यः आश्वीनः अध्वा। एकेन अह्ना इति किम्? अश्वस्य मासेन गम्यः॥ १॥

## कुलात् जल्पे। २।

'तस्य' इति षष्ठ्यन्तात् 'कुल'शब्दात् जल्पे अर्थे ईनञ् प्रत्ययो भवति।

कुलस्य जल्पः कौलीनः॥ २॥

## यथामुख-संमुखात् ईनः दर्शने। ३।

यथामुख-संमुखशब्दाभ्यां षष्ठ्यन्ताभ्यां दर्शने अर्थे 'ईन'प्रत्ययो भवति। दृश्यते अस्मिन् इति दर्शनम् आदर्शादिः प्रतिबिम्बाश्रयः।

यथामुखीनम्—यथा मुखम् तथा अस्मिन् दृश्यते प्रतिबिम्बम् इत्यर्थः। समं मुखम् अस्य अनेन वा संमुखम्—प्रतिबिम्बम् तस्य दर्शनम् संमुखीनम् आदर्शादि॥ ३॥

## 'सर्व'आदेः पथि-अङ्ग-[कर्म]-पत्र-पात्र-शरावात् व्यापिनि। ४।

'तस्य' इति षष्ठ्यन्तेभ्यः 'सर्व'शब्दआदिभ्यः 'पथि'आदिभ्यः व्यापिनि अर्थे 'ईन' प्रत्ययो भवति।

सर्वपथस्य व्यापी सर्वपथीनः रथः। सर्वाङ्गीणः तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीणः ओदनः। सर्वशरावीणः ओदनः॥ ४॥

## आप्रपदम्। ५।

आपदाग्रात् आप्रपदम्, तस्मात् षष्ठ्यन्तात् व्यापिनि अर्थे 'ईन' प्रत्ययो भवति।

आप्रपदं व्यापी आप्रपदीनः पटः॥ ५॥

## अनुपदं बद्धा। ६।

'अनुपद'शब्दात् 'बद्धा' इत्यर्थे 'ईन' प्रत्ययो भवति।

अनुपदीना उपानत्॥ ६॥

**अयानयं नेयः । ७ ।**

'अयानय'शब्दात् निर्देशात् एव द्वितीयान्तात् नेये अर्थे 'ईन' प्रत्ययो भवति ।
अयानयं नेयः । अयानयीनः शारिः ॥ ७ ॥

**सर्वान्नम् अत्ति । ८ ।**

'सर्वान्न'शब्दात् द्वितीयान्तात् 'अत्ति' इत्यर्थे 'ईन' प्रत्ययो भवति ।

सर्वान्नम् अत्ति सर्वान्नीनः भिक्षुः नियमरहितः ॥ ८ ॥

**परोवरीण-[परम्परीण]-पुत्रपौत्रीणाः । ९ ।**

एते 'ईन' प्रत्ययान्ता निपात्यन्ते ।

परान् च अवरान् च अनुभवति परोवरीणः । परान् च परतरान् च अनुभवति परम्परीणः । पुत्रान् च पौत्रान् च अनुभवति पुत्रपौत्रीणः ॥ ९ ॥

**यथाकाम-अनुकाम-अत्यन्त-पार-अवार-अवारपारान् गामिनि । १० ।**

एभ्यः द्वितीयान्तेभ्यः गामिनि अर्थे 'ईन' प्रत्ययो भवति ।

यथाकामं गामी यथाकामीनः । अनुकामीनः । अत्यन्तीनः । पारीणः । अवारीणः । पारावारीणः । अवारपारीणः ॥ १० ॥

**अनुगु अलम् । ११ ।**

'अनुगु'शब्दात् अलंगामिनि अर्थे 'ईन' प्रत्ययो भवति ।

अनुगु अलं गामी अनुगवीनः गोपालकः ॥ ११ ॥

**अध्वानम् य-ईनौ । १२ ।**

'अध्वन्' शब्दात् द्वितीयान्तात् अलंगामिनि अर्थे 'य'-'ईन' प्रत्ययौ भवतः ।

अध्वानम् अलंगामी अध्वन्यः । अध्वनीनः । ईने अनुवर्तमाने पुनः 'ईन' ग्रहणम् उत्तरत्र समुच्चयार्थम् ॥ १२ ॥

**अभ्यमित्रम् ईयश्च । १३ ।**

'अभ्यमित्र' शब्दात् द्वितीयान्तात् अलंगामिनि अर्थे 'ईय' प्रत्ययो भवति चकारात् य-ईनौ च ।

---

१ "अयः प्रदक्षिणं गमनम् अनयः प्रसव्यम्" (अन्+अय=अनय) ३।३।५९ शा० अ० । "शारः । अथवा अयः शुभं दैवम् अनयः अशुभं दैवम्–शुभदैवात् अपवर्तते अशुभं दैवम् यस्मिन् कर्मणि तद् अयानयं शान्तिकर्म ......तद् यो नेयः सः अयानयीनः ईश्वरः"– हैमे–७।१।१७।

अभ्यमित्रम् अलंगामी अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः—अमित्राभिमुखं भृशं गन्ता इत्यर्थः ॥ १३ ॥

## समांसमीन-अद्यश्वीन-अद्यप्रातीन-आगवीन-साप्तपदीनाः ।१४।

एते 'ईन-ईनञ्' प्रत्ययान्ता निपात्यन्ते—'समाम् समाम्' इति वीप्साद्वितीयान्तसमुदायात् 'गर्भं धारयति' अर्थे 'ईन' प्रत्ययो भवति पूर्वस्यादेश्च लुक् ।

समां समां धारयति इति समांसमीना गौः । अन्ये "समायां समायां गर्भं विमुञ्चति इति समांसमीना" [ ] इति आहुः । अद्य श्वः वा विजनिष्यते अद्यश्वीना प्रत्यग्रप्रसवा इत्यर्थः । अन्ये "प्रत्यासन्ने भविष्यति अर्थे प्रत्ययम्" [ ] आहुः—अद्य श्वः वा भविष्यति अद्यश्वीनं मरणम् । अद्यश्वीनः वियोगः । एवम् अद्य प्रातः वा अद्यप्रातीना गौः, मरणादि वा । आगवीनः—आगोप्रतिदानात् कर्मकरः एवम् उच्यते[1] । सप्तभिः पदैः अवाप्यम् साप्तपदीनं सख्यम् । अत्र ईनञ् ॥ १४ ॥

[2]

.................. .............. ........

## तद् अस्य अस्ति अस्मिन् वा इति मतुः । १ ।

'तत्' इति प्रथमान्तात् 'अस्ति' इत्येवमुपाधिकात् 'अस्य' इति षष्ठ्यर्थे 'अस्मिन्' इति सप्तम्यर्थे वा 'मतु' प्रत्ययो भवति ।

गावः अस्य सन्ति गोमान् । अस्ति—धनम् तत् अस्य अस्ति अस्तिमान् । स्वस्ति आरोग्यम् तत् अस्य अस्ति स्वस्तिमान् । वृक्षाः अस्मिन् सन्ति इति वृक्षवान् पर्वतः । 'अस्ति' इति किम् ? गावः अस्य आसन् भविष्यन्ति वा । 'इति' करणः विवक्षार्थः । तेन—

"भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गे 'अस्ति' विवक्षायां प्रायः 'मतु' आदयः मताः" ॥

भूम्नि—गोमान् । निन्दायाम्—ककुदावर्ती । प्रशंसायाम्—रूपवान् । नित्ययोगे क्षीरिणः वृक्षाः । अतिशायने-उदरवती कन्या । संसर्गे—दण्डी । प्रायिकम् एतत् 'भूम' आदिदर्शनम् सत्तामात्रेऽपि दृश्यते—व्याघ्रवान् पर्वतः । 'मतु'अर्थीयात् 'मतु'अर्थीयः सरूपो न भवति—'गोमन्तः अस्य सन्ति' अत्र पुनः मतुः न भवति । विरूपस्तु भवति—दण्डिमती शाला । विरूपोऽपि समासे वृत्तौ न भवति—दण्डः एषाम् अस्ति इति दण्डिनः, 'ते अस्य सन्ति' इति मतुः न भवति । न च असंज्ञाभूतात् कर्मधारयात् मत्वर्थीयः—

---

१ "आगोप्रतिदान कारी आगवीनः कर्मकरः"—हैम-७।१।१०५। २. खण्डितानि सूत्राणि। अतः १-२-३-इति क्रमः ।

'वीरपुरुषाः अस्मिन् ग्रामे सन्ति' किन्तु बहुव्रीहिः एव—वीरपुरुषः ग्रामः। संज्ञारूपात् तु स्यात्—गौरखरवत् अरण्यम्'। गुणे गुणिनि च ये शब्दाः तेभ्योऽपि न—शुक्रः अस्य अस्ति। ये तु गुणमात्रे तेभ्यः भवत्येव—रूपवान्। शौक्ल्यवान् ॥ १ ॥

### आ यात् । २ ।

'य' प्रत्ययम् अभिव्याप्य याः प्रकृतयः निर्दिश्यन्ते ताभ्यः 'तत् अस्य अस्ति' 'अस्मिन्' वा इति विषये 'मतु' प्रत्ययो भवति।

शाकीमान्। वातवान् ॥ २ ॥

### नः अङ्गादेः । ३ ।

'अङ्ग' आदेः मत्वर्थे 'न' प्रत्ययो भवति।

अङ्गानि अस्याः सन्ति अङ्गना--रूढिशब्दोऽयम् तेन-कल्याणाङ्गी स्त्री उच्यते, अन्यत्र अङ्गवान्। पामनः, पामवान्। अङ्ग पामन् इत्यादि ॥ ३ ॥

### शाकी-पलाली-दर्दूभ्यः ह्रस्वश्च । ४ ।

एभ्यः शब्देभ्यः मत्वर्थे न प्रत्ययो भवति, ह्रस्वश्च एषाम् अन्तादेशः। महत् शाकम् शाकी। महत् पलालम् पलाली। "पलालम्—पलालक्षोदः" [ ] इति एके। दर्दूः व्याधिः।

शाकिनः। पलालिनः। दर्द्रुणः। 'आ यात्'। [प्रस्तुते पादे सू० २] इति वचनात् मतु—शाकीमान्। पलालीमान्। दर्दूमान् ॥ ४ ॥

### वात-दन्त-बल-ललाटात् ऊलः । ५ ।

एभ्यः मत्वर्थे 'ऊल' प्रत्ययो भवति।

वातूलः। दन्तूलः। बलूलः। ललाटूलः। मतौ वातवान् इत्यादि ॥ ५ ॥

### प्रज्ञा-श्रद्धा-अर्चा-वृत्ते णः । ६ ।

एभ्यः शब्देभ्यः मत्वर्थे 'ण' प्रत्ययो भवति।

प्राज्ञः। श्राद्धः। आर्चः। वार्तः। मतौ प्रज्ञावान् इत्यादि ॥ ६ ॥

### प्राण्यङ्गात् आतः लः । ७ ।

प्राण्यङ्गात् आकारान्तात् मत्वर्थे 'ल' प्रत्ययो भवति।

चूडालः। जङ्घालः। चूडावान्। जङ्घावान्। प्राण्यङ्गात् इति किम्? जङ्घावान् प्रासादः ॥ ७ ॥

## सिध्मादि-रुग्-क्षुद्रजन्तोः । ८ ।

'सिध्म'आदिभ्यः रुग्वाचिभ्यः क्षुद्रजन्तुवाचिभ्यश्च मत्वर्थे 'ल' प्रत्ययो भवति ।

सिध्मलः । गडुलः । सिध्मवान् । गडुमान् । पार्ष्णीलः । धमनीलः । 'पार्ष्णी-धमनी'शब्दौ दीर्घान्तौ एव गणे पठ्येते तेन ह्रस्वान्ताभ्यां मतुः एव । सिध्म गडु इत्यादि ।

रुक्—विचर्चिकालः, विचर्चिकावान् ।

क्षुद्रजन्तु—मक्षिकालः, मक्षिकावान् ॥ ८ ॥

## 'ज्योत्स्ना'आदिभ्यः अण् । ९ ।

एभ्यः मत्वर्थे अण् प्रत्ययो भवति ।

ज्यौत्स्नः पक्षः । तामिस्रं नभः । ज्योत्स्नावान् । तमिस्रावान् । 'ज्योत्स्ना' आदयः प्रयोगगम्याः ॥ ९ ॥

## सिकता-शर्करात् । १० ।

आभ्यां मत्वर्थे अण् प्रत्ययो भवति ।

सैकतः, सिकतावान् । शार्करः, शर्करावान् ॥ १० ॥

## इलः च देशे । ११ ।

सिकता-शर्कराभ्यां देशे मत्वर्थे इल अण् च प्रत्ययो भवति ।

सिकतिलः, सैकतः, सिकतावान् । शर्करिलः, शार्करः, शर्करावान् देशः ॥ ११ ॥

## 'नौ'-'शिखा'आदिभ्याम् इक-इनौ । १२ ।

'नौ'आदिभ्यः 'शिखा'आदिभ्यश्च मत्वर्थे यथासंख्यम् 'इक'-'इन्' प्रत्ययौ भवतः ।

नाविकः, नौमान् । [ कुमारिकः कुमारीमान् ] । नौ कुमार यवखेदा इति 'नौ'आदि ।

शिखी, शिखावान् । शिखा माला इत्यादि ॥ १२ ॥

## 'व्रीहि' आदेः । १३ ।

'व्रीहि'आदिभ्यः मत्वर्थे 'इक'-'इन्' प्रत्ययौ भवतः ।

---

१. काशिकायाम् 'यवखद'–५।२।११६।—इति दृश्यते ।

व्रीहिकः, व्रीही, व्रीहिमान् । मायिकः, मायी, मायावान् । 'व्रीहि' आदयः प्रयोग-गम्याः ॥ १३ ॥

## अतः अनेकस्वरात् । १४ ।

अकारान्तात् अनेकस्वरात् मत्वर्थे 'इक'-'इन्' प्रत्ययौ भवतः ।

दण्डिकः, दण्डी, दण्डवान् । अनेकस्वरात् इति किम् ? स्ववान् । "कारकवान् सिंहवान् दण्डवती शाला इति क्रिया-जातिशब्दाभ्यां सप्तम्यर्थे इक-इनौ न भवतः" [ ] इति एके । तथा रूप-रस-गन्ध-स्पर्शेभ्यः गुणवाचिभ्यः अथ कचिद् दृश्यते । कार्यिकः, कार्यी । तन्दुलिकः, तन्दुली । खलिनी भूमिः । रूपिणी । रसिकः नटः इति, तद् अत्र अभिधानतः व्यवस्था । 'इति' शब्दश्च सर्वत्र अनुवर्तते ॥ १४ ॥

## अशिरसः अशीर्षश्च । १५ ।

'अशिरस्' शब्दात् मत्वर्थे 'इक'-'इन्' प्रत्ययौ भवतः तद्योगे च 'अशीर्ष' आदेशः ।

अशीर्षिकः, अशीर्षी, अशीर्षवान् ॥ १५ ॥

## अर्थ-अर्थान्तात् भावात् । १६ ।

अर्थात् 'अर्थ'अन्तात् च शब्दात् भाववाचिन एव मत्वर्थे इक-इनौ एव भवतः ।

अर्थनम् अर्थः सः अस्य अस्ति इति अर्थिकः, अर्थी । प्रतीपम् अर्थनम् प्रत्यर्थः सः अस्य अस्ति इति प्रत्यर्थिकः, प्रत्यर्थी । 'इक-इनौ एव' इति नियमात् मतुर्न भवति । भावात् इति किम् ? अर्थः—'हिरण्य' आदिः—अस्य अस्ति इति अर्थवान् ॥ १६ ॥

## 'व्रीहि'अर्थ-'तुन्द'आदेः इलश्च । १७ ।

'व्रीहि'अर्थेभ्यः 'तुन्द'आदिभ्यश्च मत्वर्थे 'इल' प्रत्ययो भवति इक-इनौ च ।

शालिलः, शालिकः, शाली, शालिमान् । तुन्दिलः, तुन्दिकः, तुन्दी, तुन्दवान् । तुन्द उदर पिचण्ड यव इति 'तुन्द'आदि ॥ १७ ॥

## स्वाङ्गात् विवृद्धात् ते । १८ ।

स्वाङ्गवाचिनः विवृद्धोपाधिकात् मत्वर्थे इल-इक-इन् प्रत्यया भवन्ति ।

विवृद्धौ महान्तौ कर्णौ अस्य स्तः कर्णिलः, कर्णिकः, कर्णी, कर्णवान् । अन्यत्र इलो न भवति ॥ १८ ॥

---

१. "तथा रसरूपस्पर्शगन्धशब्दस्नेहेभ्यश्च गुणवाचिभ्यो दृश्यते च कचित्"–२।२।१५२। शा० अ० । २. "अर्थी भावाभाम् अर्थनम् अर्थः"–२।२।१५५। शा० अ० । ३. "स्वाङ्गात् विवृद्धात्" २।२।१५७। शा० ।

## प्रज्ञा-पर्ण-उदक-फेनात् ल-इलौ । १९ ।

एभ्यः मत्वर्थे 'ल'-'इल'प्रत्ययौ भवतः ।

प्रज्ञालः, प्रज्ञिलः । पर्णलः, पर्णिलः । उदकलः, उदकिलः । फेनलः, फेनिलः । मतौ प्रज्ञावान् इत्यादि ॥ १९ ॥

## काला-जटा-घाटात् क्षेपे । २० ।

एभ्यः शब्देभ्यः मत्वर्थे 'ल' 'इल'प्रत्ययौ भवतः क्षेपे प्रत्ययार्थस्य गम्यमाने ।

कालालः, कालिलः । जटालः, जटिलः । घाटालः, घाटिलः । क्षेपे इति किम् ? कालावान् । क्षेपः मतुना न गम्यते इति तत्र मतुर्न भवति ॥ २० ॥

## वाचः आल-आटौ । २१ ।

'वाच्' शब्दात् मत्वर्थे 'आल आट' प्रत्ययौ भवतः क्षेपे गम्यमाने ।

वाचालः, वाचाटः । यः बहुनिस्सारं भाषते सः एवं क्षिप्यते । क्षेपे इति किम् ? वाग्मी, वाग्वान् ॥ २१ ॥

## मिन् । २२ ।

वाचः मत्वर्थे मिन् प्रत्ययो भवति ।

वाग्मी, वाग्वान्–प्रशस्तवाक् ॥ २२ ॥

## 'मधु'-'कृषि' आदिभ्यः र-वलौ । २३ ।

'मधु'आदेः 'कृषि'आदेश्च मत्वर्थे यथासंख्यं 'र'-'वल' इत्येतौ प्रत्ययौ भवतः ।

मधुरः रसः । मधुरं मधु । 'मधु' शब्दात् अभिधानतः गुणसामान्ये गुणे वर्तमानात् रः भवति न तु द्रव्यवृत्तेः । मतौ मधुमान् । खरः रासभः । खवान् अन्यः । मुखरः वाचालः । मुखवान् अन्यः । नगरं पुरम् । नगवत् अन्यत् । ऊषरं क्षेत्रम् । ऊषवान् अन्यः । मुष्करः पशुः । मुष्कवान् अन्यः इत्यादि ।

कृषीवलः । आसुतीवलः । कृषिमान् । कृषि आसुति इत्यादि ॥ २३ ॥

## वृन्दात् आरकः । २४ ।

'वृन्द' शब्दात् मत्वर्थे 'आरक' प्रत्ययो भवति ।

वृन्दारकः वृन्दवान् ॥ २४ ॥

## शृङ्गात् । २५ ।

'शृङ्ग' शब्दात् मत्वर्थे 'आरक' प्रत्ययो भवति ।

---

१ "काडाजटाघाटात् क्षेपे"– ३।३।१२२।इति शाकटायनीयम् सूत्रम् । २ "ग्मिन्" —३।३।१२४ शा०। "गकारः अनुनासिकनिवृत्त्यर्थः"—इति शा० चि०। हैमेऽपि एवमेव— ७।२।२५।

शृङ्गारकः, शृङ्गवान् । योगविभागः उत्तरार्थः ॥ २५ ॥

**फल-बर्हात् च इनः । २६ ।**

'फल-बर्ह'शब्दाभ्याम् 'शृङ्ग'शब्दात् च 'इन' प्रत्ययो भवति मत्वर्थे ।

फलिनः । बर्हिणः । शृङ्गिणः । फलवान् । शिखादित्वात्—फली । बर्ही ॥ २६ ॥

**मलात् ईमसश्च । २७ ।**

'मल'शब्दात् मत्वर्थे ईमसः चकारात् इनश्च प्रत्ययो भवति ।

मलीमसः । मलिनः । मलवान् ॥ २७ ॥

**द्यु-द्रुभ्यां मः । २८ ।**

आभ्यां मत्वर्थे 'म' प्रत्ययो भवति ।

द्युमः । द्रुमः । रूढिशब्दौ इमौ तद्विषये मतुर्न भवति, अन्यत्र मतुरेव—द्युमान् । द्रुमान् ॥ २८ ॥

**कृपा-हृदयाभ्याम् आलुः । २९ ।**

आभ्यां मत्वर्थे 'आलु' प्रत्ययो भवति ।

कृपालुः, कृपावान् । हृदयालुः, हृदयिकः, हृदयी, हृदयवान् ॥ २९ ॥

**दन्तात् उन्नतात् उरः । ३० ।**

'दन्त'शब्दात् 'उन्नत'उपाधिकात् मत्वर्थे 'उर' प्रत्ययो भवति ।

दन्तुरः । 'उन्नतात्' इति किम् ? दन्तवान् ॥ ३० ॥

**कच्छ्वा डुरः । ३१ ।**

'कच्छू' शब्दात् मत्वर्थे 'उर' प्रत्ययो भवति ।

कच्छुरः, कच्छूमान् ॥ ३१ ॥

**काण्ड-आण्ड-भाण्डात् ईरः । ३२ ।**

एभ्यः मत्वर्थे 'ईर' प्रत्ययो भवति ।

काण्डीरः, काण्डवान् । आण्डीरः, आण्डवान् । भाण्डीरः, भाण्डवान् ॥ ३२ ॥

**मेधा-रथाभ्याम् इरः वा । ३३ ।**

आभ्यां मत्वर्थे इरः वा भवति ।

मेधिरः, मेधावी, मेधावान् । रथिरः, रथिकः, रथी, रथवान् ॥ ३३ ॥

---

१. काण्ड–अण्डात् ईरच् ।५।२।१११। चान्द्र० ।५।२।१११। काशिका । अण्डीरः । का० ।

**केशात् वा वः । ३४ ।**

केशात् मत्वर्थे 'व' प्रत्ययो वा भवति ।

केशवः, केशी, केशवान् ॥ ३४ ॥

**'मणि'आदेः । ३५ ।**

एभ्यः मत्वर्थे 'व' प्रत्ययो भवति ।

मणिवः, मणिमान् । 'सिध्म'आदिपाठात् मणिलः । 'मणि'आदयः प्रयोग-गम्याः ॥ ३५ ॥

**मरुत्-पर्वणः तः । ३६ ।**

'मरुत्'-'पर्व'शब्दाभ्यां मत्वर्थे 'त' प्रत्ययो भवति ।

मरुत्तः, मरुत्वान् । पर्वतः, पर्ववान् ॥ ३६ ॥

**कं-शंभ्याम् ति-युस्-तु-यस्-त-व-भाः । ३७ ।**

'कं'-'शं'शब्दाभ्यां मत्वर्थे एते प्रत्यया भवन्ति ।

कन्तिः । शन्तिः । कंयुः । शंयुः । कंतु । शन्तुः । कंयः । शंयः । कंतः । शन्तः । कंवः । शंवः । कंभः । शंभः । युस्—यसोः सकारः इत् पदत्वार्थः ॥ ३७ ॥

**वलि-तुण्डि-वटेः भः । ३८ ।**

एभ्यः मत्वर्थे 'भ'प्रत्ययो भवति ।

वलिभः । अङ्गादित्वात् नः—वलिनः । तुण्डिभः । तुण्डिलः । वटिभः । प्रवृद्धा नाभिः तुण्डिः ॥ ३८ ॥

**ऊर्णा-अहम्-शुभमः युस् । ३९ ।**

एभ्यः मत्वर्थे 'युस्' प्रत्ययो भवति ।

ऊर्णायुः । अहंयुः । शुभंयुः । सकारः इत् पदार्थम् ॥ ३९ ॥

**स्वाङ्गात् हीनात् अः । ४० ।**

'हीन'उपाधिकात् स्वाङ्गवाचिनः मत्वर्थे 'अ' प्रत्ययो भवति ।

छिन्नः कर्णः अस्य अस्ति कर्णः । नासिकः । हीनात् इति किम् ? कर्णवान् । नासिकावान् अन्यः ॥ ४० ॥

**'अभ्र'आदिभ्यः । ४१ ।**

---

१. "प्रवृद्धनाभिः तुण्डिः"–३।३।१४७। शा० चिन्ता० । 'तुन्दिः' इति वृद्धा नाभिः' उच्यते –५।२।१३९। काशिका ।

एभ्यः मत्वर्थे 'अ' प्रत्ययो भवति ।

अभ्रं नभः । अभ्र अर्शस् उरस् इत्यादि ॥ ४१ ॥

**तपस्-स्रग्-माया-मेधा-असः विन् । ४२ ।**

'तपः'शब्दात् 'स्रक्'शब्दात् 'माया-मेधा'शब्दाभ्याम् 'अस्'अन्तात् च मत्वर्थे विन् प्रत्ययो भवति ।

तपस्वी । स्रग्वी । मायावी । मेधावी । यशस्वी । मतौ तपस्वान् इत्यादि । मायी, मायिकः इति 'व्रीहि'आदिपाठात् ॥ ४२ ॥

**आमयात् दीर्घश्च । ४३ ।**

'आमय' शब्दात् मत्वर्थे विन् प्रत्ययो भवति तद्योगे च प्राक् दीर्घः ।

आमयावी, आमयवान् ॥ ४३ ॥

**स्वात् मिन् ईशे । ४४ ।**

'स्व'शब्दात् मत्वर्थे ईशे मिन् प्रत्ययो भवति तद्योगे च प्राक् दीर्घः ।

स्वामी ईशः । स्ववान् अन्यः ॥ ४४ ॥

**गोः । ४५ ।**

'गो'शब्दात् मत्वर्थे ईशे मिन् प्रत्ययो भवति ।

गोमी । गोमान् ॥ ४५ ॥

**ऊर्जः विन्-वलौ अस्कः । ४६ ।**

'ऊर्ज्'शब्दात् मत्वर्थे विन्-वलप्रत्ययौ भवतः तद्योगे च अस्क'[1] आगमः ।

ऊर्जस्वी, ऊर्जस्वलः, ऊर्ग्वान् ॥ ४६ ॥

**तमिस्रा-अर्णव-ज्योत्स्ना । ४७ ।**

एते मत्वर्थे निपात्यन्ते ।

तमः अस्य अस्ति इति तमिस्रा । तमिस्राणि गुहामुखानि । अर्णः अस्य अस्ति इति–अर्णवः–समुद्रः । ज्योतिः विद्यते यस्याः सा ज्योत्स्ना चन्द्रप्रभा ॥ ४७ ॥

**गुणादिभ्यः यः । ४८ ।**

एभ्यः मत्वर्थे यः प्रत्ययो भवति ।

---

१. "असक् च आगमः" ३।३।१५१। हा० अ० ।

गुण्यः ना । हिम्यः गिरिः । गुणवान् । 'गुण'आदयः प्रयोगगम्याः ॥ ४८ ॥

### रूपात् प्रशस्त-आहतात् । ४९ ।

'रूप'शब्दात् 'प्रशस्त'उपाधिकात 'आहत'उपाधिकाच्च परः मत्वर्थे यः प्रत्ययो भवति ।

प्रशस्तं रूपम् अस्य अस्ति रूप्यः गौः । आहतं रूपम् अस्य अस्ति रूप्यः कार्षापणः । प्रशस्त-आहतात् इति किम् ? प्रशंसायाम्—रूपवती कन्या ॥ ४९ ॥

### पूर्णमासः अण् । ५० ।

'पूर्णमास्'शब्दात् मत्वर्थे अण् प्रत्ययो भवति ।

पूर्णः मा.—मासः—अस्याः अस्ति इति पौर्णमासी ॥ ५० ॥

### 'गो'आदेः अतः इकण् । ५१ ।

'गो'पूर्वपदात् अकारान्तात् मत्वर्थे 'इकण्' प्रत्ययो भवति ।

गौशतिकः । अतः इति किम् ? गोविंशतिमान् ॥ ५१ ॥

### 'निष्क'आदेः शत-सहस्रात् । ५२ ।

'निष्क'पूर्वाभ्यां 'शत'-'सहस्र'शब्दाभ्यां मत्वर्थे इकण् प्रत्ययो भवति ।

नैष्कशतिकः । नैष्कसहस्रिकः । 'निष्क' आदेः इति किम् ? शती। सहस्री। 'आदि'-ग्रहणात् सुवर्णनिष्कशतम् अस्य अस्ति इत्यादौ च न भवति ॥ ५२ ॥

### 'एक'आदेः कर्मधारयात् । ५३ ।

'एक'शब्दपूर्वात् कर्मधारयात् अकारान्तात् मत्वर्थे इकण् प्रत्ययो भवति ।

एका गौः एकगवः सः अस्य अस्ति इति ऐकगविकः । कर्मधारयात् इति किम् ? एकस्याः गौः एकगवः स अस्य अस्ति इत्यत्र न भवति । अतः इति किम् ? एकविंशतिः अस्य अस्ति इति ॥ ५३ ॥

### 'सर्व'आदेः इन् । ५४ ।

'सर्व'शब्दपूर्वात् कर्मधारयात् अकारान्तात् मत्वर्थे इन् प्रत्ययो भवति ।

सर्वधनी । सर्वबीजी ॥ ५४ ॥

---

१. "निघातिकाताडनाद् दीनारादिषु यद् रूपमुत्पद्यते तद् आहतं रूपम्"—३।३।१५९।—शा० अ० ।

**द्वन्द्व-रुग्-निन्द्यात् प्राणिस्थात् अस्वाङ्गात् । ५७ ।**

प्राणिस्थः अस्वाङ्गार्थः यः द्वन्द्वः अदन्तः, यश्च रुग्वाची, निन्द्यार्थश्च तस्मात् मत्वर्थे इन् प्रत्ययो भवति । कटकवलयी । रुग्—कुष्ठी । किलासी । निन्द्य—ककुदावर्ती । प्राणिस्थात् इति किम् ? पुष्पफलवान् वृक्षः । अस्वाङ्गात् इति किम् ? स्तनकेशवती । यथा 'अतः अनेकस्वरात्' [ प्रस्तुते पादे १४ सूत्र ] इत्येव सिद्धे नियमार्थम् तेन प्रत्युदाहरणं व्यवच्छेद्यम् ॥ ५५ ॥

**धर्म-शील-वर्णअन्तात् । ५६ ।**

'धर्म-शील-वर्ण' इति एतदन्तात् मत्वर्थे 'इन्' एव प्रत्ययो भवति ।
मुनिधर्मी । यतिशीली । ब्रह्मवर्णी ॥ ५६ ॥

**'बाहु'-'ऊरु'आदेः बलात् । ५७ ।**

'बाहु'पूर्वात् 'ऊरु'पूर्वात् 'बल'शब्दात् मत्वर्थे 'इन्' एव भवति ।
बाहुबली । ऊरुबली ॥ ५७ ॥

**'सुख'आदेः । ५८ ।**

एभ्यः मत्वर्थे 'इन्' एव भवति ।
सुखी । दुःखी । सुख दुःख इत्यादि ॥ ५८ ॥

**मालायाः क्षेपे । ५९ ।**

'माला'शब्दात् 'इन्' एव भवति क्षेपे गम्यमाने ।
माली । क्षेपे इति किम् ? मालावान् ॥ ५९ ॥

**वात-अतीसार-पिशाचात् कक् च । ६० ।**

'वात'आदिभ्यः मत्वर्थे इन् भवति कक् चैषाम् आगमः ।
वातकी । अतीसारकी । पिशाचकी ॥ ६० ॥

**पूरणात् वयसि । ६१ ।**

'पूरण'प्रत्ययान्तात् वयसि गम्यमाने मत्वर्थे इन् प्रत्यय एव भवति ।
पञ्चमः मासः संवत्सरः वा अस्य अस्ति इति पञ्चमी बालः ॥ ६१ ॥

**'मन्'-'म'अन्तात् अब्जादेः नाम्नि । ६२ ।**

'मन्'-'म' इत्येवम्—अन्तात् 'अब्ज'आदेश्च 'इन्' एव प्रत्ययो भवति समुदायश्चेत् नाम स्यात् ।

दामिनी । प्रथमिनी । अब्जिनी । कमलिनी । अब्ज कमल इत्यादि ॥ ६२ ॥

## हस्त-दन्त-करात् जातौ । ६३ ।

'हस्त'आदिभ्यः मत्वर्थे 'इन्' एव भवति समुदायेन चेत् जातिः वाच्या स्यात् ।

हस्ती । दन्ती । करी । जातौ इति किम् ? हस्तवान् ॥ ६३ ॥

## 'पुष्कर'आदेः देशे । ६४ ।

'पुष्कर'आदिभ्यः मत्वर्थे देशे 'इन्' एव प्रत्ययो भवति ।

पुष्करिणी । पद्मिनी । देशे इति किम् ? पुष्करवान् हस्ती । पुष्कर पद्म इत्यादि ॥६४॥

## वर्णात् ब्रह्मचारिणि । ६५ ।

'वर्ण'शब्दात् मत्वर्थे 'इन्' एव प्रत्ययो भवति स चेत् मत्वर्थः ब्रह्मचारी स्यात् ।

वर्णी–वर्णः–ब्रह्मचर्यम्–सः अस्य अस्ति इति–ब्रह्मचारी इत्यर्थः । वर्णवान् अन्यः ॥ ६५ ॥

## ईयः सूक्त-साम्नि । ६६ ।

सूक्ते साम्नि च मत्वर्थे 'ईय' प्रत्ययो भवति ।

अनुवाकीयं सूक्तम् । यज्ञायज्ञीयं साम । 'सूक्त'आदयः ग्रन्थविशेषाः ॥ ६६ ॥

## श्लुक् वा अध्याय-अनुवाके । ६७ ।

अध्याये अनुवाके च मत्वर्थे यः 'ईय' प्रत्ययः तस्य श्लुक् वा भवति, अत एव 'श्लुक्' वचनात् अध्याय-अनुवाकयोः ईयः अनुमीयते ।

गर्दभाण्डः अस्मिन् अस्ति अध्याये अनुवाके वा गर्दभाण्डः गर्दभाण्डीयः अध्यायः अनुवाको वा । द्रुमपुष्पः[1] द्रुमपुष्पीयो वा अध्यायः ॥ ६७ ॥

## 'विमुक्त'आदेः अण् । ६८ ।

एभ्यः मत्वर्थे अध्याये अनुवाके च अण् प्रत्ययो भवति ।

वैमुक्तः[2] अध्यायः अनुवाको वा । विमुक्त देवासुर इत्यादि ॥ ६८ ॥

## प्रकारे अस्य जातीयर् । ६९ ।

'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे जातीयर् प्रत्ययो भवति, यत् तत् प्रथमान्तम् तत् चेत् प्रकारः स्यात् ।

---

१. दशवैकालिकनामके जैनमूलसूत्रे एतन्नामकः प्रथमः अध्यायः ।

२. आचाराङ्गनामके प्रथमअङ्गरूपे जैनसूत्रे द्वितीयश्रुतस्कन्धे चतुर्थचूलारूपं पर्यन्तवर्तितमम् एतन्नामकम् अध्ययनम् ।

पटुः प्रकारः अस्य पटुजातीयः, । कथंजातीयः । यथाजातीयः । था—थमौ प्रकार-मात्रे, 'यथाजातीयः' इत्यत्र जातीयर् प्रकारवति इति । रेफः विशेषणार्थः ॥ ६९ ॥

**कः 'अणु'आदेः । ७० ।**

'अणु'आदिभ्यः तद् अस्य प्रकारे 'क' प्रत्ययो भवति ।

अणुः प्रकारः अस्य अणुकः । अणु स्थूल इत्यादि ॥ ७० ॥

**कृष्ण-यव-जीर्ण-सुरा-अवदात-गोमूत्रात् तिल-व्रीहि-शालि-अहि-सुरा-आच्छादने । ७१ ।**

'कृष्ण'आदिभ्यः यथासंख्यं 'तिल'आदिषु अर्थेषु तद् अस्य प्रकारे इत्यर्थे 'क' प्रत्ययो भवति ।

कृष्णः प्रकारः एषां कृष्णकाः तिलाः, अन्यः कृष्णजातीयः । एवम् उत्तरत्र अपि । यवप्रकाराः यवकाः व्रीहयः । जीर्णप्रकाराः जीर्णकाः शालयः । सुराप्रकारः सुरावर्णः सुरकः अहिः—सर्पः । अवदातप्रकारः अवदातिका सुरा । गोमूत्रप्रकारम् गोमूत्रकम् आच्छादनम् ॥ ७१ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्धिते सप्तमः पादः ॥

---

१. 'था-थमौ प्रकारमात्रे । जातीयर् प्रकारवति इति तदन्तादपि भवति । रेफ इत्० 'अरित्स्वार्थे' [ २।२।४८ । शा० चिन्ता० ] । इति पर्युदासार्थः"–३।३।१७९ शा० अ० ।

# तद्धिते अष्टमः पादः

**यः । १ ।**

अधिकारः अयम्—अपवादविषयं परिहृत्य 'यः' इति अधिकृतं वेदितव्यम् ॥ १ ॥

**तत्र साधौ । २ ।**

'तत्र' इति सप्तम्यन्तात् साधौ अर्थे 'य' प्रत्ययो भवति ।

सामनि साधुः सामन्यः । कर्मण्यः । शरण्यः । सभ्यः । साधुः योग्यः प्रवीणः उपकारको वा ॥ २ ॥

**भक्तात् णः । ३ ।**

'भक्त'शब्दात् तत्र साधौ अर्थे 'ण' प्रत्ययो भवति ।

भाक्तः शालिः ॥ ३ ॥

**परिषदः ण्यश्च । ४ ।**

'परिषत्'शब्दात् तत्र साधौ ण्यः भवति णश्च ।

परिषदि साधुः पारिषद्यः, पारिषदः ॥ ४ ॥

**सर्वजनात् ईनश्च । ५ ।**

सर्वजनात् तत्र साधौ ईनः ण्यश्च भवतः ।

सार्वजन्यः, सार्वजनीनः ॥ ५ ॥

**'प्रतिजन'आदेः । ६ ।**

एभ्यः तत्र साधौ अर्थे 'ईन' प्रत्ययो भवति ।

प्रतिजनीनः । अनुजनीनः । प्रतिजन अनुजन इत्यादि ॥ ६ ॥

**पथि-अतिथि-वसति-स्वपतेः एयण् । ७ ।**

एभ्यः तत्र साधौ अर्थे एयण् प्रत्ययो भवति ।

पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ॥ ७ ॥

---

१. "साधुः इह प्रवीणः योग्यो वा गृह्यते नोपकारकः, तत्र हि परत्वात् 'तस्मै हितम्' इत्यनेन भवितव्यम्"–काशिका ४।४।९८ ।

## कथादेः इकण् । ८ ।

'कथा'आदिभ्यः तत्र साधौ अर्थे इकण् प्रत्ययो भवति ।

कथायां साधुः काथिकः । वैकथिकः । कथा विकथा इत्यादि ॥ ८ ॥

## वहति रथ-प्रासङ्गात् । ९ ।

'रथ-प्रासङ्ग'शब्दाभ्यां निर्देशात् एव द्वितीयान्ताभ्यां 'वहति' अर्थे 'य' प्रत्ययो भवति ।

रथं वहति रथ्यः । प्रासङ्गः—वक्रं वत्सदमनस्कन्धकाष्ठम्—तत् वहति प्रासङ्ग्यः ॥९॥

## धुरः य-एयणौ । १० ।

'धूः'शब्दात् द्वितीयान्तात् 'वहति' अर्थे 'य-एयण्' प्रत्ययौ भवतः ।

धुर्यः । धौरेयः ॥ १० ॥

## 'वाम'आद्यआदेः ईनः । ११ ।

'वाम'आदिपूर्वात् 'धुर्'अन्तात् 'वहति' अर्थे 'ईन' प्रत्ययो भवति ।

वामधुरं वहति वामधुरीणः । सर्वधुरीणः । उत्तरधुरीणः । दक्षिणधुरीणः ॥ ११ ॥

## अश्च 'एक'आदेः । १२ ।

'एक'शब्दपूर्वात् 'धुर्'अन्तात् 'वहति' अर्थे 'अ' प्रत्ययो भवति ईनश्च ।

एकधुरः । एकधुरीणः ॥ १२ ॥

## शाकटात् अण् । १३ ।

'शकट'शब्दात् 'तत् वहति' अर्थे अण् प्रत्ययो भवति ।

शकटं वहति शाकटः गौः ॥ १३ ॥

## हल-सीरात् इकण् । १४ ।

आभ्याम् 'तत् वहति' अर्थे इकण् प्रत्ययो भवति ।

हालिकः । सैरिकः ॥ १४ ॥

## विध्यति अनन्येन । १५ ।

'तत्' इति द्वितीयान्तात् 'विध्यति' अर्थे 'य' प्रत्ययो भवति । न चेत् विध्यन्

---

१. "तद् वहति रथ-युग-प्रासङ्गम्"—काशिका ४।४।७६। "वहति रथ-युग-प्रासङ्गात्" हैम-७।१।२। "वहति रथ-प्रासङ्गात्"—शाक० ३।२।१८२। श्रीमलयगिरिः शाकटायनमनुसरति ।

आत्मनः अन्येन करणेन विध्यति ।

यथाः शर्कराः । अनन्येन इति किम् ? चोरं विध्यति देवदत्तः धनुषा ॥ १५ ॥

### धन-गणात् लब्धरि । १६ ।

'धन'-'गण'शब्दाभ्याम् 'तत्' इति द्वितीयान्तात् लब्धरि अर्थे 'य' प्रत्ययो भवति ।

धनं लब्धा धन्यः । गण्यः । ॥ १६ ॥

### णः अन्नात् । १७ ।

'अन्न'शब्दात् द्वितीयान्तात् लब्धरि अर्थे 'ण' प्रत्ययो भवति ।

अन्नं लब्धा आन्नः ॥ १७ ॥

### मत-मदस्य करणे । १८ ।

आभ्यां निर्देशात् एव षष्ठ्यन्ताभ्यां करणे वाच्ये 'य' प्रत्ययो भवति ।

मतस्य करणं मत्यम् । मद्यम् ॥ १८ ॥

### न्याय-अर्थात् अनपेते । १९ ।

'न्याय'-'अर्थ'शब्दाभ्यां निर्देशात् एव पञ्चम्यन्ताभ्याम् अनपेते अर्थे 'य' प्रत्ययो भवति ।

न्यायात् अनपेतम् न्याय्यम् । अर्थ्यम् ॥ १९ ॥

### नौ-विषेण तार्य-वध्ये । २० ।

'नौ'-'विष'शब्दाभ्यां निर्देशात् एव तृतीयान्ताभ्यां यथासंख्यं तार्ये वध्ये च अर्थे 'य'प्रत्ययो भवति ।

नावा तार्यम नाव्यम् । विषेण वध्यः विष्यः ॥ २० ॥

### पदम् अस्मिन् दृश्यम् । २१ ।

'पदम्'इति प्रथमान्तात् दृश्यत्वोपाधिकात् 'अस्मिन्' इति सप्तम्यर्थे 'य' प्रत्ययो भवति ।

पदम् अस्मिन् दृश्यम् पद्य कर्दमः ॥ २१ ॥

### वेश्य-पथ्य-वयस्य-धेनुष्या-गार्हपत्य-जन्य-धर्म्य-हृद्य-मूल्याः । २२ ।

---

१. "नौ-वयस्-धर्म-विष-मूल-मूल-सीता-तुलाभ्य० इत्यादि"-काशिका-४।४।९१। तथा "हृद्य-पद्य-तुल्य-मूल्य-" हैम-७।१।११। इति एतौ वैयाकरणौ आभ्यां सूत्राभ्यां 'तुल्य'शब्दमपि व्युत्पादयन्ति । शाकटायनस्तु तथा न करोति, अयमपि आचार्यः तथैव करोति ।

एते यथास्वम् अर्थविशेषे 'य'प्रत्ययान्ता निपात्यन्ते ।

वशं गतः वश्यः—गुरोर्विधेयः इत्यर्थः, इह न भवति—वशं गतः इच्छां प्राप्तः । पथः अनपेतम् पथ्यम्—ओदनम् इत्यादि । वयसा तुल्यः वयस्यः सखा, इह न भवति—वयसा तुल्यः शत्रुः । धेनुष्या—ऋणप्रदानाय दोहार्थं या प्रदीयते सा धेनुः । गृहपतिना संयुक्तः गार्हपत्यः अग्निः । जेनीम्-वधूम् हरन्तः जन्याः जामातृवयस्या उच्यन्ते । जनस्य जल्पः जन्यः । धर्मेण प्राप्यं धर्म्यं सुखम् ततः अनपेतं वा धर्म्यम् । हृदयस्य प्रियम् हृद्यम् औषधम्, यद्वा हृदयस्य बन्धनम् हृद्यम्, वशीकरणमन्त्रः हृद्यः । मूलम् एषाम् उत्पाट्यम् मूल्या मुद्गाः, माषाः, मूलेन पटादिउत्पत्तिकरणेन पाट्यम् सुवर्णादि मूल्यम्, मूलेन समः मूल्यः पटः उपादानेन समानफल इत्यर्थः ॥ २२ ॥

## 'देवता'अन्तात् तदर्थे । २३ ।

'देवता'अन्तात् शब्दात् तदर्थे 'य'प्रत्ययो भवति अर्थात् 'चतुर्थी'अन्तात् प्रत्ययो भवति ।

अग्निदेवतायै इदम् अग्निदेवत्यम् पितृदेवत्यम् देवदेवत्यं हविः आदि ॥ २३ ॥

## पाद्य-अर्घ्ये । २४ ।

'पाद्य'—'अर्घ्य' शब्दौ तदर्थे 'य' अन्तौ निपात्येते ।

पादार्थम् पाद्यम् उदकम् । अर्घार्थम् अर्घ्यम् रत्नम् ॥ २४ ॥

## ण्यः अतिथेः । २५ ।

'अतिथि' शब्दात् तदर्थे 'ण्य'प्रत्ययो भवति ।

अतिथ्यर्थम् आतिथ्यम् ॥ २५ ॥

## सादेश्च आतदः । २६ ।

'तत्' इति सूत्रं यावत् केवलस्य सादेश्च वक्ष्यमाणः विधिः वेदितव्यः ॥ २६ ॥

## हलस्य कर्षे । २७ ।

'हल'शब्दात् केवलात् सादेश्च निर्देशात् एव षष्ठ्यन्तात् कर्षे अर्थे 'य'प्रत्ययो भवति ।

हलस्य कर्षः हल्यः । द्वयोः हलयोः कर्षः द्विहल्यः ॥ २७ ॥

## सीतया संगते । २८ ।

---

१ "जनीं वहन्ति-" हैमसूत्रवृत्तौ । गुजरातीभाषायाम्-जणी, जान, जन्य-जानैयो । हिन्दी-भाषायाम्-बारात, बाराती ।

'सीता'शब्दात् तृतीयान्तात् परः संगते अर्थे 'य' प्रत्ययो भवति ।

सीतया संगतं सीत्यम् । द्विसीत्यम् ॥ २८ ॥

## ईयः । २९ ।

इतः ऊर्ध्वम् आतदः 'ईय' प्रत्ययः अधिकृत्य वेदितव्यः ॥ २९ ॥

## हविर्-अन्नभेद-'अपूप'आदेः यः वा । ३० ।

'हविर्'भेदवाचिनः 'अन्न'भेदवाचिनः अपि 'अपूप'आदिभ्यश्च आतदः अर्थेषु 'य' प्रत्ययः अधिकृतः वेदितव्यः ।

आमिक्ष्यम्, आमिक्षीयम् । ओदन्याः, ओदनीयाः तन्दुलाः । अपूप्यम्, अपूपीयम् । सादि—यवापूप्यम्, यवापूपीयम् । उवर्णान्तात् हविर्-अन्नभेदवाचिनः अपि परत्वात् नित्यं 'य' प्रत्ययः—चरव्याः तन्दुलाः । अपूप तन्दुल अभ्यूष किण्व मुसल कटक कर्णवेष्टक स्थूल पूप सूप प्रदीप अश्व पत्र इति 'अपूप' आदि ॥ ३० ॥

## उवर्ण-'युग'आदेः यः । ३१ ।

'उवर्ण'अन्तात् 'युग'आदेश्च आतदः अर्थेषु यः भवति ।

शङ्कव्यं दारु । युग्यम् । हविष्यम् । युग हविस् मेधा शुच रूप बीज कूप अक्षर स्थल विष इति 'युग' आदि ॥ ३१ ॥

## शुन्य-शून्य-ऊधन्य-नभ्याः । ३२ ।

एते आतदः अर्थेषु 'य' प्रत्ययान्ता निपात्यन्ते ।

'श्वन्' शब्दात् 'य' प्रत्ययः शुन् शून् च आदेशः । श्वभ्यः हितम् शुन्यम्, शून्यम् । ऊधसे हितम् ऊधन्यम् । नाभये हितम् नभ्यम् अञ्जनम् । प्राण्यङ्गात् तु न भवति—नाभ्यं तैलम् ॥ ३२ ॥

## कम्बलात् नाम्नि । ३३ ।

'कम्बल'शब्दात् आतदः अर्थेषु नाम्नि 'य' प्रत्ययो वेदितव्यः ।

कम्बलः अस्य स्यात् कम्बल्यम् ऊर्णापलशतम् । नाम्नि इति किम्? कम्बलीया ऊर्णा ॥ ३३ ॥

## तस्मै हिते । ३४ ।

'तस्मै' इति चतुर्थ्यन्तात् [ 'हिते' अर्थे यथाविहितं प्रत्ययो भवति । उपकारकं हितम् ।

वत्सेभ्यः हितः वत्सीयः । पित्रीयः । आमिक्ष्यः, आमिक्षीयः । युग्यः । शुन्यः । शून्यः ॥ ३४ ॥

## न राज-आचार्य-ब्राह्मण-वृष्णः । ३५ ।

एभ्यः चतुर्थ्यन्तेभ्यः हिते अधिकृतः प्रत्ययो न भवति ।

राज्ञे आचार्याय ब्राह्मणाय वृष्णे वा हितः इति वाक्यमेव ॥ ३५ ॥

## रथ-खल-तिल-यव-माष-वृष-ब्रह्म-प्राण्यङ्गात् यः । ३६ ।

'रथ'आदिभ्यः प्राण्यङ्गवाचिभ्यश्च तस्मै हिते 'य' प्रत्ययो भवति ।

रथाय हिता रथ्या भूमिः । खल्यम् अग्निरक्षणम् । तिल्यः वायुः । यव्यः तुषारः । माष्यः वातः । वृष्यम् क्षीरपाणम् । ब्रह्मण्यः देशः । दन्तेभ्यः हितम् दन्त्यम् । कर्ण्यम् । चक्षुष्यम् । नाभ्यम् । सादेः—अश्वरथ्या भूमिः ॥ ३६ ॥

## ष्य्यः अज-अवेः । ३७ ।

'अज'-'अवि'भ्याम् तस्मै हिते 'ष्य्य'प्रत्ययो भवति ।

अजेभ्यः हितम् अजथ्यम् । अविथ्यम् । षकारः पुंभावार्थः—अजाभ्यः हिता अजथ्या यूथिका ॥ ३७ ॥

## माणव-चरकात् ईनञ् । ३८ ।

'माणव'-चरकाभ्याम् तस्मै हिते ईनञ् प्रत्ययो भवति ।

माणवेभ्यः हितः माणवीनः । चारकीणः ॥ ३८ ॥

## 'भोग'उत्तरपद-आत्मनभ्यां ईनः । ३९ ।

'भोग'उत्तरपदात् 'आत्मन्'शब्दात् च तस्मै हिते 'ईन' प्रत्ययो भवति ।

मातृभोगाय हितः मातृभोगीणः । आत्मने हितः आत्मनीनः । नकारोच्चारणात् न लुक् ॥ ३९ ॥

## पञ्च-सर्व-विश्वात् जनात् कर्मधारयात् । ४० ।

'पञ्च'आदिभ्यः परः यः 'जन'शब्दः तदन्तात् कर्मधारयात् तस्मै हिते 'ईन' प्रत्ययो भवति ।

पञ्चभ्यः जनेभ्यः हितः पञ्चजनीनः । सर्वजनीनः । विश्वजनीनः । कर्मधारयात् इति किम् ? पञ्चानां जनाय हितः पञ्चजनीयः । सर्वजनीयः । विश्वजनीयः ॥ ४० ॥

**सर्व-महतः इकण् । ४१ ।**

सर्व-महद्भ्याम् 'जन'अन्ताभ्यां कर्मधारये तस्मै हिते इकण् भवति ।

सार्वजनिकः । माहाजनिकः ॥ ४१ ॥

**सर्वात् णः वा । ४२ ।**

'सर्व'शब्दात् तस्मै हिते णो वा भवति पक्षे ईयः ।

सर्वेभ्यः हितः सार्वः । सर्वीयः ॥ ४२ ॥

**परिणामिनि तदर्थे । ४३ ।**

तस्मै इति 'चतुर्थ्यन्त'अर्थे परिणामिनि अभिधेये यथाविहितं प्रत्ययः भवति । तद्भावः परिणामः ।

अङ्गारेभ्यः काष्ठानि अङ्गारीयाणि—अङ्गारार्थानि—इत्यर्थः । आमिक्ष्यम्, आमिक्षीयम् दधि । ओदन्याः, ओदनीयाः तन्दुलाः । आपूप्यम्, आपूपीयं पिष्टम् । शङ्कव्यं दारु । परिणामिनि इति किम् ? उदकाय कूपः । तदर्थे इति किम् ? मूत्राय यवागूः, उच्चाराय यवान्नं संपद्यते न तु तदर्थम् ॥ ४३ ॥

**चर्मणि अञ् । ४४ ।**

'तस्मै' इति चतुर्थ्यन्तात् तदर्थे परिणामिनि चर्मणि वाच्ये 'अञ्' प्रत्ययो भवति । वर्ध्राय इदम् वार्ध्रम् चर्म ॥ ४४ ॥

**ऋषभ-उपानहात् ञ्यः । ४५ ।**

'ऋषभ'-'उपानह्'शब्दाभ्याम् चतुर्थ्यन्ताभ्यां 'तदर्थे परिणामिनि' इत्यर्थे 'ञ्य' प्रत्ययो भवति ।

आर्षभ्यः वत्सः । औपानह्यं काष्ठम् । औपानह्यं चर्म इति चर्मणि अपि परत्वात् अयमेव ॥ ४५ ॥

**छदिष्-बलेः एयण् । ४६ ।**

आभ्यां चतुर्थ्यन्ताभ्याम् तदर्थे परिणामिनि एयण् प्रत्ययो भवति ।

छदिषे इमानि छादिषेयाणि तृणानि । छादिषेयं चर्म । बालेयाः तन्दुलाः ॥ ४६ ॥

**परिखा अस्य स्यात् । ४७ ।**

'परिखा'शब्दात् निर्देशात् एव प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे परिणामिनि

एयण् प्रत्ययो भवति सा चेत् 'परिखा स्यात्' इति संभाव्या भवति ।

परिखा आसाम् इष्टकानाम् पारिखेय्यः इष्टकाः । 'स्यात्' इति किम् ? परिखा इष्टकानाम् । परिणामिनि इति किम् ? परिखा अस्य नगरस्य स्यात् ॥ ४७ ॥

### अत्र च । ४८ ।

'परिणामिनि' इति निवृत्तम् योगविभागात् । 'परिखा' शब्दात् प्रथमान्तात् 'अत्र' इति सप्तम्यर्थे एयण् प्रत्ययो भवति ।

परिखा अस्यां स्यात् पारिखेयी भूमिः । 'च'शब्दः उत्तरत्र 'अस्य स्यात्' 'अत्र च' इति उभयानुवृत्त्यर्थः ॥ ४८ ॥

### तत् । ४९ ।

'तत्' इति प्रथमान्तात् 'स्यात्' इति सभाव्यात् 'अस्य' इति षष्ठ्यर्थे परिणामिनि 'अत्र' इति सप्तम्यर्थे च यथाधिकृतं प्रत्ययो भवति ।

परशुः अस्य स्यात् पारशव्यम् अयः । प्रासादः अस्यां स्यात् प्रासादीया भूमिः ॥ ४९ ॥

### तस्य अर्हे क्रियायां वत् । ५० ।

'तस्य' इति षष्ठ्यन्तात् नाम्नः 'अर्हति' इति अर्हम् तस्मिन् अर्हरूपे अर्थे 'वत्' प्रत्ययो भवति ।

राज्ञः अर्हम् राजवत् वृत्तम् अस्य—राजत्वस्य युक्तम् अस्य राज्ञः वृत्तम् इत्यर्थः । एवम् कुलीनवत् । साधुवत् । क्रियायाम् इति किम् ? राज्ञः अर्हः मणिः ॥ ५० ॥

### स्यादेः इवे । ५१ ।

'इव'शब्दः सादृश्यं द्योतयति तच्च सादृश्यं क्रियाविषयम् द्रष्टव्यम् । 'स्यादि'-अन्तात् नाम्नः 'सादृश्य'विषये 'वत्' प्रत्ययो भवति ।

क्षत्रिया इव क्षत्रियवत् युध्यन्ते विप्राः । देवम् इव देववत् पश्यन्ति मुनिम् । साधुना इव साधुवत् आचरितं श्राद्धेन । ब्राह्मणाय इव ब्राह्मणवत् दत्तं चैत्रेण । पर्वतात् इव पर्वतवत् अवरोहति प्रासादात् । स्यादेः इति किम् ? गच्छन् आस्ते इव मन्दत्वात् ईप्सितदेशस्य अप्राप्तेः । क्रियायाः विषयम् इति किम् ? पुत्रेण सह स्थूलः । पुत्रेण तुल्यः पिङ्गलः । पुत्रेण तुल्यः गोमान् । अत्र 'गुण'आदिविषये सादृश्ये न भवति ॥ ५१ ॥

१. जैनश्रावकरूपे अर्थे अयं श्राद्धशब्दः ।

तस्य । ५२ ।

'तस्य' इति षष्ठ्यन्तात् 'इव' अर्थे वत् प्रत्ययो भवति ।

देवदत्तस्य इव देवदत्तवत् जिनदत्तस्य गावः । क्रियासादृश्ये पूर्वेण एव सिद्धे अक्रियार्थः अयम् आरम्भः । एवम् उत्तरत्रापि ॥ ५२ ॥

तत्र । ५३ ।

'तत्र' इति सप्तम्यन्तात् 'इव' अर्थे 'वत्' प्रत्ययो भवति ।

मथुरायाम् इव मथुरावत् स्रुघ्ने प्राकारः ॥ ५३ ॥

इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्धिते अष्टमः पादः समाप्तः ॥

# तद्धिते नवमः पादः

## इकण् । १ ।

इतः ऊर्ध्वम् अपवादविषयं परित्यज्य इकण् प्रत्ययः अधिकृतः वेदितव्यः ॥ १ ॥

## तेन संसृष्टम् । २ ।

'तेन'इति तृतीयान्तात् संसृष्टे अर्थे इकण् प्रत्ययो भवति । **संसृष्टम्—संमिश्रम्—एकीभूतम्** ।

दध्ना संसृष्टं दाधिकम् ॥ २ ॥

## चूर्ण-मुद्गात् इन्-अण् । ३ ।

'चूर्ण'-'मुद्ग'शब्दाभ्याम् संसृष्टे अर्थे यथासंख्यम् 'इन्' 'अण्' प्रत्ययौ भवतः ।

चूर्णिनः अपूपाः । मौद्गी यवागूः ॥ ३ ॥

## लवणात् अः । ४ ।

'लवण'शब्दात् तेन ससृष्टे अर्थे 'अ'प्रत्ययो भवति ।

लवणः सूपः ॥ ४ ॥

## चरति । ५ ।

'तेन' इति तृतीयान्तात् 'चरति'अर्थे इकण् प्रत्ययो भवति ।

हस्तिना चरति गच्छति हास्तिकः । दध्ना चरति—भक्षयति—दाधिकः ॥ ५ ॥

## 'पर्प'आदेः इकट् । ६ ।

'पर्प'आदिभ्यः 'तेन' इति तृतीयान्तेभ्यः 'चरति'अर्थे इकट् प्रत्ययो भवति ।

पर्पिकः । पर्पिकी । पर्प अश्वत्थ व्यास इति 'पर्प' आदिः ॥ ६ ॥

## पदिकः । ७ ।

'पाद'शब्दात् 'तेन चरति' अर्थे इकट् प्रत्ययो भवति 'पत्' च अस्य ।

पादाभ्यां चरति पदिकः ॥ ७ ॥

## श्वगणात् वा । ८ ।

'श्वगण'शब्दात् 'तेन चरति' अर्थे इकट् प्रत्ययो वा भवति ।

श्वागणिकः, श्वागणिकः ॥ ८ ॥

## निर्वृत्ते 'अक्षद्यूत'आदेः । ९ ।

'अक्षद्यूत'आदिभ्यः 'तेन निर्वृत्ते' अर्थे इकण् प्रत्ययो भवति ।

अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम् । अक्षद्यूत जङ्घाप्रहत पादस्वेदन कण्टकमर्दन शर्करामर्दन यातायात गतागत इति 'अक्षद्यूत' आदि ॥ ९ ॥

## भावात् इमः । १० ।

भाववाचिनः 'तेन निर्वृत्ते' अर्थे 'इम'प्रत्ययो भवति ।

पाकेन निर्वृत्तम् पाकिमम् । सेकिमम् । त्यागिमम् । रागिमम् । कुट्टिमम् । संमूर्छिमम् ॥ १० ॥

## याचित-अपमित्यात् कण् । ११ ।

आभ्याम् 'तेन निर्वृत्ते' अर्थे कण् प्रत्ययो भवति ।

याञ्चा—याचितम् तेन निर्वृत्तम् याचितकम् । अपमित्य—प्रतिदानेन—निर्वृत्तम् आपमित्यकम् ॥ ११ ॥

## टः जित-जयत्-दीव्यत्-खनत्सु । १२ ।

'तेन' इति तृतीयान्तात् 'जित'आदिषु अर्थेषु इकण् प्रत्ययो भवति ।

अक्षैः जितः जयति दीव्यति आक्षिकः । कुद्दालेन खनति कौद्दालिकः ॥ १२ ॥

## तरति । १३ ।

'तेन' इति तृतीयान्तात् 'तरति' अर्थे इकण प्रत्ययो भवति ।

गोपुच्छेन तरति गौपुच्छिकः ॥ १३ ॥

## नौ-द्विस्वरात् इकः । १४ ।

'नौ'शब्दात् द्विस्वरात् च 'तेन तरति' इत्यर्थे 'इक' प्रत्ययो भवति ।

नाविकः । बाहुकः ॥ १४ ॥

## संस्कृते । १५ ।

'तेन' इति तृतीयान्तात् संस्कृते इकण् प्रत्ययो भवति । सतः उत्कर्षाधानं संस्कारः । दध्ना संस्कृतं दाधिकम् ॥ १५ ॥

## 'क'उपान्त्य-कुलत्थात् अण् । १६ ।

'क'उपान्त्यात् 'कुलत्थ'शब्दात् च 'तेन संस्कृते' अर्थे अण् प्रत्ययो भवति ।

तिन्तिडिकेन संस्कृतम् तैन्तिडिकम् । कौलत्थम् ॥ १६ ॥

### हरति 'उत्सङ्ग'आदेः । १७ ।

'उत्सङ्ग'आदिभ्यः 'तेन' इति तृतीयान्तेभ्यः 'हरति' इत्यर्थे इकण् प्रत्ययो भवति।

औत्सङ्गिकम् । उत्सङ्ग उडुप उत्रुप उत्पुत पिटक पिटाक इति 'उत्सङ्ग' आदिः ॥ १७ ॥

### 'भस्त्रा'आदेः इकट् । १८ ।

एभ्यः 'तेन हरति' इत्यर्थे इकट् प्रत्ययो भवति ।

भस्त्रिकः । भस्त्रिकी । भस्त्रा भरट भरण शीर्षभार अंसेभार इति 'भस्त्रा' आदिः ॥ १८ ॥

### विवध-वीवधात् वा । १९ ।

आभ्याम् 'हरति' इति अर्थे इकट् प्रत्ययो वा भवति ।

विवधेन हरति विवधिकः । वीवधिकः । 'विवध-वीवध'शब्दौ पथि पर्याहारे च वर्तेते ॥ १९ ॥

### कुटिलिकाया अण् । २० ।

'कुटिलिका' शब्दात् 'हरति' अर्थे अण् प्रत्ययो भवति ।

'कुटिलिकया' अङ्गारान् हरति कौटिलिकः कर्मारः ॥ २० ॥

### 'वेतन'आदेः जीवति । २१ ।

'वेतन'आदिभ्यः 'तेन जीवति' इत्यर्थे इकण् प्रत्ययो भवति ।

वेतनेन जीवति वैतनिकः । वेतन वाह अर्धवाह धनुर्दण्ड जाल वेश उपवेश उपस्था उपस्थान सुख शय्या शक्ति उपनिषत् स्फिक् बाल उपदेश पाद इति 'वेतन' आदि ॥२१॥

### वस्न-क्रय-विक्रयेभ्यः इकः । २२ ।

एभ्यः 'तेन जीवति' इत्यर्थे 'इक' प्रत्ययो भवति ।

---

१. "विवधो वीवधो भारे पर्याहार-अध्वनोरपि"-हैमअनेकार्थसंग्रहे श्लो० ५४८ निर्णय॰ । पर्याहारो धान्यम् । २. "'कुटिलिका'शब्देन अग्रवक्रा लोहादिमयी अङ्गाराकर्षणी, यष्टिर् वा, कुटिला गतिर्वा, पक्वलोष्टक्षेपणः अग्रवक्रो दण्डो वा, परिव्राजकोपकरणविशेषो वा, चौराणां गौ-गृहाद्यारोहणार्थं दामाग्रप्रतिबद्धः आयसः अर्धाङ्कुशो वा उच्यते" सिद्धहेम-६।४।२६।

वस्नः मूल्यम् तेन जीवति वस्निकः । क्रयिकः । विक्रयिकः । क्रयविक्रयिकः ॥२२॥

### आयुधात् ईयश्च । २३ ।

'आयुध'शब्दात् 'तेन जीवति' इत्यर्थे ईयः इकश्च प्रत्ययो भवति ।

आयुधीयः । आयुधिकः ॥ २३ ॥

### व्रातीनञ् । २४ ।

'व्रात'शब्दात् 'तेन जीवति' इत्यर्थे ईनञ् प्रत्ययो निपात्यते ।

'व्रात'शब्दः प्रागुक्तार्थः तत्कर्म अपि व्रातम् तेन जीवति व्रातिनः तेषामेव अन्यतमः नान्यः । निपातनं रूढ्यर्थम् । ञित्वं च पुंभावाभावार्थम्—व्रातीनाभार्यः ॥ २४ ॥

### व्यञ्जनैः उपसिक्ते । २५ ।

व्यञ्जनवाचिनः तृतीयान्तात् उपसिक्ते अर्थे इकण् प्रत्ययो भवति ।

सूपेन उपसिक्तः सौपिकः । व्यञ्जनैः इति किम् ? उदकेन उपसिक्तः । बहुवचनं स्वरूपनिरासार्थम् ॥ २५ ॥

### ओजस्-सहस्-अम्भसा वर्तते । २६ ।

'ओजस्'प्रभृतिभ्यः 'तेन' इति तृतीयान्तेभ्यः 'वर्तते' इत्यर्थे इकण् प्रत्ययो भवति । वृत्तिः आत्मयापनम् चेष्टा वा ।

ओजसा बलेन वर्तते औजसिकः । सहसा प्रसहनेन पराभिभवेन साहसिकः । अम्भसा जलेन आम्भसिकः ॥ २६ ॥

### प्रति-अनोः लोम-ईप-कूलात् । २७ ।

'तत्' इति द्वितीयान्तात् 'प्रति'-'अनु'पूर्वात् लोम-ईप-कूलान्तात् 'वर्तते' इत्यर्थे इकण् प्रत्ययो भवति ।

प्रतिलोम वर्तते प्रातिलोमिकः । प्रातीपिकः । प्रातिकूलिकः । आनुलोमिकः । आन्वीपिकः । आनुकूलिकः । सर्वत्र क्रियाविशेषणात् प्रत्ययः ॥ २७ ॥

### परेः मुख-पार्श्वात् । २८ ।

'परि'पूर्वाभ्यां 'मुख'-'पार्श्व'शब्दाभ्यां द्वितीयान्ताभ्याम् 'वर्तते' इत्यर्थे इकण् प्रत्ययो भवति ।

परिमुखं वर्तते पारिमुखिकः । परिः वर्जने सर्वतो भावे वा । स्वामिनः मुखं वर्जयित्वा यद्वा यतः यतः स्वामिनः मुखम् ततः ततः वर्तते इत्यर्थः । एवम् पारिपार्श्विकः ॥२८॥

## 'परदार'आदीन् गच्छति । २९ ।

'परदार'आदिभ्यः द्वितीयान्तेभ्यः 'गच्छति' इत्यर्थे इकण् प्रत्ययो भवति ।

परदारान् गच्छति पारदारिकः । गौरुदारिकः । 'परदार' आदयः प्रयोगगम्याः ॥२९॥

## प्रतिपथात् इकः च । ३० ।

'प्रतिपथ'शब्दात् द्वितीयान्तात् 'गच्छति' अर्थे इकः इकण् च प्रत्ययो भवति ।

पन्थानं प्रति पथः अभिमुखं वा गच्छति प्रातिपथिकः, प्रतिपथिकः ॥ ३० ॥

## समूहार्थात् समवेते । ३१ ।

'समूह'वाचिनः 'तत्' इति द्वितीयान्तात् समवेते अर्थे इकण् प्रत्ययो भवति ।

समूहं समवेतः सामूहिकः । सामाजिकः ॥ ३१ ॥

## पर्षदः ण्यः । ३२ ।

'पर्षत्'शब्दात् द्वितीयान्तात् समवेते अर्थे 'ण्य' प्रत्ययो भवति ।

पार्षद्यः ॥ ३२ ॥

## सेनाम् वा । ३३ ।

'सेना'शब्दात् द्वितीयान्तात् समवेते अर्थे 'ण्य' प्रत्ययो वा भवति ।

सैन्यः, सैनिकः ॥ ३३ ॥

## अवृद्धेः गृह्णति गर्ह्ये । ३४ ।

'तत्' इति द्वितीयान्तात् 'वृद्धि'शब्दवर्जात् गर्ह्ये 'गृह्णति' अर्थे इकण् प्रत्ययो भवति ।

द्वैगुणिकः—अल्पं दत्वा बहु गृह्णन् अन्यायकारी निन्द्यते । अवृद्धेः इति किम्? वृद्धिं गृह्णाति । गर्ह्ये इति किम्? द्विगुणं गृह्णाति अधमर्णः ॥ ३४ ॥

## कुसीदात् इकट् । ३५ ।

'तत्' इति द्वितीयान्तात् 'कुसीद'शब्दात् 'गृह्णति' अर्थे इकट् प्रत्ययो भवति ।

कुसीदं गृह्णाति कुसीदिकः ॥ ३५ ॥

## दशैकादशात् इकः च । ३६ ।

'तत्' इति द्वितीयान्तात् 'दशैकादश'शब्दात् 'गर्ह्ये गृह्णति' अर्थे 'इक' प्रत्ययो भवति इकट् च ।

ऐकादशार्थाः दश दशैकादशाः तान् गृह्णाति दशैकादशिकः, स्त्री दशैकादशिका, दशैकादशिकी । 'इक-इकटोः' स्त्रियां विशेषः । 'दशैकादशात्' इति अत एव निपातनात् अकारान्तत्वम् तच्च वाक्ये प्रयोगार्थम्—दशैकादशान् गृह्णाति ॥ ३६ ॥

## धर्म-अधर्मौ चरति । ३७ ।

आभ्यां द्वितीयान्ताभ्याम् 'चरति' अर्थे इकण् प्रत्ययो भवति । चरति सेवायां वर्तते—तात्पर्येण अनुष्ठाने ।

धर्मं चरति धार्मिकः । आधर्मिकः ॥ ३७ ॥

## मीनं-मत्स्य-पक्षि-मृगअर्थात् घ्नति । ३८ ।

'मीन'शब्दात् 'मत्स्य'आदिअर्थात् च द्वितीयान्तात् 'घ्नति—हन्तरि' अर्थे इकण् प्रत्ययो भवति ।

मीनान् हन्ति मैनिकः । मात्सिकः । पक्षिन्—पाक्षिकः । शाकुनिकः । मायूरिकः । मृग—मार्गिकः । नैयङ्कवः । सौकरिकः । अर्थग्रहणं स्वरूप पर्यायविशेषपरिग्रहार्थम् । 'मीनं'ग्रहणात् अन्यस्य 'मत्स्य'पर्यायस्य न भवति—अजिह्मान् हन्ति । अनिमिषान् हन्ति ॥ ३८ ॥

## परिपन्थं तिष्ठति च । ३९ ।

'परिपन्थ'शब्दात् तिष्ठति हन्ति च अर्थे इकण् प्रत्ययो भवति ।

परिपन्थं तिष्ठति हन्ति वा पारिपन्थिकः ॥ ३९ ॥

## रक्षत्-उञ्छतोः । ४० ।

'तत्' इति द्वितीयान्तात् रक्षति उञ्छति च अर्थे इकण् प्रत्ययो भवति ।

समाजं रक्षति सामाजिकः । नागरिकः । बदराणि उञ्छन् बादरिकः । नैवारिकः ॥ ४० ॥

## 'सुस्नात'आदीन् पृच्छति । ४१ ।

---

१ "दशभिः एकादश दशैकादशाः"–हैम–६।४।३६।

२. "पक्षि–मत्स्य–मृगान् हन्ति" काशिका ४।४।३५। 'पक्षि–मत्स्य–मृगार्थात् घ्नति" हैम–६।४।३१। इत्यत्र न क्वापि 'मीन'ग्रहणम् । 'मीन-मत्स्य-पक्षिमृगार्थात् घ्नति"–शाक० ३।२।३२। "मीनग्रहणात् अन्यस्य मत्स्यपक्ष्यर्थस्य न भवति–अजिह्मान् हन्ति । अनिमिषान् हन्ति" । इति शाक० चिन्ता० वृ० । "अथ अजिह्मान् हन्ति, अनिमिषान् हन्ति इत्यत्र कस्मात् न भवति ? नतत मत्स्यस्य स्वरूपम् न विशेषः न पर्यायः अपि तु असाधारणं विशेषणम् । यथा जिह्मगा भुजगाः, अनिमिषा देवा इति " हैमम् ।

'सुस्नात'आदिभ्यः 'पृच्छति' इत्यस्मिन् अर्थे इकण् प्रत्ययो भवति ।

सुस्नातं पृच्छति सौस्नातिकः । सौखरात्रिकः । 'सुस्नात' आदयः प्रयोगगम्याः ॥ ४१॥

## 'प्रभूत'आदीन् ब्रूते । ४२ ।

'प्रभूत'आदिभ्यः द्वितीयान्तेभ्यः 'ब्रूते' इत्यर्थे इकण् प्रत्ययो भवति ।

प्रभूतं ब्रूते प्राभूतिकः । पार्याप्तिकः । 'प्रभूत'आदयः प्रयोगगम्याः ॥ ४२ ॥

## माशब्दम् इत्यादिभ्यः । ४३ ।

एभ्यः 'ब्रूते' इत्यर्थे इकण् प्रत्ययो भवति ।

मा शब्दम् इति ब्रूते माशब्दिकः–'इति' शब्दः वाक्यपरामर्शी–मा शब्दम् कार्षीः इति ब्रूते । कार्यशब्दम् इति ब्रूते कार्यशब्दिकः । 'माशब्द' इत्यादयः प्रयोगगम्याः ॥४३॥

## शाब्दिक-लालाटिक-दार्दरिक-कौक्कुटिकाः । ४४ ।

एते 'इकण्'अन्ता निपात्यन्ते ।

शब्दं करोति शाब्दिकः वैयाकरणः स हि ज्ञातवान् अविनष्टं शब्दम् उच्चारयति । दर्दरं वादित्रविशेषम् करोति दार्दरिकः । ललाटम् एव स्वामिनः दूरस्थितं पश्यति न स्वामि-कार्ये उपतिष्ठते स लालाटिकः । तथा 'कुक्कुटी' शब्देन कुक्कुटपातः लक्ष्यते, तेनाऽपि देशस्य अल्पतया तया गच्छति कौक्कुटिकः-"युगमात्रार्पितदृष्टिसंयुतः भिक्षुः उच्यते" [ ] यद्वा 'कुक्कुटी' इति मिथ्या शौचक्रिया भण्यते ताम् आचरन् कौक्कुटिकः दाम्भिकः ॥४४॥

---

१. 'दर्दरो घटः वादित्रं च'' ३।२।४७। शा०अ० ।

शब्द-दर्दरं करोति–३।४।३१। चान्द्रे । शाब्दिक-दार्दरिक-६।४।४५ । हैमे ।

शब्द-दर्दुरं करोति–४।४।३४। काशिका तथा ३।३।१५६। जैनेन्द्रे ।

"दार्दुरिकः कुम्भकारः" काशिका तथा जैनेन्द्रे । "दर्दुरो घटः वादित्रं च, तत् कुर्वन् दार्दुरिकः । घटवादित्रं कुर्वन् एवम् उच्यते । ३।२।४७।" शा० चि० । शाकटायने चि० वृत्तौ 'घट'स्थाने 'पट' इत्यपि मुद्रितम् । "दार्दरिकः वादित्रकृत्"–हैमे । 'भेर्या नादस्तु दर्दुरः" हैमकोशे ६ काण्डे श्लो० ४५।

"दर्दुरः भेक-मेघयोः ॥ ११६३ ।

वाद्यभाण्डे ( वाद्यभेदे ) शैलभेदे दर्दुरं ग्रामजालके । दर्दुरः अमा दर्दरः स्यात् ईषद्भग्ने ( ईषद्भेदे ) गिरौ अपि ॥ ११६४। हैमअनेकार्थ०निर्णय० । इत्येवं दर्दर-दर्दुर-ददुराणां मध्ये कः पाठः शुद्धः ? इति विचारे वैयाकरणानां न ऐकमत्यम् ।

२ ' 'कुक्कुटी'शब्देन अपि कुक्कुटीपातः लक्ष्यते, देशस्य अल्पतया हि भिक्षुः अविक्षिप्त-दृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति स उच्यते कौक्कुटिकः इति"–काशिका । "इन्द्रियाण्यवयवो वा कुक्कुटी तां पश्यति । कौक्कुटिकः भिक्षुः"–६।४।४५। हैमे ।

"स्याद् दाम्भिकः कौक्कुटिकः यश्च अदूरेरितेक्षणः"–अमर० ३ कां० नानार्थ० श्लो० १७। एवमेव हैमअनेकार्थ० श्लो० ११८१ ।

## 'माथ'उत्तरपद-पदवी-आक्रन्दात् धावति । ४५ ।

'तत्' इति द्वितीयान्ताद् 'माथ'उत्तरपदं यस्य तस्मात् 'पदवी'-'आक्रन्द'-शब्दाभ्यां च 'धावति' अर्थे इकण् प्रत्ययो भवति ।

दाण्डमाथिकः । पदवीं धावति पादविकः । आक्रन्दिकः ॥ ४५ ॥

## पश्चाति अनुपदात् । ४६ ।

'पश्चाति' इति प्रकृतिविशेषणम् । 'पश्चात्'अर्थे वर्तमानात् 'अनुपद'शब्दात् 'धावति' अर्थे इकण् प्रत्ययो भवति ।

पदस्य पश्चात् अनुपदम् तत् धावति आनुपदिकः ॥ ४६ ॥

## शीलम् । ४७ ।

'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे इकण् प्रत्ययो भवति, यत् तत् प्रथमान्तम् तत् चेत् शीलं स्यात् । शीलं प्राणिनां स्वभावः--फलनिरपेक्षा प्रवृत्तिः इत्यर्थः ।

अपूपाः अपूपभक्षणम् शीलम् अस्य आपूपिकः । मौदकिकः ॥ ४७ ॥

## 'छत्र'आदेः अञ् । ४८ ।

'छत्र'आदिभ्यः 'तत् अस्य शीलम्' इत्यर्थे अञ् प्रत्ययो भवति ।

छत्रम् शीलम् अस्य छात्रः--गुरुकार्येषु अवहितस्य शिष्यस्य छत्रक्रियातुल्या गुरुच्छिद्राच्छादनिका क्रिया 'छत्रम्' उच्यते । एवम् शिक्षाशीलः शैक्षः । छत्र शिक्षा बुभुक्षा तितिक्षा चुरा उदस्थान पुरोडाश कृषि कर्मन् तपस् सत्य इति 'छत्र' आदि ॥ ४८ ॥

## तूष्णीकः । ४९ ।

'तूष्णीम्' शब्दात् 'तत् अस्य शीलम्' इति विषये कः मकारलोपश्च निपात्यते ।

तूष्णींभावः शीलम् अस्य तूष्णीकः ॥ ४९ ॥

---

१. 'माथः पथिपर्यायः'' ३।३।३५। शा० अ० ।

२. आक्रन्दन्ति एतस्मिन् इति आक्रन्दो देशः अथवा आक्रन्द्यते इति आक्रन्दः आर्तायनम् उच्यते । विशेषाभावाद् द्वयोरपि ग्रहणम्--काशिका ४।४।३८। 'आक्रन्दन्ति यत्र स देशः आक्रन्दः आक्रन्द्यते इति वा आक्रन्दः आर्तायनम्--शरणम् उच्यते'' ।६।४।४०। सिद्धहेमे । "आरावे रुदिते त्रातरि आक्रन्दो दारुणे रणे''--अमर० नानार्थव० २३ तृतीयकां० श्लो० ९० । 'आक्रन्दो दारुणरणे (०रसे) साऽऽरावरुदिते नृपे''--हैमअने० श्लो० ९२६ निर्णय० । काशिकायाम् आक्रन्दो देशः उक्तः स च अधुना भारतदेशे वा अन्यत्र तन्नामा ग्रामः प्रसिद्धः वा कोऽपि देशः ? इति शोधनीयम् अथवा 'देश'शब्देन अत्र किं ग्राह्यम् ? इत्यपि विचारणीयम् ।

## प्रहरणम् । ५० ।

'तत्' इति वर्तते । 'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे इकण् प्रत्ययो भवति, यत् तत् प्रथमान्तं तत् चेत् प्रहरणं स्यात् ।

असिः प्रहरणम् अस्य आसिकः । मौष्टिकः ॥ ५० ॥

## परश्वधात् वा अण् । ५१ ।

'परश्वध' शब्दात् 'तत् अस्य प्रहरणम्' इत्यर्थे अण् प्रत्ययो वा भवति ।

पारश्वधः, पारश्वधिकः ॥ ५१ ॥

## शक्ति-यष्टेः टीकण् । ५२ ।

शक्ति-यष्टिभ्याम् 'तत् अस्य प्रहरणम्' इत्यर्थे टीकण् प्रत्ययो भवति ।

शाक्तीकः । याष्टीकः । शाक्तीकी ॥ ५२ ॥

## 'इष्टि'आदिभ्यः वा । ५३ ।

एभ्यः 'तत् अस्य प्रहरणम्' इत्यर्थे टीकण् प्रत्ययो वा भवति। ऐष्टिकः, ऐष्टीकः। काम्पनिकः, काम्पनीकः । आम्भसिकः, आम्भसीकः । दाण्डिकः, दाण्डीकः । 'इष्टि'-आदयः प्रयोगगम्याः ॥ ५३ ॥

## दैष्टिक-आस्तिक-नास्तिकम् । ५४ ।

एते 'तत् अस्य' इति विषये 'इकण्'अन्ता निपात्यन्ते ।

दिष्टं प्रमाणम् इति मतिः अस्य दैष्टिकः । अस्ति परलोकः पुण्यम् पापं च इति मतिः अस्य इति आस्तिकः । एवम्—नास्तिकः ॥ ५४ ॥

## पण्यम् । ५५ ।

'तत् अस्य' इति वर्तते । 'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे इकण् प्रत्ययो भवति, यत् तत् प्रथमान्तम् तत् चेत् पण्यं स्यात् ।

अपूपाः पण्यम् अस्य आपूपिकः । शाष्कुलिकः ॥ ५५ ॥

## 'किसर'आदेः इकट् । ५६ ।

'किसर'आदिभ्यः 'तत् अस्य पण्यम्' इत्यर्थे इकट् प्रत्ययो भवति । 'किसर' आदयः गन्धविशेषवचनाः ।

किसरं पण्यम् अस्य किसरिकः । किसर तगर स्थगर नलद उशीर हरिद्रा हरिद्रु गुग्गुलु इति 'किसर' आदिः ॥ ५६ ॥

## शलालोः वा । ५७ ।

'शैलालु'शब्दात् 'तत् अस्य पण्यम' इति अर्थे इकट् प्रत्ययो भवति वा ।

शलालु पण्यम् अस्य शलालुकः ॥ ५७ ॥

## वृत्तः अपपाठः अनुयोगे । ५८ ।

'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे इकण् प्रत्ययो भवति, यत् तत् प्रथमान्तम् तत् चेत् अनुयोगविषये वृत्तः अपपाठः स्यात्, अनुयोगः परीक्षा ।

एकम् अन्यत् अस्य अपपाठः वृत्तम् अनुयोगे ऐकान्यिकः । एवम् द्वैयन्यिकः । वृत्तः इति किम् ? वर्तमाने वर्त्स्यति वा मा भूत् ॥ ५८ ॥

## बहुस्वरपूर्वपदात् इकः । ५९ ।

बहुस्वरपूर्वपदात् 'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे 'इक' प्रत्ययो भवति । यत् तत् प्रथमान्तम तत् चेत वृत्तः अपपाठः अनुयोगे स्यात् ।

एकादश अन्यानि अस्य अपपाठरूपाणि वृत्तानि अनुयोगे एकादशान्यिकः । एकादशान्यिका ॥ ५९ ॥

## शिल्पम् । ६० ।

'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे 'इकण्' प्रत्ययो भवति, यत् तत् प्रथमान्तम् तत् चेत् शिल्पं स्यात् । शिल्पं क्रियासु कौशलम् ।

नृत्तं शिल्पम् अस्य नार्तिकः । मृदङ्गवादनं शिल्पम् अस्य मार्दङ्गिकः । वादनार्थः शिल्पार्थश्च वृत्तौ अन्तर्भूतः यथा 'दध्योदनः' इत्यत्र उपसिक्तार्थः इति वादन-शिल्प-शब्दयोः अप्रयोगः । मृदङ्गकरणम् शिल्पम् अस्य मार्दङ्गकरणिकः । सर्वोत्पत्तिमतां साधारणः 'करोति'अर्थः विशेषप्रतिपत्तिकेन तद्धितान्तेन न शक्यः अन्तर्भावयितुम् इति न करणशब्दनिवृत्तिः । 'वादन'आदि तु असाधारणं मृदङ्गादिरूपसाधनविशेषविषयम् अतः विशेषशब्दैः अन्तर्भावयितुं शक्यते ॥ ६० ॥

## मड्डुक-झर्झरात् वा अण् । ६१ ।

---

१. "'शलालु'शब्दो गन्धविशेषवचनः–४।४।५४। काशिका ।

२. उत्तरप्रदेशे वाराणसीप्रभृतिप्रदेशेषु अयं 'झर्झर'शब्दः 'झञ्झर'रूपेण 'चौडे मुंहका छोटा घडा–झञ्झर' इत्यर्थे व्यवह्रियते ।

आभ्याम् 'तत् अस्य शिल्पम्' इत्यर्थे वा अण् प्रत्ययो भवति ।

मड्डुकवादनम् शिल्पम् अस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ॥६१॥

## भक्ष्यम् अस्मै हितम् । ६२ ।

'तत्' इति प्रथमान्तात् 'अस्मै' इत्यर्थे इकण् प्रत्ययो भवति, तत् चेत् प्रथमान्तं भक्ष्यं हितं स्यात् ।

अपूपाः भक्ष्यम् हितम् अस्मै आपूपिकः । मौदकिकः । हितम् इति किम् ? अपूपा भक्ष्यम् अहितम् अस्मै ॥ ६२ ॥

## नियुक्तं दीयते । ६३ ।

'तत्'इति प्रथमान्तात् 'अस्मै'इत्यर्थे इकण् प्रत्ययो भवति, यत् तत् प्रथमान्तम् तत् चेत् नियुक्तम् अव्यभिचारेण वा दीयते ।

अग्रे भोजनम् अस्मै दीयते नियुक्तम् आग्रभोजनिकः । आपूपिकः । अस्मै इति किम् ? रजकस्य नित्यं वस्त्रं देयम् ॥ ६३ ॥

## भक्त-ओदनाभ्याम् अण्-इकटौ वा । ६४ ।

आभ्याम् 'नियुक्तम् अस्मै दीयते'इत्यस्मिन् विषये 'अण्' 'इकट्' प्रत्ययौ वा भवति।[1]

भाक्तः, भाक्तिकः । ओदनिकः । औदनिकः ॥ ६४ ॥

## श्राणा-मांसौदनात् इकः । ६५ ।

आभ्याम् 'नियुक्तम् अस्मै दीयते'इत्यर्थे 'इक'प्रत्ययो भवति ।

श्राणिकः । श्राणिका । मांसौदनिकः । मांसौदनिका । इकणि—मांसौदनिकी ॥६५॥

## तत्र नियुक्ते । ६६ ।

'तत्र'इति सप्तम्यन्तात् 'नियुक्ते' अर्थे इकण् प्रत्ययो भवति, नियुक्तः व्यापारितः ।

शुल्कशालायां नियुक्तः शौल्कशालिकः ॥ ६६ ॥

## 'अगार'अन्तात् इकः । ६७ ।

'अगार'अन्तशब्दात् 'तत्र नियुक्ते'इत्यर्थे 'इक' प्रत्ययो भवति ।

देवागारे नियुक्तः देवागारिकः । कोष्ठागारिकः ॥ ६७ ॥

---

१. अत्र 'यथासंख्यम्' इति अध्याहार्यम् । तेन 'भक्त'शब्दात् अण्, 'ओदन'शब्दात् इकट् इति भावो बोध्यः ।

## 'निकट'आदिषु वसति । ६८ ।

'निकट'आदिभ्यः 'तत्र वसति' इत्यर्थे इकण् प्रत्ययो भवति ।

निकटे वसति नैकटिकः—यः ग्रामस्य समीपे वसति आरण्यको भिक्षुः स एवम् उच्यते तथाप्रसिद्धेः । वार्क्षमूलिकः । आभ्यवकाशिकः । श्माशानिकः । 'निकट'आदयः प्रयोगगम्याः ॥ ६८ ॥

## सतीर्थ्यः । ६९ ।

'समानतीर्थ'शब्दात् 'वसति' अर्थे 'य' प्रत्ययः समानस्य 'स'भावश्च निपात्यते ।

समानतीर्थे वसति सतीर्थ्यः । तीर्थम् इह गुरुः उच्यते ॥ ६९ ॥

## संस्थान-प्रस्तार-तदन्त-'कठिन'अन्तेषु व्यवहरति । ७० ।

संस्थान-प्रस्ताराभ्याम्, तदन्तात्, 'कठिन'अन्तात् सप्तम्यन्तात् 'व्यवहरति' अर्थे इकण् प्रत्ययो भवति ।

संस्थाने व्यवहरति सांस्थानिकः । प्रास्तारिकः । तदन्त—गौसंस्थानिकः । कांस्यप्रस्तारिकः । वांशकठिनिकः । कठिनम्-तापसभाजनम् । बहुवचनम् कठिनान्ते स्वरूपग्रहणं मा भूत् ॥ ७० ॥

## अध्यायिनि अदेश-कालात् । ७१ ।

अध्ययनस्य यौ अदेश-कालौ 'अशुचिप्रदेश'आदि-'संध्या'आदिरूपौ तद्वाचिनः 'तत्र'इति सप्तम्यन्तात् अध्यायिनि वाच्ये इकण् प्रत्ययो भवति ।

अशुचौ अध्यायी आशुचिकः । सान्ध्यिकः । अदेश-कालात् इति किम्? विहारभूमौ अध्यायी । पूर्वाह्णे अध्यायी ॥ ७१ ॥

## 'नवयज्ञ'आदयः अस्मिन् वर्तन्ते । ७२ ।

---

१ "आरण्यकेन भिक्षुणा ग्रामात् क्रोशे वस्तव्यम् इति यस्य शास्त्रितो वासः स एवम् उच्यते'-सिद्धहेमे-६।४।७७।

२. 'चन्द्रसूर्योपरागश्च निर्घातो भूमिकम्पनम् ।
वृतीय गर्जितं विद्युत् उल्का दाहो दिशां तथा ॥
श्मशानाभ्याशम् अशुचि' उत्सवो दश संख्यया ।
इति कालिकसूत्रस्य अनध्यायदेश-कालाः पठिताः" ॥ – ३।२।७४। शा० अ०।

"अध्ययनस्य यौ देश-कालौ शास्त्रेण प्रतिषिद्धौ तौ अदेश-कालशब्देन उच्येते । चातुष्पथिकः । चतुर्दश्याम् अधीते चातुर्दशिकः । आमावास्यिक."–४।४।७१। काशिका ।

'नवयज्ञ'आदिभ्यः निर्देशात् एव प्रथमान्तेभ्यः 'वर्तन्ते अस्मिन्' इत्यर्थे इकण् प्रत्ययो भवति।

नवयज्ञा अस्मिन् वर्तन्ते नावयज्ञिकः। पाकयज्ञिकः। 'नवयज्ञ'आदयः प्रयोगगम्याः ॥ ७२ ॥

## संख्यादेः च आ'अर्हत्' अलुचः। ७३।

आ'अर्हत्' अर्थात् या प्रकृतिः उपादास्यते तस्याः केवलायाः संख्यादेश्च वक्ष्यमाणः प्रत्ययो वेदितव्यः न चेत् स लुच्परः स्यात्।

पारायणम् अधीयानः पारायणिकः। द्वे पारायणे अधीयानः द्वैपारायणिकः। संख्यादेः इति किम्? परमपारायणम् अधीते। 'आ अर्हत्' इत्यत्र अभिविधौ आङ् तेन 'अर्हत्' अर्थे अपि भवति–द्वे सहस्रे अर्हति द्विसाहस्रः। अलुचः इति किम्? द्विसूर्पेण क्रीतम् द्विसौर्पिकम् ॥ ७३ ॥

## पारायणम् अधीयाने। ७४।

'पारायण'शब्दात् द्वितीयान्तात् अधीयाने अर्थे इकण् प्रत्ययो भवति।

पारायणम् अधीते पारायणिकः ॥ ७४ ॥

## तेन संपादिनि। ७५।

'तेन' इति तृतीयान्तात् संपादिनि अर्थे इकण् प्रत्ययो भवति। गुणोत्कर्षः संपत्तिः। आवश्यके अर्थे ग्रहादित्वात् अत एव निपातनात् वा कर्तरि णिन्।

कर्णवेष्टकाभ्याम् संपादि कार्णवेष्टकिकम् मुखम्–कर्णवेष्टकाभ्यां विशेषतः शोभते इत्यर्थः। एवम् औपानहिकौ पादौ ॥ ७५ ॥

## कर्म-वेषात् यः। ७६।

आभ्यां तृतीयान्ताभ्याम् संपादिनि अर्थे 'य' प्रत्ययो भवति।

कर्मणि संपादि कर्मण्यम् शौर्यम्। वेषेण संपादी वेष्यः नटः ॥ ७६ ॥

## कालात् लभ्य-कार्य-सुकर-परिजय्ये। ७७।

कालविशेषवाचिनः 'तेन' इति तृतीयान्तात् 'लभ्य'आदिषु अर्थेषु इकण् प्रत्ययो भवति। 'कार्य' आदीनाम् शक्ते अर्हे यः। अकृच्छ्रेण क्रियते यत् तत् सुकरम्।

मासेन लभ्यः मासिकः पाठः। मासेन कार्यम् मासिकं चान्द्रायणम्। मासेन

---

१. 'संपादिनि' शब्दे आगतस्य 'णिन्'प्रत्ययस्य सिद्ध्यर्थम् एतद् उक्तम्।

सुकरः मासिकः प्रासादः । मासेन परिजय्यः मासिकः हस्ती । कालात् इति किम् ? चैत्रेण लभ्यम् ॥ ७७ ॥

## निर्वृत्ते । ७८ ।

'तेन' इति तृतीयान्तात् कालविशेषवाचिनः निर्वृत्ते अर्थे इकण् प्रत्ययो भवति ।

अह्ना निर्वृत्तम् आह्निकम् । आर्धमासिकम् । योगविभागः उत्तरत्र अस्य अनुवृत्त्यर्थः ॥ ७८ ॥

## तस्मै भृत-अधीष्टे । ७९ ।

'तस्मै' इति चतुर्थ्यन्तात् कालविशेषवाचिनः भृते अधीष्टे च अर्थे इकण् प्रत्ययो भवति । भृतः वेतनेन व्यापारितः । अधीष्टः सत्कृत्यः ।

मासाय भृतः मासिकः कर्मकरः—मासं कर्मणे भृतः इत्यर्थः । मासाय अधीष्टः मासिकः अध्यापकः—मासम् अध्ययनाय अधीष्टः इत्यर्थः ॥ ७९ ॥

## तम् भावि-भूते च । ८० ।

'तम्' इति द्वितीयान्तात् कालविशेषवाचिनः भाविनि भूते च अर्थे इकण् प्रत्ययो भवति । स्वसत्तया व्याप्स्यमानः कालः भावी । व्याप्तः भूतः ।

मासं भावी मासिकः उत्सवः । मासं भूतः मासिकः व्याधिः । चकारः 'तेन निर्वृत्ते' 'तस्मै भृत-अधीष्टे' 'तम् भावि-भूते च' इति त्रयाणाम् उत्तरत्र अनुवृत्त्यर्थः ॥८०॥

## षण्मासात् ण्य-इकौ । ८१ ।

'षण्मास' शब्दात् कालविशेषवाचिनः 'तेन निर्वृत्ते' इत्यादौ अर्थे ण्य-इकौ प्रत्ययौ भवतः ।

षड्भिः मासैः निर्वृत्तः, षड्भ्यः मासेभ्यः भृतः, अधीष्टः वा षण्मासान् भावी भूतः वा षाण्मास्यः, षण्मासिकः ॥ ८१ ॥

## समायाः ईनः । ८२ ।

'समा' शब्दात् 'तेन निर्वृत्ते' इत्यादौ अर्थे 'ईन' प्रत्ययो भवति ।

समया निर्वृत्तः इत्यादिविग्रहे समीनः ॥ ८२ ॥

## रात्रि-अहः-संवत्सरात् च द्विगोः वा । ८३ ।

'रात्रि' आदिअन्तात् 'समा' शब्दअन्तात् च द्विगोः 'तेन निर्वृत्ते' इत्यादौ अर्थे 'ईन' प्रत्ययो भवति वा ।

द्वाभ्यां रात्रिभ्याम् निर्वृत्तः इत्यादिविग्रहे द्विरात्रीणः, द्वैरात्रिकः । द्व्यहीनः, द्वैयह्निकः । 'रात्रि'अन्तात् 'अहर्'अन्तात् च वचनस्य अनवकाशत्वात् समासान्तम् अटं बाधित्वा ईन एव भवति, तथा च सति समासान्तयोगे उच्यमानः 'संख्या-अव्यय-सर्व-अंशात्' [ ] इति 'अह्न' आदेशो न भवति । द्विसंवत्सरीणः, द्विसांवत्सरिकः । द्विसमीनः, द्वैसमिकः ॥ ८३ ॥

## वर्षात् अः च वा । ८४ ।

'वर्ष'शब्दअन्तात् द्विगोः 'तेन निर्वृत्ते' इत्यादौ अर्थे अकारप्रत्ययो भवति । ईनश्च वा, पक्षे इकण् ।

द्विवर्षः, द्विवर्षीणः, द्विवार्षिकः । भाविनि आदिपदस्य एव वृद्धिः—द्वे वर्षे भावी द्वैवार्षिकी ॥ ८४ ॥

## प्राणिनि भूते । ८५ ।

'वर्ष'शब्दअन्तात् द्विगोः भूते अर्थे नित्यम् अकारप्रत्ययो भवति स चेत् भूतः प्राणी स्यात् ।

द्विवर्षः दारकः । प्राणिनि इति किम् ? द्विवर्षीणः द्विवर्षश्च व्याधिः । भूते इति किम् ? द्वाभ्यां वर्षाभ्यां भृतः अधीष्टः वा द्विवर्षः द्विवर्षीणः मर्त्यः ॥ ८५ ॥

## मासात् वयसि यः । ८६ ।

'मास'शब्दअन्तात् द्विगोः भूते अर्थे वयसि गम्यमाने यः प्रत्ययो भवति ।

द्वौ मासौ भूतः द्विमास्यः दारकः । वयसि इति किम् ? द्विमासिकः व्याधिः ॥८६॥

## ईनः च । ८७ ।

द्विगोः इति निवृत्तम् पृथग्वचनात् । 'मास'शब्दात् वयसि गम्यमाने यः ईनश्च प्रत्ययो भवति ।

मास्यः मासीनः दारकः । वयसि इति किम् ? मासिकः नायकः ॥ ८७ ॥

## षण्मासात् य-यण्-इकणः । ८८ ।

'षण्मास'शब्दात् कालवाचिनः भूते अर्थे वयसि गम्यमाने 'य'आदयः प्रत्यया भवन्ति ।

षण्मास्यः, षाण्मास्यः, षाण्मासिकः दारकः । भूतात् अन्यत्र पूर्वयोगेन ण्य-इकौ भवतः—षाण्मास्यः षण्मासिकः ॥ ८८ ॥

## सः अस्य ब्रह्मचर्य-तद्वतोः । ८९ ।

'सः' इति प्रथमान्तात् कालवाचिनः 'अस्य' इति षष्ठ्यर्थे ब्रह्मचर्ये तद्वति च वाच्ये इकण् प्रत्ययो भवति ।

मासः अस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् । मासिकः ब्रह्मचारी । एवम् आर्ध-मासिकः । सांवत्सरिकः ॥ ८९ ॥

## समयात् प्राप्तात् । ९० ।

'सः' इति प्रथमान्तात् 'समय'शब्दात् 'प्राप्त'उपाधिकात् 'अस्य' इति षष्ठ्यर्थे इकण् प्रत्ययो भवति ।

समयः—अवसरः—प्राप्तः अस्य सामयिकं कार्यम् ॥ ९० ॥

## 'ऋतु'आदिभ्यः अण् । ९१ ।

एभ्यः 'प्राप्त'उपाधिकेभ्यः 'अस्य' इति षष्ठ्यर्थे अण् प्रत्ययो भवति ।

ऋतुः प्राप्तः अस्य आर्तवं पुष्पम । उपवस्ता प्राप्तः अस्य औपवस्त्रम् । 'ऋतु'-आदयः प्रयोगगम्याः ॥ ९१ ॥

## कालात् यः । ९२ ।

'काल'शब्दात् प्रथमान्तात 'अस्य' इति षष्ठ्यर्थे 'य' प्रत्ययो भवति ।

कालः प्राप्तः अस्य काल्यः सूपः ॥ ९२ ॥

## दीर्घात् । ९३ ।

कालशब्दात् दीर्घोपाधिकात् 'अस्य' इति षष्ठ्यर्थे 'इक' प्रत्ययो भवति ।

कालो दीर्घोऽस्य कालिकम् ऋणम् ॥ ९३ ॥

## प्रयोजनम् । ९४ ।

'सः अस्य' इति वर्तते । 'सः' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे इकण् प्रत्ययो भवति । तत् चेत् प्रथमान्तं प्रयोजनं स्यात् । प्रयोजनम्—प्रयोजकम् ।

जिनमहः प्रयोजनम् अस्य जैनमहिकम् ॥ ९४ ॥

## एकागारात् चौरे । ९५ ।

'एकागार'शब्दात् 'तत् अस्य प्रयोजनम्' इत्यस्मिन् विषये इकण् प्रत्ययो भवति । 'अस्य' इति निर्दिष्टं चेत् चौरः स्यात् ।

एकम्—असहायम्—अगारं प्रयोजनम् अस्य एकागारिकः चौरः। चौरे इति किम्? एकम् अगारं प्रयोजनम् अस्य भिक्षोः। नियमार्थं वचनम् ॥ ९५ ॥

## 'स्वस्तिवाचन'आदिभ्यः श्लुग् । ९६ ।

एभ्यः 'तत् अस्य प्रयोजनम्' इत्यस्मिन् अर्थे श्लुग् भवति।

स्वस्तिवाचनम् प्रयोजनम् अस्य स्वस्तिवाचनः। शान्तिवाचनः। 'स्वस्तिवाचन' आदयः प्रयोगगम्याः ॥ ९६ ॥

## 'स्वर्ग'आदिभ्यः यः । ९७ ।

एभ्यः 'तत् अस्य प्रयोजनम्' इत्यस्मिन् विषये 'य'प्रत्ययो भवति।

स्वर्गः प्रयोजनम् अस्य स्वर्ग्यम्। यशस्यम्। 'स्वर्ग'आदयः प्रयोगगम्याः ॥९७॥

## 'उत्थापन'आदेः ईयः । ९८ ।

एभ्यः 'तत् अस्य प्रयोजनम्' इत्यस्मिन् विषये 'ईय'प्रत्ययो भवति।

उत्थापनं प्रयोजनम् अस्य उत्थापनीयम्। उत्थापन अनुप्रवचन अनुवादनीय अनुपान अनुवासन आरम्भण इति 'उत्थापन'आदिः ॥ ९८ ॥

## विशि-पदि-रुहि-पूरि-समापः अनात् सपूर्वपदात् । ९९ ।

'विशि'आदिभ्यः 'अन'प्रत्ययान्तेभ्यः सपूर्वपदेभ्यः 'तत् अस्य प्रयोजनम्' इति विषये 'ईय'प्रत्ययो भवति।

संवेशनम् प्रयोजनम् अस्य संवेशनीयम्। गृहप्रवेशनीयम्। गोप्रपदनीयम्। अश्वप्रपदनीयम्। आरोहणीयम्। प्रासादारोहणीयम्। प्रपापूरणीयम्। अङ्गसमापनीयम् ॥ ९९ ॥

## विशाखा-आषाढात् मन्थ-दण्डे । १०० ।

'विशाखा'-'आषाढा'शब्दाभ्याम् 'तत् अस्य प्रयोजनम्' इत्यर्थे यथासंख्यं मन्थे दण्डे च वाच्ये 'अण्' प्रत्ययो भवति।

---

१. अत्र 'अङ्ग'शब्देन जैनधर्मसंबन्धीनि अङ्गसूत्राणि ज्ञेयानि।

'जैनेन्द्रसमापनीयम्, तर्कसमापनीयम्' इत्येवम् उदाहरणानि जैनेन्द्रे प्रसिद्धानि–३।४।१०५। "समापि—अङ्गसमापनीयम्। श्रुतस्कन्धसमापनीयम्। व्याकरणसमापनीयम्"–एतानि च उदाहरणानि–सिद्धहेमे–६।४।१२२।

विशाखा प्रयोजनम् अस्य वैशाखः मन्थः । विशाखायां हि पौर्णमास्यां सर्वे गोमन्तः सर्वे गोदोहं मथ्नन्ति, मथित्वा गृहदेवतायै बलिम् उपहृत्य अतिथिभ्यः प्रदाय अवशिष्टं स्वयम् उपयुञ्जते ततः स मन्थः वैशाखः । आषाढा प्रयोजनम् अस्य आषाढः दण्डः । आषाढ्यां हि पौर्णमास्यां वेणुं छित्वा सर्वगन्धैः अनुलिप्य स्वयम् अनुलिप्ताः स्रग्विणः अलंकृताः कुमारकाः तेन अगाराणि अभिघ्नन्ति ततः स दण्डः आषाढः ॥१००॥

## 'चूला'आदिभ्यः । १०१ ।

एभ्यः 'तत् अस्य प्रयोजनम्' इत्यर्थे 'अण्' प्रत्ययो भवति ।

चूला प्रयोजनम् अस्य चौलम् । श्राद्धम् । शालम् । 'चूला'आदयः प्रयोगगम्याः ॥ १०१ ॥

## 'योग' आद्ये शक्ते । १०२ ।

'योग'आदिभ्यः निर्देशात् एव चतुर्थ्यन्तेभ्यः शक्ते अर्थे इकण् प्रत्ययो भवति ।

योगाय शक्तः यौगिकः । योग संताप सन्नाह संग्राम संयोग संपराय संपेष निष्पेष निसर्ग विसर्ग उपसर्ग प्रवास उपवास संघात सक्रम सक्तु मांसौदन इति 'योग' आदिः ॥ १०२ ॥

## योग्य-कार्मुकौ । १०३ ।

एतौ शक्ते अर्थे 'य'-'उकञ्'प्रत्ययान्तौ निपात्येते ।

योगाय शक्तः योग्यः । कर्मणे शक्तः कार्मुकः ॥ १०३ ॥

## तुरायणं यजमाने । १०४ ।

'तुरायण'शब्दात् यजमाने अर्थे इकण् प्रत्ययो भवति ।

तुरायणं यजमानः तौरायणिकः ॥ १०४ ॥

## संशयं प्राप्ते ज्ञेये । १०५ ।

'संशयम्' इति द्वितीयान्तात् प्राप्ते ज्ञेये अर्थे 'इकण्' प्रत्ययो भवति ।

संशयं प्राप्तः सांशयिकः । ज्ञेये अर्थे इति किम् ? ज्ञातरि न भवति । सोऽपि हि संशयं प्राप्तो भवति तस्य तद्भावात् ॥ १०५ ॥

## क्रोश-योजनात् शतात् योजनात् च अभिगमार्हे । १०६ ।

क्रोश-योजनपूर्वात् 'शत'शब्दात् 'योजन'शब्दात् च पञ्चम्यन्तात् अभिगमार्हे अर्थे इकण् प्रत्ययो भवति ।

कोशशतात् अभिगमार्हः कौशशतिकः मुनिः। यौजनशतिकः मुनिः। यौजनशतिकः गुरुः। यौजनिकः साधुः ॥ १०६ ॥

## तत् याति एभ्यः । १०७ ।

'तत्' इति द्वितीयान्तेभ्यः 'क्रोश-योजन'पूर्वक'शत'शब्द-योजनशब्देभ्यः 'गच्छति' अर्थे इकण् प्रत्ययो भवति ।

क्रोशशतं याति क्रौशशतिकः, यौजनशतिकः, यौजनिकः दूतः ॥ १०७ ॥

## पथः इकट् । १०८ ।

'पथिन्'शब्दात् 'तत्' इति द्वितीयान्तात् 'याति' अर्थे 'इकट्' प्रत्ययो भवति ।

पन्थानं याति पथिकः, पथिकी स्त्री । द्विपथिकः । त्रिपथिकः । कटम् अकृत्वा[1] 'इकट्'वचनात् अन्तरङ्गत्वात् समासान्तेऽपि भवति ॥ १०८ ॥

## नित्यं णः पन्थश्च । १०९ ।

'पथिन्'शब्दात् 'तम् नित्यं याति' अर्थे णः प्रत्ययो भवति । 'पथिन्'शब्दस्य च 'पन्थ' आदेशः ।

पन्थानं नित्यं याति पान्थः । पान्था स्त्री । द्वैपन्थः ॥ १०९ ॥

## स्थल-जङ्गल-अज-वारि-कान्तार-उत्तर-शङ्कुआदिना आहृते च । ११० ।

'स्थल'आदिआदेः 'पथिन्'शब्दात् तृतीयान्तात् आहृते याति च अर्थे 'इकण्' प्रत्ययो भवति ।

स्थलपथेन आहृतः याति वा स्थालपथिकः । जाङ्गलपथिकः । आजपथिकः । वारिपथिकः । कान्तारपथिकः । औत्तरपथिकः । शाङ्कुपथिकः ॥ ११० ॥

## 'स्थल'आदिना अण् मधुक-मरिचे । १११ ।

'स्थल'पूर्वात् पथः तृतीयान्तात् आहृते मधुके मरिचे वाच्ये अण प्रत्ययो भवति ।

स्थालपथं मधुकम् मरिचं वा । स्थालपथिकम् अन्यत् ॥ १११ ॥

## 'गोदान'आदीनां ब्रह्मचर्ये । ११२ ।

'गोदान'आदिभ्यः षष्ठ्यन्तेभ्यः ब्रह्मचर्ये वाच्ये इकण् प्रत्ययो भवति ।

गोदानस्य ब्रह्मचर्यम् गौदानिकम् । आदित्यव्रतानां ब्रह्मचर्यम् आदित्यव्रतिकम् । महानाम्न्यः नाम ऋचः तत्साहचर्यात् तासां व्रतम् अपि महानाम्न्यः तासां ब्रह्मचर्यम् माहानामिकम् । 'गोदान'आदयः प्रयोगगम्याः ॥ ११२ ॥

---

1. 'कटम्' इति प्रत्ययम् अकृत्वा—इति आशयः ।

## चान्द्रायणं च चरति । ११३ ।

'चन्द्रायण'शब्दात् 'गोदान'आदिभ्यश्च द्वितीयान्तेभ्यः 'चरति'अर्थे इकण् प्रत्ययो भवति ।

चन्द्रायणं चरति चान्द्रायणिकः । गौदानिकः । माहानामिकः ॥ ११३ ॥

## 'देवव्रत'आदीन् डिन् । ११४ ।

'देवव्रत'आदिभ्यः द्वितीयान्तेभ्यः 'चरति'अर्थे डिन् प्रत्ययो भवति ।

देवव्रतं चरति देवव्रती । तिलव्रती । 'देवव्रत'आदयः प्रयोगगम्याः ॥ ११४ ॥

## डकः च अष्टाचत्वारिंशत्-चातुर्मास्यं 'य'लुक् च । ११५ ।

'अष्टाचत्वारिंशत्-चातुर्मास्य'इत्येताभ्याम् द्वितीयान्ताभ्याम् 'चरति'अर्थे 'डक' प्रत्ययो भवति डिन् च, यकारस्य लुक् च ।

अष्टाचत्वारिंशत् वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी । चातुर्मास्यानि चरति चातुर्मासकः । चातुर्मासी ॥ ११५ ॥

## यज्ञानाम् दक्षिणायाम् । ११६ ।

यज्ञवाचिनः षष्ठ्यन्तात् दक्षिणायाम् अर्थे इकण् प्रत्ययो भवति ।

अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । वाजपेयिकी ॥ ११६ ॥

## तेषु देये । ११७ ।

यज्ञवाचिभ्यः सप्तम्यन्तेभ्यः देये अर्थे इकण् प्रत्ययो भवति ।

अग्निष्टोमे देयम् आग्निष्टोमिकम् । वाजपेयिकम् भक्तम् ॥ ११७ ॥

## काले कार्ये च भववत् । ११८ ।

कालवाचिनः सप्तम्यन्तात् देये कार्ये च अर्थे भववत् प्रत्ययो भवति । वतिः सादृश्यार्थः । तेन याभ्यः प्रकृतिभ्यः येन विशेषेण ये प्रत्ययाः भवे अर्थे भवन्ति ताभ्यः प्रकृतिभ्यः तेन विशेषेण कार्ये देये च अर्थे ते प्रत्यया भवन्ति ।

वर्षासु देयम् कार्यम् वा वार्षिकम् । एवं शारदिकम् श्राद्धं कर्म । शारदः, शारदिकः रोगः आतपः वा । नैशम् नैशिकम् । पुराणं वा पुरातनम् । शौवस्तिकम् । श्वस्त्यम् । श्वस्तनम् । पूर्वाह्णेतनम् । सायंतनम् । परुत्नम् । पौषम् । शैशिरम् । सान्ध्यम् । सांवत्सरम् । द्वयोः मासयोः कार्यम् देयम् वा द्वैमासिकम् ॥ ११८ ॥

---

१. "चतुर्षु मासेषु भवानि चातुर्मास्यानि" ३।२।८२। शा० अ० । २. 'प्रत्ययस्य भावः अत्र आदिश्यते न अभावः इति द्विगोः न्लुग् न भवति" ।३।२।६५। शा० अ० ।

## 'व्युष्ट'आदिषु अण् । ११९ ।

'व्युष्ट'आदिभ्यः सप्तम्यन्तेभ्यः देये कार्ये च अर्थे अण् प्रत्ययो भवति ।

व्युष्टे देयम् कार्यम् वा वैयुष्टम् । व्युष्ट नित्य निष्क्रमण प्रवेशन तीर्थ संग्राम संघात प्रवास उपवास अग्निपद पीलुमूल इति 'व्युष्ट'आदिः ॥ ११९ ॥

## हस्त-यथाकथाचाभ्याम् य-णम् । १२० ।

आभ्याम् तृतीयान्ताभ्याम् देये कार्ये च अर्थे यथासंख्यम् 'य-ण'प्रत्ययो भवति ।

हस्तेन देयम् कार्यम् वा हस्त्यम् । यथाकथाच अनादरेण याथाकथाचम् ॥१२०॥

## डकः त्रिंशत्-विंशतेः अनाम्नि आ अर्हात् । १२१ ।

'आ अर्हत्' अर्थात् यः अर्थः वक्ष्यते तस्मिन् गम्ये त्रिंशत्-विंशतिभ्याम् अनाम्नि 'डक'प्रत्ययो भवति ।

त्रिंशता क्रीतम् त्रिंशकम् । विंशकम् । त्रिंशतम् अर्हति त्रिंशकः । विंशकः । अनाम्नि इति किम् ? त्रिंशत्कम् । विंशतिकम् ॥ १२१ ॥

## संख्या-डतेः च अशत्-ति-ष्टेः कः । १२२ ।

शत्-ति-ष्टिवर्जितायाः संख्यायाः डतेः त्रिंशत्-विंशतिभ्यां च 'आ अर्हत्' अर्थे 'क' प्रत्ययो भवति ।

द्विकम् । बहुकम् । गणकम् । यावत्कम् । कतिकम् । त्रिंशत्कम् । विंशतिकम् । अशत्-ति-ष्टेः इति किम् ? चात्वारिंशत्कम् । साप्ततिकम् । षाष्टिकम् ॥ १२२ ॥

## कंस-अर्धात् इकट् । १२३ ।

'कंस'-'अर्ध'शब्दाभ्याम् 'आ अर्हत्' अर्थे इकट् प्रत्ययो भवति ।

कंसिकम् । अर्धिकम् । टकारः ङ्यर्थः--कंसिकी ॥ १२३ ॥

## अर्धात् पल-कंस-कर्षात् । १२४ ।

'अर्ध'पूर्वपदेभ्यः 'पल'आदिभ्यः आ 'अर्हत्' अर्थे इकट् प्रत्ययो भवति ।

अर्धपलिकम् । अर्धकंसिकम् । अर्धकर्षिकम् ॥ १२४ ॥

## कार्षापणात् प्रतिः च अस्य वा । १२५ ।

'कार्षापण'शब्दात् 'आ अर्हत्' अर्थे 'इकट्' प्रत्ययो भवति, अस्य च 'कार्षापण'

---

१. 'अस्य' इति स्थानिप्रतिपत्त्यर्थम् अन्यथा 'प्रतिः' प्रत्ययान्तरं विज्ञायेत' – ३।३।१३२। बा० अ० ।

शब्दस्य 'प्रतिः' आदेशो वा ।

कार्षापणिकम् । प्रतिकम् । चकारः आदेशस्य प्रत्ययसंनियोगशिष्टतार्थः अत एव द्विगोः श्लुचि प्रत्ययादेशो न भवति—द्विकार्षापणम् ॥ १२५ ॥

**सहस्र-शतमानात् अण् । १२६ ।**

आभ्याम् 'आ अर्हत्' अर्थे 'अण्' प्रत्ययो भवति ।

साहस्रः । शातमानः ॥ १२६ ॥

**वा अतोः इकः । १२७ ।**

'अतु'अन्तात् 'आ अर्हत्' अर्थे 'इक' प्रत्ययो वा भवति ।

यावतिकम्, यावत्कम् ॥ १२७ ॥

**अनादेः शतात् अतस्मिन् य-इकौ । १२८ ।**

'शत'शब्दात् अपूर्वपदात् 'आ अर्हत्' अर्थे वस्तुतः प्रकृत्यर्थात् भिन्ने 'य-इक' प्रत्ययौ भवतः ।

शत्यम् । शतिकम् । अनादेः इति किम्? द्व्युत्तरं शतम् द्विशतम् तेन क्रीतम् द्विशतकम् । अतस्मिन् इति किम्? शतम् मानम् अस्य शतकः ग्रन्थविशेषः ॥ १२८ ॥

**सूर्पात् अञ् वा । १२९ ।**

'सूर्प'शब्दात् 'आ अर्हत्' अर्थे वा अञ् प्रत्ययो भवति ।

सौर्पम्, सौर्पिकम् ॥ १२९ ॥

**वसनात् । १३० ।**

'वसन'शब्दात् 'आ अर्हत्' अर्थे अञ् प्रत्ययो भवति ।

वसनेन क्रीतम् वासनम् ॥ १३० ॥

**विंशतिकात् । १३१ ।**

विंशतिकात् 'आ अर्हत्' अर्थे अञ् प्रत्ययो भवति ।

वैंशतिकम् । पृथग्योगः उत्तरार्थः ॥ १३१ ॥

**द्विगोः ईनः । १३२ ।**

---

१. प्रत्ययनिमित्तकः 'प्रति'आदेशः इति भावः ।

२. व्याख्याप्रज्ञप्तिनामके पञ्चमअङ्गरूपे जैनसूत्रे 'शतक'नाम्ना प्रकरणानि विद्यन्ते ।

'विंशतिक'अन्तात् द्विगोः 'आ अर्हत्' अर्थे 'ईन' प्रत्ययो भवति। विधानसामर्थ्यात् तु श्लुग् न भवति ।

द्विविंशतिकीनम् ॥ १३२ ॥

**खारी-काकणीभ्यः कच् । १३३ ।**

'खारी'-'काकणी'अन्तात् द्विगोः केवलाभ्यां च खारी-काकणीभ्याम् 'आ अर्हत्' अर्थे कच् प्रत्ययो भवति ।

द्विखारीकम् । द्विकाकणीकम् । बहुवचनं केवलार्थम्--खारीकम् । काकणीकम् । चकारः 'न कचि' [ ] इति प्रतिषेधार्थः ॥ १३३ ॥

**माष-पण-पादात् यः । १३४ ।**

'माष'आदिअन्तात् द्विगोः 'आ अर्हत्' अर्थे 'य'प्रत्ययो भवति ।

द्विमाष्यम् । द्विपण्यम् । द्विपाद्यम् । 'माष'-'पण'साहचर्यात् पादः परिमाणम् न प्राण्यङ्गम् इति 'पत् काषि-हिम-हति-ये' [ ] इति 'पद्'भावः न भवति ॥१३४॥

**शतात् वा । १३५ ।**

'शत'अन्तात् द्विगोः 'आ अर्हत्' अर्थे 'य'प्रत्ययो वा भवति । पक्षे संख्यालक्षणः कः, तस्य च श्लुक् । अस्य तु विधानसामर्थ्यात् न ।

द्विशत्यम । द्विशतम् ॥ १३५ ॥

**शाणात् । १३६ ।**

'शाण'अन्तात् द्विगोः 'आ अर्हत्' अर्थे 'य'प्रत्ययो वा भवति ।

द्विशाण्यम् । द्विशाणम् । पृथग्योग उत्तरार्थः ॥ १३६ ॥

**द्वि-त्रेः अण् च । १३७ ।**

'द्वि'-'त्रि'पूर्वः यः 'शाण'शब्दः तदन्तात् द्विगोः 'आ अर्हत्' अर्थे 'अण्'-'य' प्रत्ययौ भवतः, पक्षे इकण् तस्य च श्लुक् ।

द्विशाण्यम् । द्विशाणम् । त्रिशाण्यम् । त्रिशाणम् ॥ १३७ ॥

**अलुचः अनाम्नि श्लुक् पित् । १३८ ।**

अलुगन्तात् द्विगोः 'आ अर्हत्' अर्थे उत्पन्नस्य प्रत्ययस्य श्लुक् भवति, सा च पित्, न चेत् प्रत्ययान्तं कस्यचित् नाम स्यात् ।

द्वाभ्यां कंसाभ्याम् द्विकंस्या वा क्रीतम् द्विकंसम् । द्विसूर्पम् । अलुचः इति किम् ? द्वाभ्यां सूर्पाभ्यां क्रीतम् द्विसूर्पम् तेन क्रीतम् द्विसौर्पिकम् । अनाम्नि इति किम् ? पञ्च लोहिन्यः परिमाणम् अस्य पाञ्चलोहितिकम् । पित्कारः पुंभावार्थः—पञ्चगर्गः ॥१३८॥

## वा अणः । १३९ ।

अलुगन्तात् द्विगोः परस्य 'आ अर्हत्' अर्थोत्पन्नस्य अणः श्लुग् वा भवति ।

द्विसहस्रम् । द्विसाहस्रम् । अणः इति किम् ? द्वौ द्रोणौ पचति द्विद्रोणः ॥१३९॥

## सुवर्ण-कार्षापणात् । १४० ।

'सुवर्ण'-'कार्षापण'अन्तात् द्विगोः अलुगन्तात् परस्य 'आ अर्हत्'अर्थोत्पन्नस्य प्रत्ययस्य श्लुग् वा भवति ।

द्विसुवर्णम् । द्विसौवर्णिकम् । द्विकार्षापणम् । द्विकार्षापणिकम् ॥ १४० ॥

## द्वि-त्रि-बहोः निष्क-विस्तात् । १४१ ।

'द्वि'-'त्रि'-'बहु'पूर्वात 'निष्क'-'विस्त'शब्दान्तात् द्विगोः अलुगन्तात् परस्य 'आ-अर्हत्'अर्थोत्पन्नस्य प्रत्ययस्य श्लुग् वा भवति ।

द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । बहुनिष्कम् । बहुनैष्किकम् । द्विविस्तम् । द्विवैस्तिकम् । त्रिविस्तम् । त्रिवैस्तिकम् । बहुविस्तम् । बहुवैस्तिकम् ॥१४१॥

## मूल्यैः क्रीते । १४२ ।

मूल्यवाचिनः निर्देशात् एव तृतीयान्तात् क्रीते अर्थे यथाविहितं प्रत्ययः भवति ।

सप्तत्या क्रीतम् साप्ततिकम् । त्रिंशकम् । मूल्यैः इति किम् ? चैत्रेण क्रीतम् । 'सूर्पाभ्याम् सूर्पैः वा क्रीतम्' इत्यत्र परिमाणवाचिशब्दात् द्विवचन-बहुवचनान्तात् प्रत्ययः न भवति अनभिधानात्, न हि वाक्ये वा वृत्तौ भेदसंख्यावाचिनी विभक्तिः अस्ति इति। यत्र तु भेदसंख्याप्रतिपत्तौ प्रमाणम् अस्ति तत्र भवत्येव—द्वाभ्यां क्रीतम् द्विकम् । द्वाभ्यां सूर्पाभ्यां क्रीतम् द्विसूर्पिकम् । मुद्रैः क्रीतम् मौद्रिकम् । न हि एकेन मुद्रेण क्रयः संभवति ॥ १४२ ॥

## तत् अस्य मानम् । १४३ ।

'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । यत् तत् प्रथमान्तम् तत् चेत् मानं स्यात् । मानम् इयत्ता ।

प्रस्थः परिमाणम् अस्य प्रास्थिकः । खारीकः । षष्टिः जीवितमानम् अस्य षाष्टिकः । जीवितपरिमाणवृत्तेः 'तम् भावि-भूते' [ ] इति न भवति । अस्य हि षष्टिः वर्षाणि जीवितपरिमाणम् सः षष्टिम् भूतः भावी वा भवति ॥ १४३ ॥

............................................

## संख्यायाः पाठ-सूत्र-संघे । १४४ ।

संख्यावाचिनः 'तत्' इति प्रथमान्तात् 'मान'उपाधिकात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, स चेत् षष्ठ्यर्थः पाठः सूत्रम् संघः वा भवति। पाठः अधीतिः। शास्त्रम् सूत्रम् । संघः समुदायः ।

अष्टौ वाराः परिमाणम् अस्य अष्टकः पाठः । अष्टौ अध्यायाः परिमाणम् अस्य अष्टकम् **पाणिनीयं** सूत्रम् । द्वादशकं **मलयगिरीयम्** । पञ्च पुरुषाः परिमाणम् अस्य पञ्चकः संघः । पाठ-सूत्र-संघे इति किम् ? चतुष्टयी शब्दानां वृत्तिः । संघ-भेदे च अभेद-रूपतापन्ने तय-अयटोः बाधकम् इदम् । भेदरूपतापत्तौ तु यट एव । यथा द्वये देव-मनुष्याः ॥ १४४ ॥

## स्तोमे डट् । १४५ ।

संख्यायाः स्तोमे अभिधेये 'तत् अस्य परिमाणम्' इत्यस्मिन् विषये डट् प्रत्ययो भवति ।

विंशः । त्रिंशः । पञ्चदशः पक्षः ॥ १४५ ॥

## पञ्चत्-दशत् वर्गे वा । १४६ ।

'पञ्चत्'-'दशत्'शब्दौ 'डट्'प्रत्ययान्तौ निपात्येते, 'तत् अस्य परिमाणम्' इत्यस्मिन् विषये वर्गे वाच्ये । पक्षे कः ।

पञ्चत्, पञ्चकः । दशत्, दशकः वर्गः ॥ १४६ ॥

## नाम्नि । १४७ ।

संख्यावाचिनः स्वार्थे यथाविहितं प्रत्ययो भवति, समुदायः चेत् नाम स्यात् ।

पञ्च एव पञ्चकाः शकुनयः । सप्तकाः वृक्षाः ॥ १४७ ॥

## त्रैंश-चात्वारिंशम् । १४८ ।

एतौ 'ड'प्रत्ययान्तौ 'तत् अस्य परिमाणम्' इत्यस्मिन् विषये नाम्नि निपात्येते ।

त्रिंशत् अध्यायाः परिमाणम् एषाम् त्रैंशानि चात्वारिंशानि कानिचित् एवम् उच्यन्ते ॥ १४८ ॥

---

१. खण्डितं प्रतिमाति ।

## तत् अत्र अस्मै वा वृद्धि-आय-लाभ उपदा-शुल्कम् देयम् । १४९ ।

'तत्' इति प्रथमान्तात् 'अत्र' इति 'सप्तमी' अर्थे 'अस्मै' इति 'चतुर्थी' अर्थे वा यथाविहितं प्रत्ययो भवति । यत् तत् प्रथमान्तम् तत् चेत् वृद्धिः आयः लाभः उपदा शुल्कं वा देयं स्यात् । अधमर्णेन उत्तमर्णधनातिरिक्तं देयम् वृद्धिः । 'ग्राम'आदिषु नित्य-निबद्धो ग्राह्यः भागः आयः । 'पट'आदीनां मूल्यातिरिक्तं प्राप्तं द्रव्यम् लाभः । उपदा उत्कोचः । वणिजां राजदेयो भागः शुल्कम् ।

पञ्च अस्मिन् शते वृद्धिः पञ्चकं शतम् । पञ्च अस्मिन् ग्रामे आयः पञ्चकः ग्रामः । पञ्च अस्मिन् पटे लाभः पञ्चकः पटः । पञ्च अस्मिन् व्यवहारे उपदा पञ्चकः व्यवहारः । पञ्च अस्मिन् शते शुल्कम् पञ्चकं शतम् । पञ्च अस्मै चैत्राय वृद्धिः आयः लाभः उपदा शुल्कं वा देयम् पञ्चकः चैत्रः ।। १४९ ।।

## पूरणात् अर्धात् इकः । १५० ।

'पूरण'प्रत्ययान्तात् 'अर्ध'शब्दात् च 'तत्' इति प्रथमान्तात् 'अत्र' 'अस्मै' च इत्यर्थे 'इक'प्रत्ययो भवति । तत् चेत् प्रथमान्तम् वृद्धिः आयः लाभः उपदा शुल्कं वा देयं स्यात् ।

द्वितीयम् अस्मिन् अस्मै वा वृद्धिः आयः लाभः उपदा शुल्कम् वा देयम् द्वितीयिकः । 'अर्ध'शब्दः रूपकार्धवाची—अर्धिकः । अर्धिका स्त्री ।। १५० ।।

## भागात् यः च । १५१ ।

'भाग'शब्दात् 'तत् अत्र अस्मै वा वृद्धिः आयः लाभः उपदा शुल्कं वा देयम्' इति विषये 'य' प्रत्ययः इकः च भवति ।

भागः अस्मिन् अस्मै वा 'वृद्धि'आदि देयम् भाग्यः । भागिकः । 'भाग' शब्दः रूपकार्धे रूढः ।। १५१ ।।

## भृति-अंश-वस्नम् अस्य । १५२ ।

'तत्' इति प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, तत् चेत् प्रथमान्तम् भृतिः वेतनम्, अंशः भागः । वस्नं मूल्यम् वा स्यात् ।

पञ्च अस्य भृतिः पञ्चकः कर्मकरः । पञ्च अस्य अंशाः पञ्चकं नगरम् । पञ्च अस्य वस्नम् पञ्चकः पटः ।। १५२ ।।

## तस्य वापे । १५३ ।

'तस्य' इति षष्ठ्यन्तात् वापे अर्थे इकण् प्रत्ययो भवति । उप्यते अस्मिन् इति वापः ।

प्रास्थिकम् । खारीकम् ॥ १५३ ॥

**वात-पित्त-श्लेष्म-सन्निपातात् शमन-कोपने । १५४ ।**

'वात'आदिभ्यः 'तस्य' इति षष्ठ्यन्तेभ्यः शमने कोपने च अर्थे इकण् प्रत्ययो भवति । शाम्यति येन तत् शमनम् । येन च कुप्यति तत् कोपनम् ।

वातस्य शमनम् कोपनम् वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । सान्निपातिकम् ॥ १५४ ॥

**संयोग-उत्पाते हेतौ । १५५ ।**

'तस्य' इति षष्ठ्यन्तात् संयोगे उत्पाते वा हेतौ अर्थे यथाविहितं प्रत्ययो भवति । हेतुः निमित्तम् । संयोगः संबन्धः । प्राणिनाम् शुभ-अशुभसूचकः भूतपरिणामः उत्पातः ।

शतस्य हेतुः देवदत्तसंयोगः शत्यः । सोमग्रहणस्य हेतुः सोमग्रहणिकः भूमिकम्पः उत्पातः ॥ १५५ ॥

**द्विस्वर-ब्रह्म-वर्चसात् यः असंख्या-परिमाण-अश्वादेः । १५६ ।**

द्विस्वरात् संख्या परिमाण-'अश्व'आदिवर्जात् 'ब्रह्म'-'वर्चस' शब्दात् च 'तस्य' इति षष्ठ्यन्तात् संयोगे उत्पाते हेतौ अर्थे 'य' प्रत्ययो भवति ।

धनस्य हेतुः संयोगः उत्पातो वा धन्यः । यशस्यः । आयुष्यः । असंख्या-परिमाण-अश्वादेः इति किम् ? पञ्चकः । शौर्पः । आश्विकः । अश्व अश्मन् गण उमा ऊर्णा भङ्गा वर्ष इति 'अश्व'आदिः ॥ १५६ ॥

**पुत्रात् ईयः च । १५७ ।**

'पुत्र'शब्दात् षष्ठ्यन्तात् संयोगे उत्पाते हेतौ अर्थे ईयः यः च प्रत्ययो भवति ।

पुत्रस्य हेतुः संयोगः उत्पातो वा पुत्रीयः, पुत्र्यः ॥ १५७ ॥

**पृथिवी-सर्वभूमिभ्याम् अञ् । १५८ ।**

आभ्याम् तस्य हेतुः संयोगः उत्पातो वा इत्यर्थे अञ् प्रत्ययो भवति ।

पृथिव्याः हेतुः संयोगः उत्पातो वा पार्थिवः । सार्वभौमः ॥ १५८ ॥

**ईशे । १५९ ।**

'पृथिवी'-'सर्वभूमि'शब्दाभ्याम् 'तस्य' इति षष्ठ्यन्ताभ्याम् ईशे अर्थे अञ् प्रत्ययो भवति ।

पृथिव्याः ईशः पार्थिवः । सार्वभौमः ॥ १५९ ॥

## ज्ञाते । १६० ।

'पृथिवी'-'सर्वभूमि'शब्दाभ्याम् ज्ञाते अर्थे अञ् प्रत्ययो भवति । ज्ञातः विदितः-प्रकाशितः इत्यर्थः ।

पृथिव्याः ज्ञातः पार्थिवः । सार्वभौमः । कर्तृसंबन्धविवक्षायां षष्ठी ॥ १६० ॥

## लोक-सर्वलोकात् । १६१ ।

आभ्याम् 'तस्य' इति षष्ठ्यन्ताभ्याम् यथाविहितम् इकण् प्रत्ययो भवति ।

लोकस्य ज्ञातः लौकिकः । सार्वलौकिकः ॥ १६१ ॥

## अम् पचत्-संभवत्-अवहरति । १६२ ।

'अम्'अन्तात् 'पचत्'आदौ अर्थे यथाविहितं प्रत्ययो भवति ।

प्रस्थं पचति संभवति अवहरति वा प्रास्थिकम् । संभवति—अवगृह्णाति—इत्यर्थः । अत एव अयं सकर्मकः । अवहारः उपसहरणम् ॥ १६२ ॥

## पात्र-आढक-आचितात् ईनः वा । १६३ ।

'पात्र'आदिभ्यः 'अम्'अन्तेभ्यः 'पचत्'आदौ अर्थे वा 'ईन'प्रत्ययो भवति । पक्षे इकण् ।

पात्रीणः, पात्रिकः । आढकीनः, आढकिकः । आचितीनः, आचितिकः ॥ १६३ ॥

## द्विगोः ईन-इकटौ । १६४ ।

'पात्रादि'अन्तात् द्विगोः 'अम्'अन्तात् 'पचत्'आदौ अर्थे 'ईन'-'इकट्' प्रत्ययौ वा भवतः । पक्षे इकण् ।

द्वे पात्रे पचति संभवति अवहरति वा द्विपात्रीणः, द्विपात्रिकः, द्विपात्रः । द्व्याढकीनः, द्व्याढकिकः, द्व्याढकः । द्व्याचितीनः, द्व्याचितिकः, द्व्याचितः ॥१६४॥

## श्लुक् च कुलिजात् । १६५ ।

'कुलिज'शब्दान्तात् द्विगोः 'अम्'अन्तात् 'पचत्'आदौ अर्थे 'ईन'-'इकट्' प्रत्ययौ वा भवतः पक्षे इकण् तस्य च वा श्लुक् ।

द्विकुलिजीनः, द्विकुलिजिकः, द्वैकुलिजिकः, द्विकुलिजः ॥ १६५ ॥

## हरत्-वहत्-आवहत्सु वंशादेः भारात् । १६६ ।

'भारभूत'अर्थवाचिनः 'वंश'आदेः 'अम्'अन्तात् 'हरत्'आदौ अर्थे यथाविहितं प्रत्ययो भवति ।

वंशान् भारभूतान् हरति वहति आवहति वा वांशिकः । भारात् इति किम् ? एकं वंशं हरति ।

अपरः अर्थः—'वंश'आदिभ्यः परः यः 'भार'शब्दः तदन्तात् 'अम्'अन्तात् 'हरत्'आदौ अर्थे यथाविहितं प्रत्ययो भवति । वंशभारं हरति वहति आवहति वा वांशभारिकः । कौटभारिकः । वंशादेः इति किम् ? भारं वहति । भारात् इति किम् ? वंशं हरति । हरतिः देशान्तरप्रापणे चौर्ये वा । वहतिः उत्क्षिप्य धारणे । आवहतिः उपादाने । वंश कुट बल्वज मूल स्थूणा अक्ष अश्मन् इक्षु खट्वा इति 'वंश'आदिः ॥ १६६ ॥

## द्रव्य-वस्नाभ्याम् क-इकौ । १६७ ।

आभ्याम् 'अम्' अन्ताभ्याम् 'हरत्'आदौ यथासंख्यम् 'क'-'इक' प्रत्ययौ भवतः ।

द्रव्यं हरति वहति आवहति द्रव्यकः । एवम् वस्निकः ॥ १६७ ॥

## द्रोणात् पचति अञ् च । १६८ ।

'द्रोण'शब्दात् 'अम्'अन्तात् 'पचति'अर्थे अञ् चकारात् अधिकृतश्च इकण् प्रत्ययो भवति ।

द्रोणं पचति द्रौणः, द्रौणिकः ॥ १६८ ॥

## अर्हति । १६९ ।

'अम्'अन्तात् 'अर्हति'अर्थे यथाविहितं प्रत्ययो भवति ।

वस्त्रम् अर्हति वास्त्रिकः । शत्यः । शतिकः । 'भाजनम् अर्हति' इत्यादौ अनभिधानात् न भवति ॥ १६९ ॥

## यज्ञ-दण्डादिभ्याम् इय-यौ । १७० ।

आभ्याम् 'अम्'अन्ताभ्याम् 'अर्हति'अर्थे यथासंख्यम् 'इय'-'य' प्रत्ययौ भवतः ।

यज्ञम् अर्हति यज्ञियः । दण्ड्यः । मुसल्यः । दण्ड मुसल मधुपर्क कशा अर्घ मेधा उदक इभ युग इति 'दण्ड'आदिः ॥ १७० ॥

## पात्रात् । १७१ ।

'पात्र'शब्दात् 'अम्'अन्तात् 'अर्हति' अर्थे इय-यौ प्रत्ययौ भवतः ।

पात्रियः, पात्र्यः ॥ १७१ ॥

## कैडङ्कर-दक्षिणा-स्थालीबिलात् ईय-यौ । १७२ ।

'कडङ्कर'आदिभ्यः 'अम्'अन्तेभ्यः 'अर्हति'अर्थे ईय-यौ प्रत्ययौ भवतः ।

कडङ्करीयः, कडङ्कर्यः बलीवर्दः । कडङ्करः माषादिकाष्ठम् । दक्षिणीयः, दक्षिण्यः गुरुः । स्थालीबिलीयाः स्थालीबिल्याः तन्दुलाः ॥ १७२ ॥

## कौपीन-शालीन-आर्त्विजीनाः । १७३ ।

एते 'अर्हति'अर्थे 'ईनञ्'प्रत्ययान्ता निपात्यन्ते । कूपप्रवेशम् अर्हति कौपीनः— पापस्य, पायु-उपस्थस्य, तदावरणचीवरखण्डस्य च वाचकः । शालाप्रवेशनम् अर्हति शालीनः अधृष्टः । शालीनाभार्यः । ऋत्विज्'-'ऋत्विक्कर्म' शब्दात् वा ईनञ् आर्त्विजीनः— ऋत्विग् एव ॥ १७३ ॥

## नित्यम् 'छेद'आदेः । १७४ ।

'छेद'आदिभ्यः 'अम्'अन्तेभ्यः 'नित्यम् अर्हति'अर्थे यथाविहितं प्रत्ययो भवति ।

छेदं नित्यम् अर्हति छैदिकः । छेद भेद दोह द्रोह कर्ष विकर्ष विप्रकर्ष प्रकर्ष प्रयोग विप्रयोग संप्रयोग नर्त प्रेक्षण संप्रश्न विप्रश्न इति 'छेद'आदिः ॥ १७४ ॥

## वैरङ्गिकः । १७५ ।

'विराग'शब्दात् 'नित्यम् अर्हति'अर्थे इकण् प्रत्ययः 'विरङ्ग'आदेशश्च निपात्यते ।

विरागम् नित्यम् अर्हति वैरङ्गिकः ॥ १७५ ॥

## शीर्षच्छेदात् यः वा । १७६ ।

'शीर्षच्छेद' शब्दात् 'नित्यम् अर्हति' अर्थे यः वा भवति ।

शीर्षच्छेद्यः, शैर्षच्छेदिकः ॥ १७६ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्धिते नवमः पादः समाप्तः ॥

---

१. "कडङ्कर-दक्षिणात् छ च"–५।१।६९। 'कडंकरीयो गौ.'—काशिका । "कडङ्करो बुसं क्लीबे"—अमर० द्वितीयकाण्ड, वैश्यव० श्लो० २२। "करङ्कर इति हरदत्तपाठः, द्वे पलालादिक्षोदस्य'भूस'इति ख्यातस्य"—अमरटीका । २ "मुद्गादिकाष्ठम् कडङ्गरम्"—३।४।६६। जैनेन्द्रे । कडङ्गरो माषादिकाष्ठम् । ३।२।१७६। शा० चि० । ६।४।१८१। हैमसूत्रेऽपि एवमेव । ३ "'ऋत्विज्'शब्दात् 'ऋत्विक्कर्म'शब्दाद् वा खञ् प्रत्ययः, कर्म'शब्दस्य लोपे निपात्यते"–३।२।१७७। शा० अ० ।

# तद्धिते दशमः पादः

## दुः 'त्यद्'आदिः । १ ।

'त्यद्'आदिः दुःसंज्ञो भवति ।

त्यदीयः । तादायनिः ॥ १ ॥

## यस्य स्वरेषु आदिः वृद्धिः । २ ।

यस्य शब्दस्य स्वराणाम् आदिः स्वरः वृद्धिः सः दुसंज्ञो भवति ।

आम्रगुप्तायनिः । ऐतिकायनीयः । औपगवीयः । बुद्धिसंनिकृष्टस्वरसंनिवेशापेक्षम् आदित्वं विज्ञायते ततः व्यञ्जनादेः अपि संज्ञा सिद्धा । आदिः इति किम् ? इह न भवति– सभासंनयने भवः साभासंनयनः ॥ २ ॥

## देशे एव एङ् 'ईय'आदौ । ३ ।

देशे एव वर्तमानस्य यस्य शब्दस्य स्वराणाम् आदिः स्वरः एङ् भवति सः 'ईय' आदौ विधातव्ये दुसंज्ञो भवति ।

सैपुरिकी, सैपुरिका । सेपुरं वाहीकग्रामः । देशे इति किम् ? दैववाचकं नन्द्यध्ययनम् । एवकारः अन्यत्र वृत्तिव्यवच्छेदार्थः तेन देशे अन्यत्र च वर्तमानस्य न भवति । क्रोडः नाम वाहीकग्रामः तत्र भवः क्रौडः । 'क्रोड' शब्दः स्वाङ्गेऽपि वर्तते । 'ईय' आदौ इति किम् ? 'आयनिञ्' आदौ न भवति ॥ ३ ॥

## प्राग्देशे । ४ ।

प्राग्देशे वर्तमानस्य यस्य शब्दस्य स्वराणाम् आदिः स्वरः एङ् सः 'ईय'आदौ प्रत्यये विधातव्ये दुसंज्ञो भवति ।

क्रोडः नाम प्राग्ग्रामः तत्र भवः क्रोडीयः ॥ ४ ॥

## नाम वा । ५ ।

संव्यवहाराय हठात् नियुज्यते यद् 'देवदत्त'आदि तत् नाम दुसंज्ञं वा भवति । षण्नयान् आहुः सिद्धसेनीयाः, सैद्धसेनाः ॥ ५ ॥

## दोः 'भव'आदौ ईयः । ६ ।

'दु'संज्ञकात् 'भव'आदौ अर्थे 'ईय'प्रत्ययः भवति ।

देवदत्तीयः । तदीयः । मोजकटीयः ॥ ६ ॥

---

१. 'क्रोडं नाम उदग्ग्रामः' १।१।२०। शा० अ० ।

## 'उष्ण'आदिभ्यः कालात् । ७ ।

'उष्ण'आदिपूर्वपदात् 'काल'अन्तात् 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति ।

उष्णकालीयः । 'उष्ण'आदयः प्रयोगगम्याः ॥ ७ ॥

## 'वि'आदिभ्यः णिक-इकणौ । ८ ।

'वि'आदिपूर्वात् 'काल'शब्दात् 'भव'आदौ अर्थे 'णिक'-'इकण्' प्रत्ययौ भवतः ।

वैकालिकः, वैकालिका । वैकालिकी । ऐदंकालिकः । 'वि'आदयः प्रयोग-गम्याः ॥ ८ ॥

## 'काशि'आदेः । ९ ।

एभ्यः दुसंज्ञकेभ्यः 'भव'आदौ अर्थे 'णिक'-'इकण्' प्रत्ययौ भवतः ।

काशिकः, काशिका, काशिकी । काशि चेदि देवदत्त सांयाति सांवाह अच्युत मोदमान श्वकुलाल हस्तिकर्षू हिरण्य करण अरिंदम सधमित्र सिन्धुमित्र दासमित्र छागमित्र शौवावतान तारङ्गि युवराज उपराज देवराज इति 'काशि'आदिः ॥ ९ ॥

## वाहीकेषु ग्रामात् । १० ।

वाहीकदेशे यः ग्रामः तद्वाचिदुसंज्ञकात् भवादौ अर्थे 'णिक'-'इकण्'प्रत्ययौ भवतः ।

शाकलिकः । सैपुरिकः । दोः इति किम् ? देवदत्तं नाम वाहीकग्रामः तत्र जातः दैवदत्तः ॥ १० ॥

## वा उशीनरेषु । ११ ।

उशीनरेषु यः ग्रामः तद्वाचिनः दुसंज्ञकात् 'भव'आदौ अर्थे 'णिक'-'इकण्' प्रत्ययौ वा भवतः ।

सौदर्शनिकः, सौदर्शनिका, सौदर्शनिकी, सुदर्शनीयः ॥ ११ ॥

## भवतः कण-ईयसौ । १२ ।

'भवत्'शब्दात् दुसंज्ञकात् 'भव'आदौ अर्थे 'कण्'-'ईयस्' प्रत्ययौ भवतः ।

भावत्कः । भवदीयः । दोः इति किम् ? भवतः इदम् भावतम् ॥ १२ ॥

## 'नदी'आदेः एयण् । १३ ।

एभ्यः 'भव'आदौ अर्थे एयण् प्रत्ययो भवति ।

नादेयः । नदी मही वाराणसी कौशाम्बी वनवासी खादिरी पूर्वनगरी पावा मावा दार्वा सेतकी इति 'नदी'आदिः ॥ १३ ॥

**पश्चात्-पुरस्-दक्षिणातः त्यण् । १४ ।**

एभ्यः 'भव'आदौ अर्थे त्यण् प्रत्ययो भवति ।

पाश्चात्यः । पौरस्त्यः । दाक्षिणात्यः । 'पश्चात्'-'पुरस्'साहचर्यात् 'दक्षिणा' शब्दः अव्ययं गृह्यते ॥ १४ ॥

**क-इह-अमा-तस्-त्रात् त्यच् । १५ ।**

एभ्यः 'भव'आदौ अर्थे त्यच् प्रत्ययः भवति ।

क्त्यः । इहत्यः । अमात्यः । कुतस्त्यः । तत्रत्यः । चकारः–'त्ये'-'यकात्' [नाम-प्रकरणे षष्ठपादे सूत्रम् ३६ ] इत्यत्र त्यण्-त्यचोः सामान्यग्रहणार्थः ॥ १५ ॥

**नेः ध्रुवे । १६ ।**

'नि'शब्दात् ध्रुवे 'भव'आदौ अर्थे त्यच् प्रत्ययो भवति ।

नियतं भवम नित्यम ॥ १६ ॥

**निसः गते । १७ ।**

'निस्'शब्दात गते अर्थे त्यच् प्रत्ययो भवति ।

निष्ट्यः[2] ॥ १७ ॥

**वा ऐषमस्-ह्यस्-श्वसः । १८ ।**

एभ्यः 'भव'आदौ अर्थे वा त्यच् प्रत्ययो भवति ।

ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम्, ह्यस्तनम् । श्वस्त्यम्, श्वस्तनम्, शौवस्तिकम् ॥ १८ ॥

**राष्ट्रात् इयः । १९ ।**

'राष्ट्र'शब्दात् 'भव'आदौ अर्थे 'इय'प्रत्ययो भवति ।

राष्ट्रियः ॥ १९ ॥

**ग्रामात् ईनञ्-यौ । २० ।**

'ग्राम'शब्दात् 'भव'आदौ अर्थे 'ईनञ्'-'य'प्रत्ययौ भवतः ।

---

१. संपूर्णं सूत्रमेवम्– "त्य-ह्न-अज-मत्र-अधातु-त्यच-कात्" नामप्रकरणे षष्ठपादे सूत्रम् ३६ ।
२. "निर्गतो वर्णाश्रमादिभ्य इति निष्ट्यश्चण्डालादिः" ३।१।९। शा० अ० ।

ग्रामीणः, ग्राम्यः । ग्रामीणाभार्यः । ञकारः पुंभावप्रतिषेधार्थः ॥ २० ॥

**'कत्रि'आदेश्च एयकञ् । २१ ।**

'कत्रि'आदिभ्यः 'ग्राम'शब्दात् च 'भव'आदौ अर्थे एयकञ् प्रत्ययो भवति ।

कात्रेयकः । पौष्करेयकः । ग्रामेयकः । कत्रि पुष्कर पौदन कुण्डिना नगर महिष्मती इति 'कत्रि'आदिः ॥ २१ ॥

**'कुण्ड्या'आदेः यलुक् च । २२ ।**

'कुण्ड्या'आदेः 'भव'आदौ अर्थे एयकञ् प्रत्ययो भवति, यकारस्य च लुक् ।

कौण्डेयकः । कुण्ड्या कुण्या उञ्ज्या भाण्ड्या ग्रामकुड्या तृण्या धन्या वल्या सुल्या इति 'कुण्ड्या'आदिः ॥ २२ ॥

**वृजि-मद्रात् देशात् कः । २३ ।**

आभ्याम् देशवाचिभ्याम् 'भव'आदौ अर्थे 'क'प्रत्ययो भवति ।

वृजिकः । मद्रकः । देशात् इति किम् ? मनुष्यवृत्तेः वार्जः । माद्रः ॥ २३ ॥

**उवर्णात् इकण् । २४ ।**

'उवर्ण'अन्तात् देशवाचिनः 'भव'आदौ अर्थे इकण् प्रत्ययो भवति ।

निषादकर्ष्वाम् भवः नैषादकर्षुकः । नापितवास्तुः—वाहीकग्रामः—तत्र भवः नापितवास्तुकः ॥ २४ ॥

**दोः एव प्राचः । २५ ।**

प्राग्देशवाचिनः उवर्णान्तात् दुसंज्ञकात् एव 'भव'आदौ अर्थे इकण् प्रत्ययो भवति ।

आढकजम्बुकः । नापितवास्तुकः । पूर्वेण सिद्धे नियमार्थं वचनम् , तेन मल्लवास्तु प्राग्ग्रामः तत्र भवः माल्लवास्तवः । एवकारः इष्टनियमार्थः—दोः प्राचः एव इति मा भूत् ॥ २५ ॥

**'ई'-'र्'उपान्त्यात् अकञ् । २६ ।**

ईकारान्तात् 'र्' उपान्त्यात् च प्राग्देशवाचिनः दुसंज्ञकात् अकञ् प्रत्ययो भवति।

काकन्दी—काकन्दकः । माकन्दी—माकन्दकः । रेफोपान्त्यात्—पाटलिपुत्रकः । ऐकचक्रकः ॥ २६ ॥

**'वह'-'पुर'-'प्रस्थ'अन्त-'य'उपान्त्य-धन्वनः । २७ ।**

'वह'अन्तात् 'पुर'अन्तात् 'प्रस्थ'अन्तात् 'य'उपान्त्यात् 'धन्व'वाचिनः च देशवाचिनः दुसंज्ञकात् 'भव'आदौ अर्थे वुञ्—अकञ्— प्रत्ययो भवति ।

पैलुवहकः । नान्दीपुरकः । मालाप्रस्थकः । कांस्यकः । पारेधन्वकः । आपारेधन्वकः । 'पुर'ग्रहणम् अप्राच्यार्थम् । प्राच्यात् हि०'र'उपान्त्यात् [ पूर्वसूत्रम् २६ ] इत्येव सिद्धम् ॥ २७ ॥

## राष्ट्रेभ्यः । २८ ।

राष्ट्रेभ्यः देशेभ्यः दुसंज्ञकेभ्यः 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति ।

आभिसारकः । बहुवचनम् वुञः प्रकृतिबहुत्वं द्योतयत् अपवादविषयेऽपि प्रापणार्थम्—आभिसारगर्तकः, अत्र 'गर्त'उत्तरपदलक्षणः ईयः प्राप्नोति । राष्ट्रसमुदायः न राष्ट्रग्रहणेन गृह्यते इति इह न भवति—काशिकोशलीयः ॥ २८ ॥

## बहुविषयेभ्यः । २९ ।

'दोः' इति निवृत्तम् । राष्ट्रेभ्यः बहुविषयेभ्यः 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति ।

अङ्गेषु भवः आङ्गकः । वाङ्गकः । विषयग्रहणम् अनन्यत्रभावार्थम् । वर्तनी च वर्तनी च वर्तनी च वर्तन्यः तत्र भवः वर्तनः । बहुवचनम् अपवादविषयेऽपि प्रापणार्थम्—त्रैगर्तकः । अ'दु'अर्थं वचनम्, दोः तु पूर्वेण सिद्धम् ॥ २९ ॥

## अरण्यात् पथि-अध्याय-न्याय-विहार-इभ-नरे । ३० ।

'अरण्य'शब्दात् देशवाचिनः 'भव'आदौ अर्थे 'पथि'आदौ वाच्ये वुञ् प्रत्ययो भवति ।

आरण्यकः पन्थाः अध्यायः न्यायः विहारः हस्ती नरः वा । 'पथि'आदौ इति किम् ? आरण्याः सुमनसः ॥ ३० ॥

## गोमये वा । ३१ ।

'अरण्य'शब्दात् देशवाचिनः 'भव'आदौ अर्थे गोमये वुञ् प्रत्ययो वा भवति ।

आरण्यकः आरण्यः वा गोमयः ॥ ३१ ॥

## कुरु-युगन्धरात् । ३२ ।

आभ्याम् देशवाचिभ्याम् 'भव'आदौ अर्थे वुञ् प्रत्ययो वा भवति ।

कौरवकः, कौरवः । यौगन्धरकः, यौगन्धरः ॥ ३२ ॥

## नगरात् कुत्सा-दाक्ष्ये । ३३ ।

'नगर'शब्दात् देशवाचिनः 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति, प्रत्ययार्थस्य कुत्सायाम् दाक्ष्ये च गम्यमाने । दाक्ष्यम्–नैपुण्यम् ।

केने मनुष्येण अयम् इह नगरे मुषितः ? संभाव्यते एतद् नागरके, चौरा हि नागरका भवन्ति । केन मनुष्येण इदं चित्रं लिखितम् इह नगरे ? संभाव्यते एतद् नागरके, नागरका दक्षा भवन्ति । कुत्सा-दाक्ष्ये इति किम् ? नागरः पुरुषः ॥ ३३ ॥

## समुद्रात् नृ-नावोः । ३४ ।

'समुद्र'शब्दात् देशवाचिनः 'भव'आदौ नरि नावि च अर्थे वुञ् प्रत्ययो भवति ।

सामुद्रकः मनुष्यः । सामुद्रिका नौः । नृ-नावोः इति किम् ? सामुद्रं लवणम् ॥३४॥

## सौवीरेषु कूलात् । ३५ ।

'सौवीर'देशवाचिनः 'कूल'शब्दात् 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति ।

कौलकः । सौवीरेषु इति किम् ? कौलः अन्यत्र ॥ ३५ ॥

## साल्वात् गो-यवागू-अपत्तौ । ३६ ।

'साल्व'शब्दात् देशवाचिनः गवि यवाग्वाम् अपत्तौ च 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति ।

साल्वकः गौः । साल्विका यवागूः । साल्वकः मनुष्यः । गो यवागू-अपत्तौ इति किम् ? साल्वाः व्रीहयः । साल्वः पत्तिः ॥ ३६ ॥

## 'धूम'आदेः । ३७ ।

'धूम'आदिभ्यः देशवाचिभ्यः 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति ।

धौमकः । षाडण्डकः । धूम षडण्ड षडाण्ड अर्जुनाव दाण्डायनस्थली घोषस्थली मानकस्थली राजगृह सत्रासह तक्षाली अर्ज्ञाकुल द्व्याहाव त्र्याहाव संस्फीय चर्चड गर्त वर्ज्य सकुन्ति विदेह दूर आराज्ञी अवया कुक्षि अन्तरीप अरुण उज्जयनी दक्षिणापथ साकेत इति 'धूम'आदिः ॥ ३७ ॥

## 'कच्छ'-'अग्नि'-'वक्त्र'-'वर्त'उत्तरपदात् । ३८ ।

'कच्छ'आदिउत्तरपदेभ्यः देशवाचिभ्यः 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति ।

पैप्पलकच्छकः । काण्डाग्नकः । ऐन्दुवक्त्रकः । बाहुलवर्तकः । 'उत्तरपद'ग्रहणम् अ'बहु'पूर्वार्थम्–ईषत् असमाप्तः कच्छः बहुकच्छः तत्र भवः इति वुञ् न भवति ॥३८॥

---

१. "केनाऽयं मुषितः पन्थाः गात्रे पक्ष्मालिधूसरः"–४।२।१२८। काशिकायाम् एतत् पद्यम् २. "केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत्"–एतदपि पद्यं तत्रैव ।

## 'कच्छ'आदेः नृ-नृस्थे । ३९ ।

'कच्छ'आदिभ्यः 'भव'आदौ अर्थे नरि नृस्थे च वुञ् प्रत्ययो भवति ।

काच्छकः मनुष्यः। काच्छकम् अस्य हसितम्। कच्छ सिन्धु वर्णु मधुमत् कम्बोज साल्व कुमुषण्ड कास्मीर विजापक द्वीप अनूप अजवाह कुलूत रङ्कु इति 'कच्छ' आदिः ॥ ३९ ॥

## 'क'उपान्त्यात् च अण् । ४० ।

'क'उपान्त्यात् कच्छादेश्च 'भव'आदौ अर्थे अण् प्रत्ययो भवति ।

ऋषिकः जनपदः तत्र भवः आर्षकः। माहिषकः। कच्छादि—काच्छः। सैन्धवः॥४०॥

## पृथिवीमध्यात् निवासात् चरणे मध्यमश्च अस्य । ४१ ।

पृथिवीमध्यात् निवासभूतात् देशात् 'भव'आदौ चरणे निवस्तरि वाच्ये अण् प्रत्ययो भवति, मध्यमश्च अस्य 'पृथिवीमध्य'शब्दस्य आदेशः ।

पृथिवीमध्यम् निवासः अस्य माध्यमः चरणः । निवासात् इति किम् ? पृथिवीमध्यात् आगतं चरणं मध्यमीयम् । चरणे इति किम् ? पृथिवीमध्यं निवासः अस्य चैत्रस्य मध्यमीयः चैत्रः ॥ ४१ ॥

## ईयः । ४२ ।

'पृथिवीमध्यात् मध्यमश्चास्य' इति वर्तते, न 'निवासात् चरणे' इति । पृथिवीमध्यात् देशात् 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति । मध्यमश्च अस्य आदेशः ।

पृथिवीमध्ये भवः जातो वा मध्यमीयः ॥ ४२ ॥

## 'गह'आदिभ्यः । ४३ ।

'गह'आदिभ्यः देशवाचिभ्यः 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति ।

गहीयः। अन्तस्थीयः। गह गर्त अन्तस्थ विषम अङ्ग मगध शुक्लपक्ष पूर्वपक्ष अपरपक्ष अवमशाल एकग्राम एकवृक्ष एकपलाश इष्वग्र दन्ताग्र इष्वनीक अवस्यन्द कामप्रस्थ खाडायनि खोडेरणि लावेरणि सैसरि सौङ्गि आसुरि आहिंसि आमित्रि व्याडि भौजि आवेन्धि आश्वस्थि औद्गाहमानि औपबिन्दवि आग्निशर्मि वाचरकि वाल्मीकि क्षेमवृत्ति उत्तर अन्तर मुखतस् पार्श्वतस् एकतस् इति 'गह'आदिः । बहुवचनम् आकृतिगणार्थम् ॥४३॥

## पर्वतात् । ४४ ।

'पर्वत'शब्दात् देशवाचिनः 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति ।

पर्वतीयः ना । पर्वतीयः राजा ॥ ४४ ॥

## अनरि वा । ४५ ।

'पर्वत'शब्दात् 'भव'आदौ अर्थे अनरि 'ईय'प्रत्ययो वा भवति ।

पर्वतीयम्, पार्वतम् उदकम् ॥ ४५ ॥

## पर्ण-कृकणात् भारद्वाजात् । ४६ ।

'पर्ण'-'कृकण'शब्दाभ्याम् भारद्वाजदेशवाचिभ्याम् 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति ।

पर्णीयः । कृकणीयः । भारद्वाजात् इति किम् ? पार्णः । कार्कणः ॥ ४६ ॥

## 'कट'आदेः प्राचः । ४७ ।

'कट'पूर्वपदात् 'प्राग्'देशवाचिनः 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति ।

कटनगरीयः ॥ ४७ ॥

## दोः 'कन्था'-'पलद'-'नगर'-'ग्राम'-ह्रद'उत्तरपद-'क'-'ख'-उपान्त्यात् ।४८।

'कन्था'आदिउत्तरपदात् 'क'कारउपान्त्यात् 'ख'कारउपान्त्यात् च 'दु'संज्ञकात् देशवाचिनः 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति ।

दाक्षिकन्थीयः । दाक्षिपलदीयः । दाक्षिनगरीयः । दाक्षिग्रामीयः । दाक्षिह्रदीयः । आरोहणकीयः । कौटिशिखीयः । दोः इति किम् ? आर्षिकः ॥ ४८ ॥

## 'गर्त'उत्तरपदात् । ४९ ।

अस्मात् देशवाचिनः 'भव'आदौ अर्थे 'ईय'प्रत्ययो भवति । वृकगर्तीयः । शृगालगर्तीयः ॥ ४९ ॥

## स्व-पर-जन-देव-राज्ञः अकीयः । ५० ।

एभ्यः 'भव'आदौ 'अकीय'प्रत्ययो भवति ।

स्वकीयः । परकीयः । जनकीयः । देवकीयः । राजकीयः ॥ ५० ॥

## 'रूप्य'उत्तरपद-अरण्यात् णः । ५१ ।

'रूप्य'उत्तरपदात् अरण्यात् च 'भव'आदौ अर्थे 'ण'प्रत्ययो भवति ।

वार्करूप्यः । आरण्याः पशवः ॥ ५१ ॥

---

१. "जन-पर-राज्ञः अकञः" ।३।१।२५। शा० चि० । "अकारः पुंभावार्थः" । "इह केचित् 'स्व'-'देव'ग्रहणम् इच्छन्ति--" शा० चि० । अत्र श्रीमलयगिरिः न शाकटायनम् अनुसरति ।

## 'दिग्'आदेः अनाम्नः । ५२ ।

'दिक्'पूर्वपदात् अनाम्नः 'भव'आदौ अर्थे णो भवति ।

पौर्वशालः । अनाम्नः इति किम्? पूर्वेषुकामशमी । अपरेषुकामशमी ॥ ५२ ॥

## मद्रात् अञ् । ५३ ।

'दिक्'पूर्वपदात् 'मद्र'शब्दात् 'भव'आदौ अर्थे अञ् प्रत्ययो भवति ।

पौर्वमद्रः ॥ ५३ ॥

## उदग्ग्रामात् यकृल्लोम्नः । ५४ ।

उदग्ग्रामवाचिनः 'यकृल्लोमन्'शब्दात् 'भव'आदौ अर्थे अञ् प्रत्ययो भवति ।

याकृल्लोमः । उदग्ग्रामात् इति किम्? अन्यस्मात् अण् एव—याकृल्लोमनः ॥५४॥

## गौष्ठी-तैकी-गोमती-शूरसेन-वाहीकात् । ५५ ।

एभ्यः 'भव'आदौ अर्थे अञ् प्रत्ययो भवति ।

गौष्ठः । तैकः । गौमतः । शौरसेनः । वाहीकः ॥ ५५ ॥

## 'शकल'आदेः वृद्धे । ५६ ।

एभ्यः वृद्धप्रत्ययान्तेभ्यः 'भव'आदौ अर्थे अञ् प्रत्ययो भवति । 'शकल'आदिः गर्गादिअन्तर्गणः ।

शकलस्य अपत्यम् वृद्धम् शाकल्यः तस्य छात्राः शाकलाः । काण्ठाः इत्यादि । वृद्धे इति किम्? शकलः देवता अस्य शाकलः तस्य इदम् शाकलीयम् ॥ ५६ ॥

## इञः । ५७ ।

वृद्धे यः इञ् तदन्तात् 'भव'आदौ अर्थे अञ् प्रत्ययो भवति । दक्षस्य अपत्यम् वृद्धम् दाक्षिः तस्य छात्राः दाक्षाः । वृद्धे इति किम्? सुतंगमेन निर्वृत्ता सौतंगमिः तत्र भवम् सौतंगमीयम् । औपगवेः यूनः छात्राः औपगवीयाः । शालङ्कायनेः छात्राः शालङ्काः इत्यत्र 'पैल'आदिपाठात् आयनणि लुप्ते यद्यपि 'इञ्'अन्तं यूनि वर्तते तथापि "इञ् वृद्धे" [ ] इति अञ् प्रत्ययो भवति ॥ ५७ ॥

## न द्विस्वरात् प्राग्-भरतेषु । ५८ ।

प्राच्यगोत्रे भरतगोत्रे च यद् वर्तते द्विस्वरम् वृद्ध'इञ्'अन्तम् तस्मात् अञ् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते ।

प्राक्षु—चैकीयाः । पौर्ष्पीयाः । भरतेषु—काशीयाः । द्विस्वरात् इति किम् ? पात्रागाराः । मान्थरेषणाः । प्राग्-भरतेषु इति किम् ? दाक्षाः । 'प्राग्'ग्रहणे भरतानां न ग्रहणम् इति 'भरत'ग्रहणम् ॥ ५८ ॥

### दूरात् एत्यः । ५९ ।

'दूर'शब्दात् 'भव'आदौ अर्थे 'एत्य'प्रत्ययो भवति ।

दूरेत्यः ॥ ५९ ॥

### उत्तरात् आहञ् । ६० ।

'उत्तर'शब्दात् 'भव'आदौ अर्थे 'आहञ्'प्रत्ययो भवति ।

औत्तराहः । औत्तराहा । 'औत्तराही' इति 'उत्तराह'शब्दात् 'भव'अर्थे अणि ॥६०॥

### पार-अवार-अवार-पारेभ्यः ईनः । ६१ ।

एभ्यः 'भव'आदौ अर्थे 'ईन'प्रत्ययो भवति ।

पारीणः । अवारीणः । पारावारीणः । अवारपारीणः ॥ ६१ ॥

### प्राग्-अपाग्-उदक्-प्रतीग्-द्युभ्यः यः । ६२ ।

'प्राग्'आदिभ्यः 'भव'आदौ अर्थे 'य'प्रत्ययो भवति ।

प्राच्यः । अपाच्यः । उदीच्यः । प्रतीच्यः । दिव्यः । कालवाचिनस्तु अव्ययात् परत्वात् तनट्—प्राक्तनम् ॥ ६२ ॥

### कन्थाया इकण् ॥ ६३ ॥

'कन्था'शब्दात् 'भव'आदौ अर्थे इकण् प्रत्ययो भवति ।

कान्थिकः ॥ ६३ ॥

### वर्णौ वुञ् । ६४ ।

'वर्णु'नदसमीपो वर्णुः, तद्विषयात् 'कन्था'शब्दात् 'भव'आदौ अर्थे वुञ् प्रत्ययो भवति ।

कान्थकः ॥ ६४ ॥

### कापिश्य-ऊर्दि-पर्दि-वल्हेः आयनणट् । ६५ ।

'कापिश्य'आदिभ्यः 'भव'आदौ अर्थे आयनणट् प्रत्ययो भवति ।

---

१. "कापिश्याः ष्फक्"–काशिका ४।२।९९। हैमेऽपि "कापिश्याः" ६।३।१४। एतयोः 'कापिशी'शब्दो विवक्षितः । अत्र शाकटायने च 'कापिश्य'शब्दो विवक्षितः—शाक० ३।१।१४। "कपिशा मर्कटा अत्र सन्ति कापिशी अटवी"–हैमम् ।

कापिश्यायनः । औदायनः । पादायनः । वाल्हायनः । टकारः ङ्यर्थः—कापिशायनी द्राक्षा ॥ ६५ ॥

**रङ्कोः प्राणिनि वा । ६६ ।**

'रङ्कु'शब्दात् 'भव'आदौ प्राणिनि अर्थे आयनणट् प्रत्ययो भवति ।

राङ्कवायणो गौः । प्राणिनि इति किम्? राङ्कवः कम्बलः ॥ ६६ ॥

**यः अर्घात् । ६७ ।**

'अर्घ'शब्दात 'भव'आदौ अर्थे 'य'प्रत्ययो भवति ।

अर्घ्यम् ॥ ६७ ॥

**सादेः इकण् । ६८ ।**

सपूर्वशब्दात् 'अर्ध'शब्दात 'भव'आदौ अर्थे इकण् प्रत्ययो भवति ।

पौष्करार्धिकः । वैजयार्धिकः ॥ ६८ ॥

**'दिग्'आदेः तौ । ६९ ।**

'दिक्'पूर्वात् 'अर्ध'शब्दात 'भव'आदौ अर्थे तौ 'इकण्'-'य'प्रत्ययौ भवतः ।

पौर्वार्धिकम्, पूर्वार्ध्यम् ॥ ६९ ॥

**'पर'-'अवर'-'अधम'-'उत्तम'आदेः यः । ७० ।**

'पर'आदिपूर्वात् 'अर्ध'शब्दात् 'भव'आदौ अर्थे 'य'प्रत्ययो भवति ।

परार्ध्यम् । अवरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् ॥ ७० ॥

**ग्राम-राष्ट्रस्य अण् । ७१ ।**

ग्रामस्य राष्ट्रस्य च यः एकदेशवाची 'अर्ध'शब्दः तदन्तात् 'भव'आदौ अर्थे अण् प्रत्ययो भवति ।

ग्रामस्य राष्ट्रस्य वा पौर्वार्धः ॥ ७१ ॥

**इकण् । ७२ ।**

ग्रामस्य राष्ट्रस्य वा एकदेशवाचिनः 'अर्ध'शब्दान्तात् 'दिक्'पूर्वात् 'भव'आदौ अर्थे इकण् प्रत्ययो भवति ।

ग्रामस्य राष्ट्रस्य वा पौर्वार्धिकः ॥ ७२ ॥

**ऊर्ध्वात् दम-देहात् इकण् मक् च ऊर्ध्वस्य वा । ७३ ।**

'ऊर्ध्व'शब्दात् पराभ्याम् 'दम'-'देह'शब्दाभ्याम् 'भव'आदौ अर्थे इकण् प्रत्ययो भवति, 'ऊर्ध्व'शब्दस्य मक् आगमः वा ।

और्ध्वंदमिकः, और्ध्वदमिकः । और्ध्वंदेहिकः, और्ध्वदेहिकः ॥ ७३ ॥

## 'समान'पूर्वात् 'लोक'उत्तरपद-'अध्यात्म'आदिभ्यः । ७४ ।

'समान'शब्दपूर्वात् नाम्नः, 'लोक'उत्तरपदेभ्यः, 'अध्यात्म'आदिभ्यश्च 'भव' आदौ अर्थे इकण् प्रत्ययो भवति ।

समानग्रामे भवः कृतः वा सामानग्रामिकः । सामानदेशिकः । इह लोके भवः ऐहलौकिकः । पारलौकिकः । सार्वलौकिकः । आध्यात्मिकम् । आधिदैविकम् । सामानिकम् । ऐहिकम् । आमुष्मिकम् । इत्यादयः ॥ ७४ ॥

## वर्षा-कालेभ्यः । ७५ ।

'वर्षा'शब्दात् कालविशेषवाचिभ्यश्च 'भव'आदौ अर्थे इकण् प्रत्ययो भवति ।

वार्षिकः । कालेभ्यः—मासिकः । निशासहचरितम् अध्ययनम् निशा तत्र भवं नैशिकम् । कदम्बपुष्पसहचरित कालः कदम्बपुष्पम् तत्र देयम् कादम्बपुष्पिकम् ऋणम् । बहुवचनम् यथाकथंचित् कालवृत्तेः प्रापणार्थम् ।

" 'काल'शब्दात् च कालार्थात् अकालार्थात् च कालतः ।
अकालात् अपि[1] कालार्थात् कालेभ्य' इति यो विधिः ॥ "

[ शाक० ३।१।६६ ]

'वर्षा'ग्रहणम् ऋतु'अण्'बाधनार्थम् ॥ ७५ ॥

## शरदः श्राद्धे कर्मणि । ७६ ।

'शरत्'शब्दात कालवाचिनः 'भव'आदौ श्राद्धे कर्मणि इकण् प्रत्ययो भवति ।

शारदिकम् श्राद्धम् कर्म । श्राद्धे इति किम्? शारदं विरेचनम् ॥ ७६ ॥

## रोग-आतपे वा । ७७ ।

'शरत्'शब्दात् कालवाचिनः 'भव'आदौ अर्थे रोगे आतपे वा इकण् वा भवति ।

शारदिकः शारदः वा रोगः आतपो वा । रोग-आतपे इति किम्? शारदं दधि ॥ ७७ ॥

---

१. "सकालादपि"—शाक० । हेमचन्द्रस्तु श्रीमलयगिरिवत् एनमेव श्लोकम् निर्दिशति—६।३।८०।

### निशा-प्रदोष-हेमन्तात् । ७८ ।

एभ्यः 'भव'आदौ अर्थे इकण् वा भवति ।

नैशिकः, नैशः । प्रादोषिकः, प्रादोषः । हैमन्तिकः, हैमन्तः ॥ ७८ ॥

### श्वसः तट् च । ७९ ।

'श्वस्'शब्दात् कालवाचिनः 'भव'आदौ अर्थे इकण् प्रत्ययो वा भवति, तस्य च तट् आगमः ।

शौवस्तिकः पक्षे श्वस्त्यः ॥ ७९ ॥

### हेमन्तस्य अणि तो लुक् । ८० ।

'हेमन्त'शब्दस्य कालवाचिनः 'भव'आदौ अर्थे अणि परे तकारस्य लुग् वा भवति ।

हैमनम्, हैमन्तम् ॥ ८० ॥

### पुरः नट् । ८१ ।

'पुरा'शब्दात् कालवाचिनः 'भव'आदौ अर्थे नट् प्रत्ययो वा भवति ।

पुराणम् पक्षे पुरातनम् । टकारः ङ्यर्थः ॥ ८१ ॥

### पूर्वाह्ण-अपराह्णात् तनट् । ८२ ।

आभ्याम् 'भव'आदौ अर्थे तनट् प्रत्ययो वा भवति ।

पूर्वाह्णतनः । अपराह्णतनः । पक्षे पौर्वाह्णिकः । आपराह्णिकः ॥ ८२ ॥

### सायम्-चिरम्-प्राह्णे-प्रगे अव्ययात् । ८३ ।

पृथग्वचनात् 'वा' इति निवृत्तम् । एभ्यः 'भव'आदौ अर्थे 'तनट्' प्रत्ययो भवति ।

सायंतनम् । चिरंतनम् । प्राह्णेतनम् । प्रगेतनम् । अव्यय—दिवातनम् । दोषातनम् । 'सायम्'आदीनाम् मकारान्तानाम् 'अव्ययात्' इत्येव सिद्धे वचनात् 'साय' आदिशब्दानां प्रत्ययसन्नियोगे 'मकार'अन्तत्वं विज्ञायते ॥ ८३ ॥

### भ-ऋतु-'सन्ध्या'आदेः अण् । ८४ ।

'भ'वाचिनः, ऋतुवाचिनः, 'संध्या'आदिभ्यश्च कालवाचिभ्यः 'भव'आदौ अर्थे अण् प्रत्ययो भवति ।

पुष्ये जातः पौषः । तैषः । ऋतुः–ग्रैष्मः । शैशिरः । 'सन्ध्या'आदि–सान्ध्यः । सान्धिवेलः । सन्ध्या सन्धिवेला अमावास्या त्रयोदशी पञ्चदशी पौर्णमासी प्रतिपत् शश्वत् इति 'सन्ध्या'आदिः ॥ ८४ ॥

### संवत्सरात् पर्व-फले । ८५ ।

'संवत्सर'शब्दात् कालवाचिनः 'भव'आदौ फले पर्वणि च अर्थे अण् प्रत्ययो भवति ।

सांवत्सरम् पर्व फलं वा ॥ ८५ ॥

### प्रावृषः एण्यः । ८६ ।

'प्रावृष्'शब्दात् कालवाचिनः 'भव'आदौ अर्थे 'एण्य'प्रत्ययो भवति ।

प्रावृषेण्यः ॥ ८६ ॥

### चिर-परुत्-परारेः त्नः । ८७ ।

एभ्यः कालवाचिभ्यः 'भव'आदौ अर्थे 'त्न'प्रत्ययो भवति ।

चिरत्नम् । परुत्नम् । परारित्नम् ॥ ८७ ॥

### अन्त-अवस्-अधसः अमः । ८८ ।

एभ्यः 'भव'आदौ अर्थे 'अम'प्रत्ययो भवति ।

अन्तमः । अवमः । अधमः । 'अकार'आदित्वम[1] अवस्-अधसोः अन्त्यस्वरादि-लुगर्थम् ॥ ८८ ॥

### द्वीपात् अनुसमुद्रात् ण्यः । ८९ ।

समुद्रस्य समीपः यः द्वीपः तद्वाचिनः 'द्वीप'शब्दात् 'भव'आदौ अर्थे 'ण्य' प्रत्ययो भवति । कच्छादियण्-वुञोः अपवादः ।

द्वैप्यः । अनुसमुद्रात् इति किम् ? अनुनदिवाचिनः द्वैपम् द्वैपकम् अस्य हसितम् ॥ ८९ ॥

### पश्चात्-आदि-अन्त-अग्रात् इमः ॥ ९० ॥

एभ्यः 'भव'आदौ अर्थे 'इम'प्रत्ययो भवति ।

पश्चिमम् । आदिमम् । अन्तिमम् । अग्रिमम् ॥ ९० ॥

---

१. 'म'प्रत्ययेनैव सिद्धे 'अम'इति 'अकार'आदित्वम्–इति आशयः ।

## मध्यात् मः । ९१ ।

'मध्य'शब्दात् 'भव'आदौ अर्थे 'म'प्रत्ययो भवति ।

मध्यमम् ॥ ९१ ॥

## उत्कर्ष-अपकर्षयोः अः । ९२ ।

उत्कर्ष-अपकर्षयोः यत् मध्यम् तत्र प्रवर्तमानात् 'मध्य'शब्दात् 'भव'आदौ अर्थे 'अ'प्रत्ययो भवति ।

न अतिउत्कृष्टः न अतिअपकृष्टः मध्यपरिमाणः मध्यः वैयाकरणः । मध्याः गुणाः । मध्या स्त्री । अवस्था-अवस्थावतोः भेदविवक्षायाम् अवस्था प्रकृत्यर्थः अवस्थाता प्रत्ययार्थः इति मः प्राप्नोति इति वचनम् ॥ ९२ ॥

## युष्मद्-अस्मदोः वा अञ्-खञौ युष्माक-अस्माकम् एकस्मिन् तवक-ममकम् । ९३ ।

युष्मद्-अस्मद्भ्याम् 'भव'आदौ अर्थे अञ्-खञौ भवतः तद्योगे च यथासंख्यम् 'युष्माक'-'अस्माक'आदेशः, एकत्वे तु तयोः 'तवक'-'ममक'आदेशः ।

यौष्माकः । आस्माकः । यौष्माकीणः । आस्माकीनः । एकत्वे तावकः । मामकः । तावकीनः । मामकीनः । पक्षे युष्मदीयः । अस्मदीयः । त्वदीयः । मदीयः ॥ ९३ ॥

## 'स्थाम'-'अजिन'अन्तात् श्लुक् । ९४ ।

'स्थाम'अन्तात् 'अजिन'अन्तात् च परस्य 'भव'आदौ अर्थे उत्पन्नस्य प्रत्ययस्य श्लुक् भवति ।

अश्वत्थामा । सिंहाजिनः । वृकाजिनः ॥ ९४ ॥

॥ इति श्रीमलयगिरिविरचिते शब्दानुशासने तद्धिते दशमः पादः समाप्तः ॥

★

---

१ "-परिमाणो मध्यः" इति शाक० ३।१।८२।

२. "अश्वत्थाम्नो जातः भवः वा अश्वत्थामा" ।३।१।८३। शा० अ० ।

३. "सिंहाजिने भवः जातो वा सिंहाजिनः" ।६।३।९३। सिद्ध० बृ० ।

## तद्धिते एकादशः पादः

### आ कश्चितः अण् । १ ।

'कश्चित्'शब्दम् अभिव्याप्य ये अर्था वक्ष्यन्ते तेषु अण् प्रत्ययो भवति वा । अधिकारः परिभाषा विधिः वा अयम्, पक्षत्रयेऽपि अपवादविषयं परिहृत्य वर्तते ।

उपगोः अपत्यम् औपगवः । भिक्षाणाम् समूहः भैक्षम् । कषायेण रक्तम् काषायम् ॥ १ ॥

### 'राष्ट्र'आदेः पत्युः । २ ।

'राष्ट्र'आदिभ्यः परः यः 'पति'शब्दः तदन्तात् 'राष्ट्रपति'आदेः आकश्चितीये अर्थे अण् प्रत्ययो वा भवति । 'ञ्य'अपवादः ।

राष्ट्रपतेः इदम् राष्ट्रपतम् । धनपतेः अपत्यम् धानपतम् । राष्ट्र धन अश्व गन गण क्षेत्र कुशल गृह पशु सभा धन्वन् धान्य इति 'राष्ट्र'आदिः ॥ २ ॥

### 'पति'उत्तरपद-यम-आदित्य-दिति-अदितेः ञ्यः 'अण्'-अपवादे च अस्वे । ३ ।

'पति'शब्दउत्तरपदात् 'यम'आदिभ्यश्च आकश्चितीये अर्थे, स्ववर्जिते यः 'अण्'-अपवादः तद्विषये च ञ्यः प्रत्ययो भवति ।

बृहस्पतिः देवता अस्य बार्हस्पत्यम् । एवम् याम्यम् । आदित्य—आदित्यम् । दिति—दैत्यम् । अदिति— आदित्यम् । बार्हस्पत्यः । प्राजापत्यम् । याम्यम् । आदित्यः । अत्र 'अतः' [ ] इति इञ् न भवति । अण्ग्रहणं किम् ? वास्तोष्पत्यभार्यः । असति 'अण्'ग्रहणे 'स्व'अपवादविषयेऽपि अस्य समावेशः स्यात् ततः 'न तद्धितः स्वरवृद्धिहेतुः' [ ] इति पुंभावनिषेधात् आकारः अपि श्रूयते—वास्तोष्पत्याभार्यः इति । अस्वे इति किम् ? उष्ट्रपतिः नाम वाहनम् तस्य स्वम् औष्ट्रपतम्, 'वाहनात्' [ ] इति अञ् ॥ ३ ॥

### बहिषः टीकण् च । ४ ।

'बहिष्'शब्दात् आकश्चितीये अर्थे टीकण् ञ्यश्च प्रत्ययो भवति ।

बाहीकः, बाह्यः ॥ ४ ॥

### कलि-अग्नेः एयण् । ५ ।

आभ्याम् आकचितीये अर्थे, 'अण्'अपवादे च अस्ये एयण् प्रत्ययो भवति।

कलौ भवम् कालेयम्। कलिः देवता अस्य कालेयम्। आग्नेयम्। कलेः आगतम् कालेयम्। आग्नेयम् ॥ ५ ॥

## पृथिव्या ञ-अञौ। ६।

'पृथिवी'शब्दात् आकचितीये अर्थे, 'अण्'अपवादे च अस्ये 'ञ-अञ्'प्रत्ययौ भवतः।

पृथिव्यां भवः पार्थिवः। पार्थिवा। पार्थिवी ॥ ६ ॥

## 'उत्स'आदेः अञ्। ७।

'उत्स'आदेः आकचितीये अर्थे 'अण्'अपवादविषये च अस्ये अञ् प्रत्ययो भवति।

उत्सस्य इदम् औत्सम। औदपानम्। 'बष्कय'शब्दस्य उत्तरेण [ अष्टमेन सूत्रेण ] समासे प्रतिषेधात् इह 'उत्स'आदिअन्तस्य अपि प्रत्ययः। उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकण वृषदंश भल्लकीय रथन्तर मध्यंदिन बृहत् महत् महिमन् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण इति 'उत्स'आदिः ॥ ७ ॥

## बष्कयात् असमासे। ८।

'बष्कय'शब्दात् आकचितीये अर्थे, 'अण्'अपवादे च अस्ये असमासे अञ् प्रत्ययो भवति।

बष्कयस्य अपत्यम् बाष्कयः। असमासे इति किम्? सुबष्कयस्य अपत्यम् सौबष्कयिः ॥ ८ ॥

## देवात् यञ् च। ९।

'देव'शब्दात् आकचितीये अर्थे 'अण्'अपवादे च यञ्-अञौ वा भवतः।

दैव्यम्। दैवम्। दैवी वाक् ॥ ९ ॥

## स्थाम्नः अत्। १०।

'स्थामन्'शब्दअन्तात् आकचितीये अर्थे अकारप्रत्ययो भवति।

अश्वत्थाम्नः अपत्यम् अश्वत्थामः ॥ १० ॥

---

१. 'गोधेनुभ्यः आगतं गौधेनवम्' –२।४।१०। शा० अ०।

## लोम्नः अपत्येषु । ११ ।

'लोमन्'शब्दात् अपत्येषु बहुषु अत् प्रत्ययो भवति ।

उडुलोम्नः अपत्यानि औडुलोमाः । अपत्येषु इति बहुवचनम् किम् ? औडुलोमिः । औडुलोमी ॥ ११ ॥

## द्विगोः अलुचः अनपत्ये 'य'-'स्वर'आदेः ़्लुक् । १२ ।

द्विगोः 'अलुग्'अन्तात् आकचितीये अर्थे अपत्यवर्जिते विहितस्य 'यकार'आदेः 'स्वर'आदेश्च प्रत्ययस्य ़्लुक् भवति ।

द्वयोः रथयोः, द्विरथ्याः वा अयम् द्विरथः वोढा । पञ्चसु कपालेषु, पञ्चकपाल्यां वा संस्कृतम् पञ्चकपालम् । द्वयोः अनुयोगयोः, द्व्यनुयोगीं वा अध्येता द्व्यनुयोगः । द्विगोः इति किम् ? कैलासाः । अलुचः इति किम् ? पञ्चसु कपालेषु संस्कृतम् पञ्चकपालम् तस्य इदम् पाञ्चकपालम् । 'य'-'स्वर'आदेः इति किम् ? पञ्चगर्गमयम् ॥ १२ ॥

## सेः निवासात् अस्य । १३ ।

सेः प्रथमान्तात् निवासवाचिनः 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । निवसन्ति अस्मिन् इति निवासः ।

स्रुघ्नः निवासः अस्य स्रौघ्नः । राष्ट्रियः ॥ १३ ॥

## आभिजनात् । १४ ।

अभिजनाः पूर्वबान्धवाः तत्संबन्धी यः निवासः तद्वाचिनः प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति ।

स्रुघ्नः अस्य आभिजनः निवासः स्रौघ्नः । राष्ट्रियः ॥ १४ ॥

## तूदी-वर्मतीभ्याम् एयण् । १५ ।

आभ्याम् आभिजननिवासवाचिभ्याम् 'अस्य' इति षष्ठ्यर्थे एयण् प्रत्ययो भवति। तौदेयः । वार्मतेयः ॥ १५ ॥

## 'सण्डिक'-'सिन्धु'आदिभ्याम् ञ्य-अणौ । १६ ।

'सण्डिक'आदिभ्यः 'सिन्धु'आदिभ्यश्च आभिजननिवासवाचिभ्यः 'अस्य' इति षष्ठ्यर्थे यथासंख्यम् 'ञ्य'-'अण्'प्रत्ययौ भवतः ।

साण्डिक्यः[1] । कौचवार्यः । सण्डिक कूचवार सर्वसेन सर्वकेश चणक शङ्ख सोध

१. ''शाण्डिक्यः'' इति हैमम्-६।३।१५। काशिका-४।३।९२।

इति 'सण्डिक' आदिः ।

सैन्धवः । वार्णवः ।

सिन्धु वर्णु मधुमत् कम्बोज शल्व गन्धार केस्मीर[1] किष्किन्ध गदिक उरण्ण शरत् ग्रामणी इति 'सिन्धु'आदिः ॥ १६ ॥

## अत्राजीवे अद्रेः ईयः । १७ ।

अद्रिः यः आभिजनः निवासः तद्वाचिनः प्रथमान्तात् 'अस्य' इति षष्ठ्यर्थे अत्राऽऽजीवे 'ईय'प्रत्ययो भवति ।

हृद्गोलः पर्वतः आभिजनः निवासः अस्य हृद्गोलीयः अत्राजीवः । अद्रेः इति किम् ? सांकाश्यकः अत्राजीवः ॥ १७ ॥

## शलातुरात् इयण्[2] । १८ ।

अस्मात् आभिजननिवासवाचिनः 'अस्य' इति षष्ठ्यर्थे ईयण् प्रत्ययो भवति ।

शालातुरीयः ॥ १८ ॥

## अमः भजति । १९ ।

'अम्'अन्तात् 'भजति' अर्थे यथाविहितं प्रत्ययो भवति ।

स्रुघ्नं भजति स्रौघ्नः । राष्ट्रियः ॥ १९ ॥

## वासुदेव-अर्जुनात् वुच् । २० ।

आभ्याम् 'अम्'अन्ताभ्याम् 'भजति' अर्थे वुच् प्रत्ययो भवति ।

वासुदेवकः । अर्जुनकः । वासुदेवीं भजति वासुदेवकः ॥ २० ॥

## महाराजात् इकण् । २१ ।

अस्मात् 'अम्'अन्तात् 'भजति'अर्थे इकण् प्रत्ययो भवनि ।

माहाराजिकः ॥ २१ ॥

## अचित्तात् अदेश-कालात् । २२ ।

देश-कालवर्जितम् यद् अचित्तम् तद्वाचिनः 'अम्'अन्तात् 'भजति'अर्थे इकण् प्रत्ययो भवति ।

मौदकिकः । अदेश-कालात् इति किम् ? स्रौघ्नः । पूर्वाह्णेतनः ॥ २२ ॥

## गोत्र-क्षत्रियेभ्यः प्रायः वुञ् । २३ ।

---

१. "कश्मीर" इति हैमम्- ६।३।२१६। काशिका-४।३।९३। २. "शालातुरीयः पाणिनिः" -हैमम्- ६।३।२१७। "शालातुरीयः" इति काशिका- ४।३।९४।

गोत्रवाचिभ्यः क्षत्रियवाचिभ्यः 'अम्'अन्तेभ्यः 'भजति'अर्थे प्रायः वुञ् भवति।

ग्लुचुकायनिं भजति ग्लौचुकायनकः। गार्गकः। गार्ग्यायणकः।

क्षत्रिय–नाकुलकः। साहदेवकः। प्रायः इति किम्? पाणिनिं भजति पाणिनीयः॥ २३॥

## सरूपात् द्रेः रा व सर्वम्। २४।

'राष्ट्र-राज०' [ ] इत्यादिना यः द्रिः अभिधास्यते तदन्तस्य 'अम्'अन्तस्य 'भजति'अर्थे राष्ट्रवत् सर्वम्–प्रकृतिः प्रत्ययश्च भवति। राष्ट्रवाचिनी या प्रकृतिः 'वृजि' इत्यादिका ततः प्रत्ययः 'वृजि-मद्राद् देशात् कः' [तद्धिते दशमपादे सूत्र २३] इत्यादिना विहितः तद् उभयम् द्रिसंज्ञान्तस्य अस्मिन् विषये भवति इत्यर्थः।

वार्ज्यम् वार्ज्यौ वृजीन् वा भजति वृजिकः। पाण्ड्यम्, पाण्डकः। आङ्गकः। 'बहुविषयेभ्यः' [तद्धिते दशमे पादे सू० २९] इति वुञ्। कौरवकः। 'कुरु-युगन्धरात् वा' [तद्धिते दशमे पादे सू० ३२] इति वा वुञ्। सरूपात् इति किम्? पुरुः नाम राजा अनुखण्डो जनपदः इति सारूप्यं नास्ति। द्रेः इति किम्? पञ्चालान भजति पाञ्चालः। 'सर्व'-ग्रहणम् प्रकृतिअतिदेशार्थम्॥ २४॥

## अधिकृत्य ग्रन्थे। २५।

'अम्'अन्तात् अधिकृत्य कृते ग्रन्थे यथाविहितं प्रत्ययो भवति।

सुभद्राम् अधिकृत्य कृतः ग्रन्थः सौभद्रः। ग्रन्थे इति किम्? सुभद्राम् अधिकृत्य कृतः प्रासादः। भुवनसुन्दरीम् अधिकृत्य कृता कथा भुवनसुन्दरी। बलिबन्धनम् सीताहरणम् इति उपचारात् ग्रन्थे ताच्छब्द्यम्॥ २५॥

## ज्योतिषम्। २६।

'ज्योतिः'शब्दात् 'अम्'अन्तात् अधिकृत्य कृते ग्रन्थे अर्थे 'अण्'प्रत्ययः औत्वाभावश्च निपात्यते।

ज्योतींषि अधिकृत्य कृतः ग्रन्थः ज्योतिषम्॥ २६॥

## द्वन्द्वात् ईयः प्रायः। २७।

द्वन्द्वात् समासात् 'अम्'अन्तात् अधिकृत्य कृते ग्रन्थे अर्थे प्रायः 'ईय'प्रत्ययो भवति।

वाक्य-पदीयम्। द्रव्य-पर्यायीयम्। प्रायः इति किम्? दैवा-ऽसुरम्। राक्षो-ऽसुरम्[1]।

---

१. राक्षोऽसुरम्–काशिका– ४।३।१२५। हैम– ६।३।२०१। अनेन उदाहरणेन रक्षांसि–राक्षसाः असुराश्च भिन्नाः इति प्रतीयते।

गौण-मुख्यम् ॥ २७ ॥

## 'इन्द्रजनन'आदिभ्यः । २८ ।

एभ्यः 'अम्'अन्तेभ्यः अधिकृत्य कृते ग्रन्थे अर्थे 'ईय'प्रत्ययो भवति ।

इन्द्रस्य जननम् इन्द्रजननम् तद् अधिकृत्य कृतम् काव्यम् इन्द्रजननीयम् । सीताहरणीयम् । 'इन्द्रजनन'आदयः प्रयोगगम्याः ॥ २८ ॥

## टः । २९ ।

टः इति तृतीयान्तात् कृते ग्रन्थे अर्थे यथाविहितं प्रत्ययो भवति ।

**दैववाचकम् नन्द्यध्ययनम् । सिद्धसेनीयः स्तवः ॥२९ ॥**

## नाम्नि । ३० ।

'ग्रन्थे' इति निवृत्तम् । टः इति तृतीयान्तात् कृते अर्थे यथाविहितं प्रत्ययो भवति, प्रत्ययान्तं चेत् कस्यचित् नाम स्यात् ।

मक्षिकाभिः कृतम् माक्षिकम्, भ्रामरम् मधु । नाम्नि इति किम् ? मक्षिकाभिः कृतम् शकृत् ॥ ३० ॥

## 'कुलाल'आदेः वुञ् । ३१ ।

एभ्यः तृतीयान्तेभ्यः कृते अर्थे वुञ् प्रत्ययो भवति नाम्नि ।

कुलालेन कृतम् घट-घटी-शराव-उदञ्चनादि भाण्डम् एव कौलालकम् न अन्यत् । सूर्प-पिटक-पिटलिका-पञ्छिकादि वारुडकम्[1] न अन्यत् ॥ ३१ ॥

## छन्दस्य-उरस्य-औरस-सर्वचर्मीण-सार्वचर्मीणाः । ३२ ।

एते कृते अर्थे नाम्नि 'य'आदिप्रत्ययान्ता निपात्यन्ते ।

छन्दसा इच्छया कृतः ग्रन्थः न तु प्रवचनेन 'गायत्री'आदिना वा छन्दस्यः । उरसा निर्मितः उरस्यः, एवम् औरसः । अत्र य-अणौ । सर्वचर्मणा कृतः सर्वचर्मीणः । सार्वचर्मीणः । अत्र ईन-ईनञौ ॥ ३२ ॥

## उपज्ञाते । ३३ ।

टः इति तृतीयान्तात् उपज्ञाते अर्थे यथाविहितं प्रत्ययो भवति ।

पाणिनिना उपज्ञातम् पाणिनीयम् ॥ ३३ ॥

---

१. "वारुडकम्" हैम– ६।३।१९४।

## प्रोक्ते । ३४ ।

प्रकर्षेण व्याख्यातम् अधीतम् वा प्रोक्तम् न तु कृतम्, कृते पूर्वेण एव सिद्धत्वात्। टः इति तृतीयान्तात् प्रोक्ते अर्थे यथाविहितं प्रत्ययो भवति ।

भद्रबाहुणा प्रोक्तानि भाद्रबाहवाणि उत्तराध्ययनानि । याज्ञवल्क्यानि ॥ ३४ ॥

## 'मौद'आदिभ्यः अण् । ३५ ।

एभ्यः तृतीयान्तेभ्यः प्रोक्ते अर्थे अण् प्रत्ययो भवति ।

मौदेन प्रोक्तेन अध्येतारः मौदाः । पैप्पलादाः । 'मौद'आदयः प्रयोगगम्याः । 'अण्'अपवादबाधनार्थः योगः ॥ ३५ ॥

## 'कठ'आदिभ्यः वेदे ग्लुक् । ३६ ।

एभ्यः प्रोक्ते यः प्रत्ययः तस्य ग्लुक् भवति, स चेत् प्रोक्ते वेदे स्यात् ।

कठेन प्रोक्तस्य वेदस्य बोद्धारः अध्येतारो वा कठाः । चरकाः । वेदे इति किम्? चरकेण प्रोक्ताः चारकाः श्लोकाः । 'कठ'आदयः प्रयोगगम्याः ॥ ३६ ॥

## वरतन्तु-तित्तिरि-खण्डिक-उख्यात् ईयण् । ३७ ।

एभ्यः तृतीयान्तेभ्यः प्रोक्ते वेदे अर्थे ईयण् प्रत्ययो भवति ।

वरतन्तुना प्रोक्तस्य बोद्धारः अध्येतारो वा वारतन्तवीयाः । तैत्तिरीयाः । खाण्डिकीयाः । औखीयाः । वेदे इति किम्? तित्तिरिणा प्रोक्ताः तैत्तिराः श्लोकाः ॥ ३७ ॥

## छगलिनः एयिनण् । ३८ ।

अस्मात् तृतीयान्तात् प्रोक्ते वेदे एयिनण् प्रत्ययो भवति ।

छगलिना प्रोक्तस्य वेदस्य बोद्धारः अध्येतारो वा छागलेयिनः ॥ ३८ ॥

## 'शौनक'आदिभ्यः णिन् । ३९ ।

एभ्यः तृतीयान्तेभ्यः प्रोक्ते वेदे अर्थे णिन् प्रत्ययो भवति ।

शौनकेन प्रोक्तस्य वेदस्य बोद्धारः अध्येतारो वा शौनकिनः । शार्ङ्गरविणः । वेदे इति किम्? शौनकीया शिक्षा । शौनक शार्ङ्गरव वाजसनेय शापेय स्कन्ध स्कम्भ रज्जुभार रज्जुकण्ठ कठ शाठ पुरुषांसक हरिद्रु उलक उलप कमल आरण वाशायन इत्यादि ॥३९॥

## पुराणे कल्पे । ४० ।

टः इति तृतीयान्तात् प्रोक्ते अर्थे णिन् प्रत्ययो भवति, स चेत् प्रोक्तः पुराणः कल्पः स्यात् ।

पिङ्गेन प्रोक्तः कल्पः पुराणः पैङ्गी कल्पः । पुराणे इति किम् ? आश्मरथः कल्पः— अश्मरथेन हि प्रोक्तः कल्पः उत्तरकल्पेभ्यः आरातीयः श्रूयते ॥ ४० ॥

## काश्यप-कौशिकात् वेदवत् च । ४१ ।

आभ्यां प्रोक्ते पुराणे कल्पे अर्थे णिन् प्रत्ययो भवति, वेदवत् च अस्मिन् कार्यम् ।

काश्यपेन प्रोक्तस्य कल्पस्य पुराणस्य बोद्धारः अध्येतारो वा काश्यपिनः । कौशिकिनः । काश्यपिनाम् धर्मः आम्नायो वा काश्यपकम् । कौशिककम् ॥ ४१ ॥

## शिलालि-पाराशर्यात् नट-भिक्षुसूत्रे । ४२ ।

आभ्याम् तृतीयान्ताभ्याम् यथासंख्यम् नटसूत्रे भिक्षुसूत्रे च प्रोक्ते णिन् प्रत्ययो भवति, वेदवत् च अस्मिन् कार्यम् ।

शिलालिना प्रोक्तस्य नटसूत्रस्य बोद्धारः अध्येतारो वा शैलालिनः नटाः । पाराशरिणः भिक्षवः । शैलालिनाम् धर्मः आम्नायो वा शैलालकम् । पाराशरकम् । नट-भिक्षुसूत्रे इति किम् ? शैलालम् । पाराशरम् ॥ ४२ ॥

## कृशाश्व-कापिलेय-कर्मन्दात् इन् । ४३ ।

कृशाश्व-कापिलेयाभ्याम् तृतीयान्ताभ्याम् नटसूत्रे कर्मन्दात् भिक्षुसूत्रे प्रोक्ते इन् प्रत्ययो भवति, वेदवत् च अस्मिन् कार्यम् ।

कृशाश्विनः, कापिलेयिनः नटाः । कर्मन्दिनः भिक्षवः । कृशाश्विनाम् धर्मः आम्नायः वा कार्शाश्वकम् । कापिलेयकम् । कार्मन्दकम् ॥ ४३ ॥

## एकदिशि । ४४ ।

तृतीयान्तात् एकदिशि यथाविहितं प्रत्ययो भवति । एका समाना साधारणा दिक् यस्य स एकदिक् ।

सुदाम्ना पर्वतेन एकदिक् सौदामिनी विद्युत्—सुदामा पर्वतः यस्यां दिशि तस्यामेव विद्युत् तेन एकदिग् उच्यते । एवम् हैमवती ॥ ४४ ॥

## तसू । ४५ ।

तृतीयान्तात् एकदिशि तस् प्रत्ययो भवति ।

सुदामतः । हिमवत्तः । प्रत्ययान्तरार्थम् वचनम् ॥ ४५ ॥

### यः च उरसः । ४६ ।

'उरस्'शब्दात् तृतीयान्तात् एकदिशि तस् यश्च प्रत्ययो भवति ।

उरसा एक दिक् उरस्यः, उरस्तः ॥ ४६ ॥

### ङसेः आगतः । ४७ ।

ङसेः पञ्चम्यन्तात् आगते अर्थे यथाविहितं प्रत्ययो भवति ।

स्रुघ्नात् आगतः स्रौघ्नः । राष्ट्रियः । स्रुघ्नात् आगच्छन् वृक्षमूलात् आगतः इत्यादौ 'वृक्षमूल'आदेः अनभिधानात् न भवति ॥ ४७ ॥

### 'शुण्डिक'आदेः अण् । ४८ ।

एभ्यः पञ्चम्यन्तेभ्यः आगते अर्थे अण् प्रत्ययो भवति ।

शुण्डिकात् आगतम् शौण्डिकम् । औदपानम् । शुण्डिक उदपान कृपण पर्ण तृण तूर्ण स्थण्डिल उपल उदक भूमि पिप्पल इति शुण्डिकआदिः ॥ ४८ ॥

### विद्या-योनिसंबन्धात् वुञ् । ४९ ।

विद्याकृतः योनिकृतः वा संबन्धः तद्वाचिनः पञ्चम्यन्तात् आगते अर्थे वुञ् प्रत्ययो भवति ।

आचार्यात् आगतम् आचार्यकम् । मातुलकम् ॥ ४९ ॥

### पित्र्यं वा । ५० ।

'पितृ'शब्दात् योनिसंबन्धवाचिनः पञ्चम्यन्तात् आगते अर्थे 'य'प्रत्ययो वा निपात्यते ।

पित्र्यम् पक्षे पैतृकम् ॥ ५० ॥

### ऋतः इकण् । ५१ ।

'ऋकार'अन्तात् विद्या-योनिसंबन्धवाचिनः पञ्चम्यन्तात् आगते अर्थे इकण् प्रत्ययो भवति ।

होतुः आगतम् हौतृकम् ॥ ५१ ॥

### आयस्थानात् । ५२ ।

स्वामिना ग्राह्यः भागः आयः तस्य स्थानम्– उत्पत्तिदेशः, तद्वाचिनः पञ्चम्यन्तात् आगते अर्थे इकण् प्रत्ययो भवति ।

